# प्रसन्नराघवम् ।

सटीकम्.

मूल्यं सार्धं रूपकद्वयम्.

# PRASANNA-RAGHAVA.

BY

## JAYADEVA

WITH

THE SANSKRIT COMMENTARY OF VYANKETA-
CHARYA UPADHYE, SHASTRY
BARODA COLLEGE.

AND

ENGLISH NOTES, CRITICAL AND EXPLANATORY

BY

SHIVARAMA RAOJI KHOPAKAR.



BOMBAY.

1894

All rights reserved.

*Price* Rs. 2-8-0.

॥ श्रीः ॥

# प्रसन्नराघवम्।

महाकविजयदेवविरचितम्

---

बडोदरनगरीस्थ-राजकीय-प्रधानाङ्ग्लशालासंस्कृताध्यापक

वेङ्कटाचार्यविरचितगूढार्थप्रकाशिकया

समुद्भासितम्

खोपकरोपाङ्क-रावजीसूनु-शिवरामनिर्मितया

आङ्ग्लटिप्पण्या च समेतम्।

तदेतत्

मुम्बापुर्यां

'गणपतकृष्णाजी' 'निर्णयसागर' इत्येतयो-

र्मुद्रणयन्त्रालययोर्मुद्रितम्।

शाके १८१६ वत्सरे.

---

मूल्यं सार्धरूपकद्वयम्।

श्रीमन्नृहरयेनमः।

## ॥ प्रस्तावना ॥

उद्भासितं नखतरण्यरुणांशुजालैः
संसक्तसन्मधुपवृन्दविमोक्षहेतु ॥
लक्ष्म्यङ्कसंस्थिति सदा परमस्य पुंसः
पादारविंदममलं हृदि मे चकास्तु ॥ १ ॥

इह खलु विद्वद्भ्य आरभ्याऽऽबालेभ्यः सर्वैरैकान्तिकत्वेनेप्सितस्य सुखस्य नानाविधेषु साधनेषु काव्यमेव सर्वोत्कर्षेण वरीवर्ति। यत इदं सहृदयानां विदुषामिव सुकुमारबुद्धीनामपि रसास्वादनकाले परमानन्दसन्दोहं जनयति। पश्चाच्च रामादिवद्वर्तितव्यं न रावणादिवदित्युपदेशमपि श्रोतॄणां मनस्ययत्नतो बद्धमूलं करोति। अथ लक्षणज्ञानं विना लक्ष्यज्ञानमसंभर्वाति काव्यलक्षणमुच्यते। तच्च यद्यपि पूर्वेषां महामान्यानामालंकारिकाणां ग्रन्थेषु पृथक् पृथक् परस्परं कस्मिंश्चिदंशे विरोधि च दृश्यते, तथापि दर्पणकारोक्तं "वाक्यं रसात्मकं काव्यम्" इति लघुलक्षणमेव सादरणीयः॥ रसः शृङ्गारादिरेवात्मा साररूपतया जीवनाधायको यस्य वाक्यस्य तद्वाक्यं काव्यमिति तस्यार्थः। एतादृशकाव्यस्योत्पत्तौ पूर्वजन्माचरितसुकृतसन्दोहपरिपाकरूपा प्रतिभैव निदानम्॥ अतएव "प्रतिभा कारणं तस्य व्युत्पत्तिस्तु विभूषणम्" इत्यभियुक्तोक्तिः संगच्छते। प्रतिभा नाम सत्हृदयहृदयानन्ददायिनी नवनवोन्मेषशालिनी बुद्धिः॥ एतया च स्वाभाविक्या प्रतिभयोपेतेन कविधौरेयेण विरचितं काव्यं भूतान्प्यर्थान्वर्तमानानिव करोति, दूरस्थानपि विषयानन्तिकस्थानिव विदधाति, अतीन्द्रियाण्यपि वस्तूनीन्द्रियसन्निकृष्टानीवोपजनयति, किं बहुना नास्ति स विषयो यत्र महाकवीनां वाचो न प्रसरन्ति। तच्च काव्यं दृश्यश्रव्यभेदेन द्विविधम्। दृश्यं नाम नटकर्तृकरामाद्यवस्थानुकरणरूपो योऽभिनयस्तद्युतं, यथोत्तरचरितादि। तद्भिन्नं श्रव्यं, यथा रघुवंशादि। दृश्यकाव्यस्य "नाटकमथ प्रकरणं भाण-व्यायोग-समवकार-डिमाः। ईहामृगाङ्क-वीथ्य-प्रहसनमिति रूपकाणि दश" इति दर्पणकारोक्ता दश प्रकाराः। तेषु नाटकाख्याद्यप्रकारस्य लक्षणन्तु "नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धि-

समन्वितं" इत्यादि प्रथमाङ्कटीकायां १४ पृष्ठे प्रतिपादितम्। श्रीजयदेवकविप्रणीतं प्रसन्नराघवाख्यं काव्यं नाटकलक्षणालङ्कृतत्वान्नाटकमिति लोके व्यपदिश्यते। अत्र सीतास्वयंवरमारभ्य दशाननं निहत्य पुनरयोध्याऽऽगमनपर्यन्तं श्रीरामचरितं कविना सम्यक्त्वेनोपनिबद्धम्। अस्मिंश्च प्रख्यातवंशत्वादिगुणविशिष्टः श्रीरामचन्द्रो नायकः, वीररसोऽङ्गी, शृङ्गारकरुणादयस्त्वङ्गभूताः।

यदाऽतीते नभोमास्येतन्नाटकं मुम्बापुरगतयुनिव्हर्सिटीनामकसर्वविद्योपचयविचारमुख्यस्थानस्थव्यवस्थापैकस्वेच्छावचेषु विषयेष्वाङ्गलभौमभाषया प्रतिवर्षं परीक्ष्यमाणानां छात्रगणानां संस्कृतभाषाप्रावीण्याभिव्यक्तये सन्निवेशितमिति श्रुतिविषयमगात्। तदैव पूर्वैर्मनीषिभिरादृतानां प्रायशः सर्वेषां गीर्वाणभाषोपनिबद्धानां ग्रन्थशाखिना स्वस्वोचितव्याख्यावल्लीपरिष्कृतत्वेऽपि प्रबन्धोऽयमद्यापि तया विहीन इति स्वनिर्मितया तया तत्सनाथीकरणं विद्वन्मनोरञ्जनायेव काठिन्यनिवारणद्वारा विद्यार्थिमण्डलस्याप्युपयोगाय भविष्यतीति मनसिकृत्य मूलमात्रस्य मुद्रितं पुस्तकत्रयं समासादितं तद्यथा—

१. काश्यां मेडिकल् हाल् यन्त्रालये मुद्रितम्.
२. कलिकाताराजधान्यां मुद्रितम्.
३. मुम्बापुर्यां निर्णयसागरयन्त्रालये मुद्रितम्.

एतन्मध्येऽग्रिमपुस्तकद्वयं काश्यां मुद्रितपुस्तकाऽनुरोधेनैव मुद्रितमित्यनुमीयते। यतः काशीमुद्रितपुस्तके यदशुद्धं तदेव प्रायः इतरयोरप्यासीत्। पुस्तकान्तराभावात्तत्रस्थाऽशुद्धपाठेभ्यः शुद्धान् पाठान् कृच्छ्रेणानुमाय गीर्वाणभाषयाऽस्य विस्तृतां व्याख्यां विधातुं प्रावर्तिषि। व्याख्याविषये **मुधोळकरोपाह्वकूर्माचार्यात्मजश्रीनिवासाचार्येण** ममातीव साहाय्यं कृतम्। व्याख्यायाः समाप्तौ च "आपरितोषाद्विदुषां" इति न्यायेन विश्वविख्यातकीर्तये **भाण्डारकरोपाह्वरामकृष्णविदुषे** तामदर्शयम्। तेन च विपश्चिद्वरेण स्वीयमहार्घवेलाव्ययेन तस्याः कांश्चिदंशानवलोक्य समीचीनेयमतोऽवश्यं मुद्रणीयेत्यवादि। अनेनास्य महाऽऽत्मनः प्रोत्साहनेन स्वनिर्मितयैतया व्याख्यया समुद्भासितस्यास्य ग्रन्थस्य मुद्रणाय संवृत्तो मे निश्चयः।

किन्तु अयं ग्रन्थः आङ्ग्लटिप्पणीसहितश्चेत् इदानीन्तनानां छात्रजनानामतीवोपयोगी भवेदिति पश्चाद्विचार्य तदर्थं **रा० शिवराम रावजी खोपकर** तथा **प्रोफेसर भास्करराव रामचंद्र आर्ते एम्. ए.** इत्युभावप्यभ्यर्थितौ।

यथाक्रमं च ता विषमपदानामाङ्ग्लभाषया संक्षेपतो व्याख्यानं तस्य परीक्षणञ्च प्रीत्या प्रत्यशृणुताम् । अत्रान्तरे **कालगांवकरेत्युपाह्वलक्ष्मणाचार्यस्य** सकाशाद्धस्तलिखितमेकं पुस्तकमलम्भि । दिष्टया यदालोच्य मया शुद्धपाठाः प्रायशो निरणायिषत ।

पूर्वोक्तैर्महाशयैरुक्तविधया यतः साहाय्यं सम्पादितमतो वहामि तेषामुपकारभरान् । एतत्कवेः कालादिनिर्णयविषये प्रमाणादिकं यदस्माभिरुपलब्धं तदाङ्ग्लप्रस्तावनायां लेखितमतस्तज्जिज्ञासुभिस्तत्रैव द्रष्टव्यम् । ग्रन्थोऽयं पूर्वं निर्दिष्टेन येनोद्देशेन व्याख्यासंवलितो मुद्रितः सोंऽशेनाप्यस्मात्सेत्स्यति चेन्मत्कृतमहत्प्रयासं सफलं मंस्य इत्यलं पल्लवितेन ।

उपाध्यायोपाह्वनृसिंहाचार्यात्मजो

वेङ्कटाचार्यः ।

# PREFACE.



Before we proceed to write the introduction, it is necessary to state the circumstances under which the publication of this work in its present form was brought about. In the month of May 1893 a friend of Mr. Vyankatâchârya Shâstrî requested him to publish a correct edition of this drama, as the then existing editions of this work were incorrect to an absurdity. This the Shâstrî promised to do and executed the task, without the aid of MSS., depending for correct readings upon his own resources, in a manner which reflects the highest credit upon him, as all the corrections made by him were subsequently found, without a single exception, to be corroborated by a MS. which later on, was lent to him by a friend of his from Satârâ. To this he proposed to subjoin a commentary of his own, for numerous as are the commentaries on most of the Sanskrit works extant, this and a few other portions of our Sanskrit dramatic literature have thitherto remained unexplored, partly because they belonged to a later period, and partly because they were not of such intrinsic value as to invite commentators At the same time it is to be regretted that the genuine work of the Shâstrî was too far advanced when he received the MS. to allow him to profit by the insertion of the variants, he came across in this MS. I have, therefore, mentioned such important variants in my notes as are worth bringing to the notice of the readers.

By the end of October last he had the satisfaction to witness the completion of his work, and he, therefore, left for Bombay to negotiate with the manager of a press for the publication of it. Accordingly he struck the bargain and paid the earnest money when he came to know that the professors of the Fergusson College had been engaged in bringing forth an edition of the same drama. This threatened a wretched fate to his commentary which is the sort of work prized highly by the learned few, but not

liberally patronized by the generality of the students who attach greater importance to the English annotations of a Sanskṛit, work owing to their greater practical usefulness, and perhaps to the better facilities they afford to its study with a view to pass the University examination. Naturally enough the commentator was on the point of giving up the work in despair when he happened to request me to write English notes on the work he was going to publish. Not perceiving the extent of such a responsibility, I promptly undertook to cooperate with him, not with a view to supplant the Poona edition of the same work but with a view to supplement the invaluable labours of the commentator.

Before we proceed to comment upon the style, the poetic genius and the dramatic skill of Jayadeva, the author of Prasannarâghava, a few remarks, upon the difficulty of rendering Sanskrit passages into foreign language, will not be deemed out of place. The Anglo-Sanskrit scholars have owing to the unavoidable difficulty of finding suitable English phrases corresponding to the Sanskrit expressions, have given currency to a certain phraseology which to hypercritical ears may sound as inelegant. Under these circumstances it is rarely possible to combine readableness with faithfulness—qualities which on that account are oftenest quite apart We have, therefore, in the sequel endeavoured to bring out the magnitude and scope of the author's meaning in our translations and notes, without much attention to style and idiomatic expressions

# INTRODUCTION.



The plot of this drama being principally based upon episodes from the Râmâyaṇa, has an excellent poetic back-ground which delights the Hindu fancy by awakening a train of charming and sacred associations. The Poet seems to be greatly indebted, for the excellence or otherwise of this drama, to three of his predecessors—Murâri, Bhavabhûti and Râjashekhara—who have dramatized the incidents chosen by our author for the present work. He has adopted many sentiments, nay, he has borrowed verses and sentences whole and entire from the works of these authors and put them in as his own, as will be seen from some of the extracts given below from their work, justifying the above remark

Sources.

| *Anargha Râghava* | *Prasanna Râghava* |
| --- | --- |
| यदि क्षुण्णं पूर्वैरिति…रामस्य चरितम् ।<br>गुणैरेतावद्भिर्जगति पुनरन्यो जयति कः ॥<br>स्वमात्मानं तत्तद्गुणगरिमगम्भीरमधुर—<br>स्फुरद्वाग्ब्रह्माणः कथमुपकरिष्यन्ति कवयः॥९॥ | Act I. cf P. 18. verse 12. |
| रघूद्वहेन चकृषे नारायणीयं धनुः । सन्धायाथ<br>शरश्च भार्गवगतिच्छेदादमोघीकृतः॥५७॥ | Act IV. cf. p. 151. verse 43. |
| बालस्वभावसुलभेन कुतूहलेन<br>कृष्टं धनुर्भगवतो वृषभध्वजस्य ।<br>तत्रानुपङ्गिकममङ्गलमीदृशं तु<br>संवृत्तमत्र न मया गणितस्त्वमासीः॥११॥ | Act IV...cf p 188. verse 21 |
| Mahâvîracharita. | |
| अथवा क एष विधिरपि. | Act VI. cf Act. I p. 43. |
| Bâlarâmâyaṇa | |
| ये हेलोद्धृतचन्द्रचूडगिरयः… ॥ ४५ ॥ | Act II. cf. VII. verse 37. |

वह्निरेव वह्नेर्भेषजम्. IV. cf. विषस्य विषमौषधम्.
पुरोभूः शालेयीकलमपरिपाकोत्सुकशुका ।
पुरः फुल्लाम्भोजा तिलकयति वो वर्त्मसरसी ॥

अथाऽग्रेसीमानो हलदलितमुस्तासुरभय—
स्ततोऽदूराद्दिव्या नयनविषयं यास्यति सरित्॥३७॥ Act. VI.cf. Act. V 21.

स्त्रीमात्रं ननु ताडका भृगुभवो रामश्च विप्रः शुचिर् ।
मारीचो मृग एष भीतिभवनं वाली पुनर्वानरः॥८८॥ Act.VII.cf.Act.VII.40

छिन्नं शिरो निपतदन्तरतस्तदेत—
दादाय देव निजमेव दशाननेन ॥
मुक्तं च वक्षसि ककुत्स्थकुलध्वजस्य ।
जातश्च कुड्मलितपङ्कजचारुचक्षुः ॥ ४७ ॥ Act.IX.cf Act.VII.46.

Authorship

II. The authorship of *Prasannarâghava* and *Gîtagovinda* is too often erroneously attributed to a single person; but it would, we think, be unfair to identify the author of that pleasing and graceful idyl, with his charming and appropriate imagery and the melody and the harmony of his numbers, with our Author, who, although his work contains parts which singly may be admired for their excellence, has, however, the unhappy propensity to be verbose and tedious* in his descriptions. It is nevertheless unnecessary, for the purpose of being able to repudiate this spurious hypothesis, to go far into the discussion of the style and the poetic genius of each, which in themselves have but few kindred excellences, for the task of investigation is rendered very simple in the present case, as one of them has mentioned his parentage in the beginning of his work while the† other has done the same at the conclusion of his poem, which conclusively prove them to be different persons.

Date.

Having dismissed the Author of *Gîtagovinda* with these few remarks, we now proceed to ascertain the date of our Author. The boundless field of

* Description of the Kings attending choice-marriage of Sîtâ and that of the moon-light (act vii) may be cited in illustration

† श्रीभोजदेवप्रभवस्य रामादेवीसुतश्रीजयदेवकस्य ।
पराशरादिप्रियवर्गकण्ठे श्रीगीतगोविन्दकवित्वमस्तु ॥ १० ॥

G. G. U. XII.

Sanskrit antiquarian researches having no land-marks for our proper guidance, few things are more difficult than the task of ascertaining the exact period during which an author of a particular Sanskrit work can be said to have flourished. The task in the present case is rendered still more difficult by the insignificance of our Author, by the want of popular traditions connected with his name, and by the scanty materials at our disposal It need not, therefore, be said that our effort in this direction will be conjectural only

In *Chandrâlôka* which is an introducation to Sanskrit rhetoric, the following verse occurs —

महादेवः सत्रप्रमुखमखविद्यैकचतुरः ।
सुमित्रा तद्भक्तिप्रणिहितमतिर्यस्य पितरौ
अनेनासावाद्यः सुकविजयदेवेन रचिते ।
चिरं चन्द्रालोके सुखयतु मयूखः सुमनसः ॥

Whereas in *Prasannarâghava* we have—

कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः ॥ १४ ॥

अपि च ।

लक्ष्मणस्येव यस्यास्य सुमित्राकुक्षिजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ॥ १५ ॥

From these verses we might fairly infer that both these works—*Chandrâlôka* and *Prasannarâghava*—are from the pen of one person only, whose name is Jayadeva; moreover all the circumstances related in *Chandrâlôka* as regards its author are exactly the same as those mentioned in the verses occurring in *Prasannarâghava.* There is besides one more circumstance in the verse quoted above from *Chandrâlôka* which deserves special notice. The author styles himself the Lord of Poets (कवींद्रः) which shows that he had distinguished himself as a great poet even before he came to be known as an *Alankârika.* From this it appears that the present drama must have been written even before he had composed the work on rhetoric above referred to.

The next thing to be observed in this connection is, that he was a great specialist in the branch of our philosophy known as Nyâya ( Logic ). Indeed the frequent occurrence of the word *Tarka* in senses where other words would have suited much better, can be referred only to the common foible of the specialists who even in ordinary discourse reveal a fondness for the technical phraseology of the branch of learning to which they have devoted themselves. In support of this view, we have a still stronger proof in the dialogue between Nata and Sûtradhâra ( Page 22. ) where the author is openly declared to be a *Târkika* and an occasional indulgence of one's fancy in what are called " subtle intricacies of Logical discourse " is eloquently defended These and such other peculiarities of style* and shades of meaning which are plainly noticeable even on a hasty perusal of the drama, justify the inference that our Author was a specialist of the kind referred to above. Dr. Aufrecht in his catalogue of MSS. mentions nearly fifteen Jayadevas as the authors of various works. Among these he mentions only one person named Jayadevamis'ra, the author of *Manyâlôka*, who is reputed to be a great Naiyâyika.

Now let us see whether we can establish any identity between these two persons Jayadeva and Jayadevamis'ra-*Mis'ra* being only an honourary suffix having no special significance Jayadeva, our Author, says in *Chandrâlôka* that he was known by the name of Pîyûshavarsha ( Moon )† whereas Jayadevamis'ra the author of *Manyâlôka* is known

---

* रामः—अये सर्वानवद्याङ्गीति वक्तव्यम्. P 72

राम····विस्मयनीयशीलानां शिखामणिरिति वक्तव्यम्. P. 135.

विद्याधरी—वक्रतर इति भणितव्यम् । P. 44.

† पीयूषवर्षप्रभवं चन्द्रालोक मनोहरम् ।

सुधानिधानमासाद्य श्रयध्व विबुधा मुदम् ॥ ६ ॥

जयन्ति याज्ञिकश्रीमन्महादेवाङ्गजन्मनः ।

सूक्तपीयूषवर्षस्य जयदेवकवेर्गिरः ॥ ६ ॥

by the name of Pakshadhara ( Moon ), a nick-name which traditions* account for in various ways

We conclude from this circumstance that Jayadeva and Jayadevamis'ra are names of one and the same person

There is also an additional circumstance bearing on the above view , but before mentioning it, it is better to enunciate the principle observed by many Sanskrit writers in the designation of their works This consists in the selection of a certain symbol† such as a word or its synonym or its periphrasis which forms the title or part of the title of all the works of an author In the case of our Author this symbol seems to be *Âlôka* ( Moon-light ) as is seen from *Chandrâlôka* which, as we have shown, is indisputably the work of our Author. Jayadevamis'ra also uses the same symbol to designate his work as is seen from *Manyâlôka* which is a commentary on *Tatvachintâmani*—a systematic digest of Nyâya arranged according to the modes of proof—of Gangês'a Upâdhyâ, which circumstance if not merely accidental, points to the same inference about the identity of Jayadeva with Jayadevamis'ra.

In the absence of any circumstances to countervail the arguments adduced, we may consider the inference regarding their identity as fairly legitimate

Having now established the identity of Jayadeva, the author of the *Prasannarâghava*, with Jayadevamis'ra, the

---

* "He bore the title of Pakshadharamis'ra from the circumstance, it is said, of his having been able to maintain by argument whatever side of a question he undertook to defend , but others say that the title is due to the power he had of retaining for a fortnight whatever he once heard ; according to Dr Hall, it proceeded from his habit of reading Logic only once every fortnight." *Notices* vol. 1 P. 285-86.

† For *e. g.* अमृतलहरी, करुणालहरी, पीयूषलहरी, &c. of Jagannâtha Pandita. Also शब्देन्दुशेखर, परिभाषेन्दुशेखर, प्रायश्चित्तेन्दुशेखर &c. of Nages'abhatta.

author of the *Manyâlôka*, the task of ascertaining the probable date of our Author, is rendered somewhat easy though it must be remembered that the whole of our subsequent supposition hangs upon a single thread, *viz* the identity of Jayadeva with Jayadevamis'ra.

Now Gangês'a Upâdhyâ is said to have flourished in the first quarter or according to some in the last quarter of the twelfth* century The author of *Manyâlôka*, therefore, may, at the most, have been the contemporary of Gangês'a Upâdhyâ, but he certainly could not have flourished before. Thus, either the first quarter or the last quarter of the twelfth century forms the *terminus a quo* of our author' date.

In the present work itself there is a proof which justifies the above inference In the twenty-second verse of the first act, our Author mentions the names of certain poets with sundry remarks on their compositions. Among these poets he mentions a poet whom he calls *Chóra* by which we are probably to understand Bilhana the author of *Chórapañchâs'ikâ* and *Vikramânkadévacharita* Dr Buhler in his introduction to the latter work has suggested the probable date of the composition of the work to be the third or the fourth quarter of the eleventh century. Since Jayadeva has made a reference to Bilhana and his work, he cannot have lived before him. On this supposition, too, the earliest date that could be assigned to our Author is the twelth century

Next, we proceed to ascertain the latest period during which our Author can be supposed to have flourished. *Chandrâlôka* forms the groundwork of the *Kuvalayânanda* —a treatise on the figures of speech employed in Sanskrit rhetoric—by Appaya Dîkshita In the *Kuvalayânanda* we have the following :—

चन्द्रालोको विजयतां शरदागमसंभवः ।
हृद्यः कुवलयानन्दो यत्प्रसादादभूदयम् ॥

The *Chandrikâ*—a commentary by Vaidyanâtha on the

---

* न्यायकोश उपोद्घात. P. 5.

*Kuvalayânanda*—wrongly interprets the Comp. शरदागमसंभवः as—शरदागमसंज्ञकश्चन्द्रालोकमूलभूतो ग्रंथः; whereas the same Comp. has been interpreted in रसिकरञ्जनी—another commentary on the same work—as शरदागमनाम्ना टीकाग्रन्थेन संभवः उत्पत्तिर्मुख्यार्थासंभवात् परिष्काररूपा यस्य सः. This latter interpretation is correct since शरदागम is the name of a commentary on *Chandrâlôka* by Pradyotanabhaṭṭâchârya the son of Balabhadra. This commentary was compiled by the order of Prince Vîrabhadra son of king Râmachandra and grandson of Vîrasimha a Bundella chieftain.* This Vîrabhadra under whose patronage the work was written has himself written a commentary on कामसूत्र by name कंदर्पचूडामणि the composition of which dates A. C. 1577 † The author of *Chandrâlôka*, therefore, must have lived anterior to the period above specified. We can show that he lived even before A. C. 1537, for a Ms of a gloss on *Manyâlôka* called *Kantakóddhâra* by Madhusûdana Thakkura has the following colophon—

महामहोपाध्यायठक्कुरश्रीमधुसूदनकृतकण्टकोद्धारे प्रत्यक्षखण्डः परिपूर्णः।

.........................................................................

चक्रे रामकनीयसोऽवनिपतेः शीतांशुनन्दाम्बुधा- ‡
वङ्के फाल्गुनसप्तमीरविदिने गङ्गागणेशार्चकः ॥

"Notices" vol. V. P 83-84.

Jayadeva the author of *Manyâlôka* therefore must have

---

* (टी॰) श्रीवीरभद्रभूपतिलब्धनिदेशेन यत्नेन।
चन्द्रालोकमयूखो दशम. स्पष्टार्थतां नीत ॥

इति श्रीमहाराजाधिराजश्रीरामचन्द्रदेवात्मजयुवराजश्रीवीरभद्रदेवादिष्टमिश्रबलभद्रात्मजसकलशास्त्रारविन्दप्रद्योतनभट्टाचार्यविरचितचन्द्रालोकप्रकाशे शरदागमे दशमो मयूखः।

Notices. Vol. V. P. 105.

† See Aufrecht's Catalogus Catalogorum p. 594 B. under वीरभद्रदेव.

‡ Rajendralal Mitra renders this line by L. S. 431=A. D. 1537.

lived before the author of Kaṇṭakoddhâra which forms a gloss on the work of the former

We shall not, therefore, be far from truth if we regard the first quarter of the sixteenth century as the *terminus ad quem* of the date of our Author on the strength of the above evidence Vâsudeva Sârvabhauma was a co-student with Jayadeva in Nyâya and wrote a commentary on some parts of *Chintâmani* This commentary was surpassed by the work of his pupil Raghunâtha S'iromani who is also said to have studied with our Jayadeva. Traditions represent Raghunâth S'iromani as a contemporary of Raghunandana the Bengal law-giver and the author of the twenty-eight *Tattvas* * Now Raghunandana's date has been fixed to be the beginning of the sixteenth † century. Our Author, therefore, must have lived in the last quarter of the fifteenth or at the most, the first quarter of the sixteenth century Christian era.

Style.

4. Our Author seems to have embodied in his drama a style of composition known in Sanskrit by the technical form *Vaidarbhirîti*; but his fondness for puns and such other embellishment of style too often betrays itself into straining after fine words, and in an attempt to connect artificially their secondary meanings with the main idea, sometimes a new sentiment which has absolutely nothing to do with the context underlying the idea expressed This the poet regards as an excellence in itself and strives to attain it by dragging in a vast deal of irrelevent matter instead of expressing his ideas sensibly and without pretension. The work is evidently written in an age when the Sanskrit language was on the decline; when laboured puns and strained alliterations were greatly admired and elaborately set up as beauties. But of that quickening of poetic fancies and profusion of genial creative excitation few traces appear in the work of our Author which bear marks of careful construction. There is yet another defect of style which added to others make the representation of

* See "notices" Vol. I. P. 286. also न्यायकोश उपोद्घात P. 6.

† Vide Mayne's Hindu law. P. 30.

the drama a matter of great difficulty. The verse in which the manager announces the name of the drama may be quoted as an illustration of the latter remark. This verse is to be split into eight parts and to be arranged in a certain mode. The first letter of each line thus arranged when taken together constitutes the name of the drama. This sort of affectation is unsuited to the dignity of the poem The poet, however, appears so much charmed with this, the highest stretch of his ingenuity, that he did not pause to reflect if the audience were in a suitable position to appreciate his skill We are neither previously warned that such an announcement is forthcoming, nor is the verse repeated when we have received a clue to the solution of the anagram. There is we believe a singular impropriety in supposing that the audience could learn the verse by heart after hearing it recited only once, and the counting and the arrangement of the lettes would involve a quick mental process which is sure to divert their thoughts from the scene.

The poet often resorts to a peculiar mode of repetition for the sake of emphasis In this he happily succeeds well

Some of the chief defects of the drama.

5. The drama taken as a whole is *too long* to allow of its being conveniently represented on the stage. This defect seems to have crept into our Sanskrit dramatic literature owing to an ancient custom of protracting the representation for days and weeks together. Our Author seems to be aware of this, since he has divided the drama into two parts—the first four acts forming the first part and the last three constituting the second part—as is seen by the introduction of a verse similar to Bharatavâkya at the end of the fourth act

Secondly the drama does not commend itself by the unity of action. In this play the Author has grouped together a number of episodes but not so as to form an organic whole. The different characters do not, therefore, form the members of a single body, each setting off the other or consistently helping to carry the main idea further and further. In striving to record these episodes the Author has sacrificed

the higher object of dramatic poetry and made his drama an instrument for the prosaic representation of the scenes from the epic of Vâlmîki, altered at pleasure and adapted to serve the purposes of a drama which does not confine its operation to a limited area or period and partakes in this respect the epic character of its great model. But this complicated mass of events or the host of characters augmented to about forty, is not governed by a single cause or devoted to the accomplishment of a single end, but occur in this sequence exactly, because they happen to be so recorded in Râmâyana. Several characters may either be taken out or added at will, for instance Bâṇa, Paras'urâma &c. having nothing whatsoever to do with the main string of the plot may safely be omitted without being missed. A good dramatist always lays down certain aims to be realized which act as pivots upon which the actions of all the characters turn Every word which a character utters must go to advance and further the plot of the drama. In the case of the present drama even after going through the six acts we are at a loss to mark the progress of the plot

Lastly, in connection with the suitability of this drama for stage representation we must notice that there is a great blemish in this drama in the introduction of the character of a Swan (कलहंस) on the stage, which makes it a very difficult thing for representation, the aid which in those days they could derive from the machinary of art must have been inconsiderable We cannot imagine how the said part was acted on the stage.

Delineation and development of characters

6 Next come the delineation and the development of characters Kalidâsa, though sometimes in his S'akuntalâ he rises to Shakespearean heights, falls yet short of a model in this particular. The great drawback in this respect seems to have been caused, first, by the extremely

stringent rules of the Sanskrit dramaturgy which left very little scope for the invention of the poet The variety in the Sanskrit drama depends mainly upon the incidents whereas the different characters may each be referred to a particular genus which is previously defined and any wide departure from which is not permissible. All the heroes, heroines and villains, together with the characters subsidiary to these, do bear a sort of family likeness since they are made to approximate themselves to the corresponding characters defined in ancient dramatic canons. Hence they are merely imaginary ideals produced only by the poet's fancy and not to be met with in real life.

De Quincy's remarks about the Grecian stage are so exactly applicable to the Sanskrit dramas that we may be permitted to borrow his own words and adopt his views *mutatis mutandis* Like the Greeks, the Hindoos failed in their portraiture of human nature because they did not work out their dramas on principles which underlie the modern European Dramaturgy, but they were fettered by exigencies unknown probably to the modern dramatist, exigencies which led to the rejection of the complex variety of characters on the stage where fatalism which was supposed to distribute all the good or evil in the world reigned supreme and left absolutely nothing to *free will* *Man was hence no longer the representative of an august will effectually displaying what we call character which is a distinction between man and man, primarily originating from the will and moving under a variety of impulses, but he was merely the passive puppet of fate* The absence of any genuine historical record which would have furnished them with models for characters, and from which they would probably have derived many useful hints precluded the possibility of their attaining the soul of excellence which is deservedly claimed by some of the European dramatists

Although this fault appears to have been shared by the Sanskrit dramatists in general and our Author in particular, a few remarks on his characterisation would not here be out

of place. The characters of our Author can be said not only to be undeveloped in any sense of the word, but sometimes they speak such stuff that the character they have to support, or the situation in which they are placed, does not by any means warrant them in doing For instance, the sight of Lakshmana puts Sîtâ in mind of Urmilâ before she knew anything of him Why she thinks of a particular sister to the exclusion of others, it is somewhat difficult to imagine. Did she notice any kindred qualities in the expression of his face ? Such an observation presupposes an insight into future events which Sîtâ in the character of a mortal cannot be supposed to have possessed. The only explanation of what otherwise seems inexplicable to us, is that Urmilâ being her real sister is uppermost in her mind, to the exclusion of others who were her cousins only

Sîtâ ought in our opinion, to have been represented as an innocent damsel wholly unacquainted with matters of love. Though brought up in a royal harem her emotions partially though not wholly like those of S'akuntalâ, should have been unaccountable to her as far as her age is concerned. Love in its true sense which must have been a sentiment hitherto foreign to her young heart, should have been a matter of delicate surprise to her But she is represented as quite familiar with it ; nay, she notices at a glance the absence of the same in the eyes of Lakshmana We believe that there cannot be a greater artistic error than this We notice, moreover, that Sîtâ is first introduced to Lakshmaṇa instead of being introduced to Râma. It would be an ignorance of human nature to suppose that Sîtâ could, before her inclinations were fixed on another, behold without any emotions of love, a young lad, in personal grace and beauty not inferior to the youth whom she subsequently chose as her lord. The very fact that he is first introduced to her, is a certain proof that he is designed for her

The next fault in order we may notice is that the lamentations of Râma in Pañchavati after the bereavement of Sîtâ by Râvana, the retrospect of which has been given by the

masterly hand of Bhavabhûti, ought to have deserved more than the casual mention of them by minor personages Similarly the poet seems to have committed a serious blunder in not devoting so much as a single verse to the meeting of Râma and Sîtâ, a purpose to the accomplishment of which all the actions of the characters as represented in the previous portions, are directed Instead of doing this our poet hurries onward to give rein to his fertile imagination for the purpose of describing the moon-light Here the poet does not see anything grand and sublime in the largest luminary situated near our globe He looks at it as a mere excitant of passions and prefers such childish similes as fill us with laughter Shakespeare in the Merchant of Venice, while describing the moon-light, only does justice to the feelings experienced by the persons under it, the case of our poet, however, is different, for it seems that he makes them say something about the moon-light that he may make use of verses lying idle with him.

In conclusion I have to acknowledge my sincere thanks to my esteemed teacher Prof. Bhaskerrao Ramachandra Arte M A, who not only encouraged me to take up the work of annotation but also helped me materially with his guidance and advice.

S R Khopkar

# A LIST OF ABBREVIATIONS USED IN THE NOTES.



| | | |
|---|---|---|
| Ag. P. | ... | ...Agni Purâna (Calcutta) |
| Ait. Br. | ... | ...Aitarêya Brâhmana (Bombay) |
| Am... | ... | ...Amara Kosha („) |
| Amaru. | ... | ...Amaru S'ataka „ |
| An R | ... | ...Anargha Râghava „ |
| B. Ra. | ... | ..Bála Râmâyana (Calcutta) |
| B. V. | ... | ...Bhâminivilâs (Bombay) |
| Bh ... | ... | ...Bhartrihari „ |
| Bhâg. | ... | ...Bhâgavata, „ |
| Bh G. | ... | ...Bhagavadgîtà (Calcutta) |
| Bh Pr | ... | ...Bhâva Prakâs'a (Bombay) |
| Br Pu. | ... | ...Bhahma Purânâ |
| Chân. | .. | ...Chânakyanîtis'ataka (Calcutta) |
| Du S | ... | ...Durgasimha on Nirukta |
| Gît | ... | ...Gîtagovinda (Bombay) |
| H C. | ... | ...Harsha Charita „ |
| H Pr | ... | ...Hata Yoga Pradipikâ „ |
| H V. | ... | ...Harivams'a „ |
| Hal. | .. | ...Halâyudha |
| Hem | ... | ...Hemâdri |
| K Pr | ... | ...Kâvyaprakâs'a „ |
| Kâsi | ... | ...Kâsikâvṛitti „ |
| Ku. | ... | ...Kumârasambhava „ |
| M S. | ... | ...Manusmriti „ |
| Mano | ... | ...Manôramâ |
| Mâl. | ... | . Mâlatimâdhava „ |
| Mâlv. | ... | ...Mâlavikâgnimitra „ |

| | |
|---|---|
| Me ... ... | ...Medini „ |
| Mg. ... ... | ...Meghadûta „ |
| Mv ... ... | ...Mahâvîracharita „ |
| Nir ... ... | ...Nirûkta |
| P Pu. Sr. | ...Padma Purâna Srishṭikhanda „ |
| Pân. ... | ...Pânini „ |
| Pra. ... | ...Prakarana |
| R ... ... | ...Raghuvams'a „ |
| R G ... | ...Rasagangâdhara „ |
| Ra. ... | ...Râmâyana „ |
| S ... ... | ...S'akuntalâ |
| S D ... | ...Sâhityadarpaṇa ( Calcutta ) |
| S Pu ... | ...S'iva Purâna |
| S. Rat. ... | ...Sangîtaratnâkara „ |
| Sâ S ... | .. Sânkhyasûtra „ |
| S'i ... ... | ...S'is'upâlavadha (Bombay) |
| Su Bh. R. | ...Subhas'ita Ratnâkara |
| Tai. Br.... | ...Taittiriya Brâhmana ( Calcutta ) |
| Tri S. ... | ...Trikânda S'esha. „ |
| U ... ... | ...Uttara Râmacharita ( Bombay ) |
| V. .. ... | ...Vikramorvasîyam „ |
| Va. Ka ... | ...Vâtsyâyanakâmasûtṛa „ |
| Vâr. .. | ...Vârtika |
| Vb ... | ...Viddhas'âlabhañjikâ „ |
| Vi. ... | ...Vis'vakos'a |
| Vis. ... | ...Vishnu Purâna (Calcutta ) |
| Vri V.... | ...Vṛiddhavâgbhaṭa ( Bombay |
| Yâdn ... | ...Yâdnyavalkya |

॥ श्रीः ॥

# प्रसन्नराघवम् ।

## गूढार्थप्रकाशिकया समेतम् ।

—:*:—

### प्रथमोऽङ्कः ।

चत्वारः प्रथयन्तु विद्रुमलतारक्ताङ्गुलिश्रेणयः
श्रेयः शोणसरोजकोरकरुचस्ते शार्ङ्गिणः पाणयः ।
भालेष्वब्जभुवो लिखन्ति युगपद्ये पुण्यवर्णावलीः
कस्तूरीमकरीः पयोधरयुगे गण्डद्वये च श्रियः ॥ १ ॥

---

### श्रीलक्ष्मीनृसिंहः प्रसन्नोऽस्तु ।

श्रीनृसिंहचरणाम्बुजरेणुः पातु मामसकृदानतशीर्षम् ।
यद्गता जडधियोप्यमरेन्द्रपूज्यगीष्पतिमताः कृतकृत्याः ॥१॥

ब्रह्मेशादिसुरेड्यविष्णुचरणाम्भोजस्रवत्स्वर्धुनी-
रिङ्गत्तुङ्गतरङ्गशुद्धयशसा शुक्लीकृताशान्गुरून् ।
श्रीमद्व्यासमुनीन्द्रशेषकणभुग्वागब्धिपारङ्गता-
न्व्याकुर्वे जयदेवसूक्तिममलां नत्वा ह्यनंताभिधान् ॥ २ ॥

क्वाहं मन्दमतिः क्वेदं जयदेवकवेर्वचः ।
तथापि गुरुकारुण्यकटाक्षात्किञ्चिदुच्यते ॥ ३ ॥

अत्र तावत्कविशिरोमणिर्जयदेवः सत्स्वपि वेदान्तादिशास्त्रेषु किमर्थं काव्यरचनासमुत्सुकमतिरितिचेत्, तेषां परिणतधिषणैरप्यनल्पकालपरिशीलनसमास्वाद्यत्वान्मन्दधियां सुतरां दुरवगाहत्वान्न तेभ्यः सर्वेषां प्रमोदाधिगम, इति विमृश्य, काव्यालापाश्च ये केचिद्गीतकान्यखिलानि च । शब्दमूर्तिधरस्यैते विष्णोरंशा महात्मन इति विष्णुपुराणवचनात् । न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः । नाऽसौ नयो न तत्कर्म नाटके यन्न दृश्यत इति भरतोक्तेश्च काव्यालापांश्च वर्जयेदिति निषेधस्याऽसत्काव्यविषयतां निश्चित्य निर्दोषं गुणवत्काव्यमलङ्कारैरलङ्कृतम् । रसान्वितं कविः कुर्वन्कीर्तिं प्रीतिं च विन्दति । काव्यं यशसेऽर्थकृते

व्यवहारविदे शिवेतरक्षतये। सद्यः परनिर्वृतये कान्तासम्मिततयोपदेशयुजे। धर्मार्थकाममोक्षेषु वैचक्षण्यं कलासु च । करोति कीर्तिं प्रीतिं च साधुकाव्यनिषेवणमित्यादिफलसद्भावात्प्रसन्नराघवं नाम नाटकं चिकीर्षुरनन्तरायग्रन्थपरिसमाप्तिकामः शिष्यशिक्षार्थं ग्रन्थादौ देवद्विजनृपादीनामाशीर्वादसमन्विता । अष्टाभिर्वा द्वादशभिः पदैः सम्यङ्नियोजिता । नान्दी कार्याऽतियत्नेन बुधैर्विघ्नोपशान्तय इत्यनेन प्रतिपादितां द्वादशपदां नान्दीं निबध्नाति चत्वार इत्यादिना पद्यत्रयेण. **चत्वार इति**—शार्ङ्गिणः ते चत्वारः पाणयः श्रेयः प्रथयन्त्विति सम्बन्धः । तच्छब्दः परोक्षार्थकः ( इदमस्तु सन्निकृष्टे समीपतरवर्ति चैतदो रूपम् । अदसस्तु विप्रकृष्टे तदिति परोक्षे विजानीयादिति प्रौढमनोरमायामुक्तत्वात् ) शृङ्गस्येदं शार्ङ्गम् ( तस्येदमित्यण्. ) तन्नामकं धनुरस्यास्तीति शार्ङ्गी तस्य विष्णोरित्यर्थ. ( अत इनिठनावितीनिप्रत्ययः ) ( चापः शार्ङ्गं मुरारेस्त्वित्यमरः ) चत्वारः चतुःसंख्याकाः विद्रुमलतेव प्रवालवीरुदिव रक्ता अङ्गुलीनां श्रेणिः पङ्क्तिर्येषां तादृशा अतएव शोणसरोजकोरकाणां रक्तकमलकलिकानां रुगिव कान्तिरिव रुग्येषामिति ( सप्तम्युपमान इत्यनेनोष्ट्रमुखवदुत्तरपदलोपो बहुव्रीहिः ) ते पाणयः करा. श्रेयो मङ्गलम् ( श्रेयस्तु मङ्गले धर्मशस्तयोरिति हेमचन्द्रः ) प्रथयन्तु प्रख्यापयन्तु. ( प्रथप्रख्यान इत्यस्माण्णिजन्ताल्लोटि प्रथमपुरुषबहुवचनम्. घटादित्वान्मित्त्वे मितां ह्रस्व इति ह्रस्वः ) अथवा त इति तवेत्यर्थकम् . तथा च तव श्रेयः प्रथयन्त्वित्यर्थः । ननु यत्तदोर्नित्यसम्बन्ध इति नियमाद्ये पुण्यवर्णावलीरित्युत्तरवाक्ये यच्छब्दोपादानेन तदन्वयबोधनार्थं तच्छब्दोच्चारणस्यावश्यकत्वात्कथं तवेत्यर्थो युज्यत इति चेन्न, उत्तरवाक्यानुगतत्वेनोपात्तो यच्छब्दः सामर्थ्यात्पूर्ववाक्यानुगतस्य तच्छब्दस्योपादानं नापेक्षते, यथा-साधुचन्द्रमसि पुष्करैः कृतं मीलितं यदभिरामताधिके. । उद्यता जयिनि कामिनीमुखे तेन साहसमनुष्ठितं पुनरिति प्रागुपात्तस्तु यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः यथा—तनोति योऽसौ सुभगे तवागत इति, अत्र यच्छब्दस्तच्छब्दोपादानं विना साकाङ्क्षः अतः साकाङ्क्षरूपो दोषः । स्पष्टं चेदं सर्वं सप्तमोल्लासे **काव्यप्रकाशादौ**। करानेव विशिनष्टि **य इति**-ये कराः अब्जभुव कमलयोनेः भालेषु ललाटेषु पुण्याः पवित्रा या वर्णावलीरक्षरपङ्क्तीः श्रियो लक्ष्म्याः पयोधरयोः स्तनयोर्युगे द्वये गण्डद्वये कपोलयुग्मे च कस्तूर्या मृगमदस्य मकरीस्तदाकृतिरचनाविशेषान् युगपदेकदैव लिखन्ति ( लिखधातोस्तौदादिकात् शविकरणे तस्यापित्त्वेन ङित्वाद्गुणाभावः ) आदौ मगणप्रयोगात्क्षेमप-

अपि च ।

आकल्पं मुरजिन्मुखेन्दुमधुरोन्मीलन्मरुन्माधुरी-
धीरोदात्तमनोहरः सुखयतु त्वां पाञ्चजन्यध्वनिः ।
लीलालङ्घितमेघनादविभवो यः कुम्भकर्णव्यथा-
दायी दानवदन्तिनां दशमुखं दिक्चक्रमाक्रामति ॥ २ ॥

दत्वं श्रीप्रदत्वञ्च सूचितम्. क्षेमं सर्वगुरुर्दत्ते मगणो भूमिदैवत इति **भामहोक्तेः।** मो भूमिस्त्रिगुरुः श्रियमित्यन्यत्रोक्तेश्च । अत्र चत्वार इत्यनेन चतुर्विधपुरुषार्थ-दानसामर्थ्यं ध्वन्यते । पुण्यवर्णावलीरित्यनेन स्वलेखिष्यमाणग्रन्थस्य समाप्ति-करणसामर्थ्यं कस्तूरीमकरीत्यादिना शृङ्गारादिरसपोषकत्वञ्च ध्वनितम् । उप-मातुल्ययोगितालङ्कारौ । सादृश्यमुपमाभेदे इति **काव्यप्रकाशे** । नियतानां स-कृद्धर्मः सा पुनस्तुल्ययोगितेति च. शार्दूलविक्रीडितं छन्द. सूर्याश्वैर्मसजस्तताः सगुरवः शार्दूलविक्रीडितमिति तल्लक्षणात् । काव्यस्य रीत्यात्मकत्वाद्रीतेर्वैदर्भी-पाञ्चालीगौडीति त्रैविध्येऽपि अत्र वैदर्भी रीतिः। तथा च। **काव्यालङ्कारसूत्रवृत्तौ** द्वितीयाध्याये प्रथमेऽधिकरणे रीतिरात्मा काव्यस्य ६ विशिष्टा पदरचना रीतिः ७ विशेषो गुणात्मा ८ सा त्रिविधा. समग्रगुणा वैदर्भी समग्रा ओजःप्रभृतयो गुणा यत्रेति बहुव्रीहिः वृत्तौ दर्शितः । अत्र च श्लोकौ-अस्पृष्टा दोषमात्राभिः समग्रगुणगुम्फिता । विपञ्चीस्वरसौभाग्या वैदर्भी रीतिरिष्यते ॥ १ ॥ अलङ्कारादिसौभाग्यां तामेकामेव स्तुवन्ति कवयः । सति वक्तरि सत्यर्थे सति शब्दानुशासने । अस्ति तन्न विना येन परिस्रवति वाङ्मधु । किन्व-स्ति काचिदपरैव पदानुपूर्वी यस्यां न किञ्चिदपि किञ्चिदिवावभाति । आनन्द-यत्यथ च कर्णपथं प्रयाता चेतः सताममृतवृष्टिरिव प्रविष्टा । वचसि यमधिगम्य स्यन्दते वाचकश्रीर्वितथमपि तथात्वं यत्र वस्तु प्रयाति । उदयति हि स तादृक्क्वापि वैदर्भरीतौ सहृदयहृदयानां रञ्जकः कोपि पाक इति सर्वं काव्याल-ङ्कारसूत्रे वृत्तौ च स्पष्टम्—भोजेन **सरस्वतीकण्ठाभरणे** प्रदर्शितरीत्या अव-न्तिका रीतिः । उक्तञ्च—अन्तराले तु पाञ्चालीवैदर्भ्योर्याऽवतिष्ठते । साऽवन्तिका समस्तैः स्याद्द्वित्रैस्त्रिचतुरैः पदैरिति. ॥ १ ॥

बह्वन्तरायशङ्कया तन्निरासायान्यत्पद्यमाह **आकल्पमिति**। मुरजितः श्रीकृ-ष्णस्य “ आसीत्कश्चिद्भीमासुरसखो मुरो नाम पञ्चमुखो दनुजः । स प्राग्ज्यौति-

१ बहुलोन्मी०।

षपुराब्दहिर्जलावरणे निद्रितः श्रीकृष्णेन नरकासुरवधप्रस्तावे पाञ्चजन्यध्वानेन प्राबोधि। स च प्रवृद्धमन्युर्जिघांसुः कृष्णं धावंस्तेनान्तकपुरातिथिरकारीति **भागवते दशमस्कन्धे** उ० एकोनेषष्टितमेऽध्याये । मुखमिन्दुरिवेत्युपमितं व्याघ्रादिभिरिति समासः। तस्मान्मधुरं यथा स्यात्तथोन्मीलन्नुद्गच्छन्यो मरुद्वायुर्यस्मिन्नेतादृशः माधुरी मधुरत्वं तेन धीरो गम्भीरः उदात्तः सर्वोत्कृष्टः अतएव मनोहरः रुचिर· धीरश्चासावुदात्तमनोहरश्चेति विशेषणोभयपदः कर्मधारयः । अथवा धीरोदात्तो नायकाविशेषः तल्लक्षणं **दशरूपके**-महासत्वोऽतिगम्भीरः क्षमावानविकत्थनः । स्थिरो निगूढाहङ्कारो धीरोदात्तो दृढव्रत इति. तस्य विष्णोर्मनो हरतीति स तथा ( हञो हरतेरनुद्यमनेजित्यनेनाच्प्रत्ययः ) पञ्चजनो नाम दैत्यविशेषः तत्र भवः पाञ्चजन्यः तन्नामा शङ्खः तस्य ध्वनिः शब्दः ( तत्र भव इत्यधिकारे गम्भीराद्यञिति सूत्रे पञ्चजनादुपसंख्यानमिति वार्तिकेन यञ् ) संह्लादपुत्रः पञ्चजनो नामासुरोऽब्धौ न्यवसत् स्वगुरोः सान्दीपनेः पुत्रान्वेषणाय समुद्रान्तःप्रविष्टः श्रीकृष्णस्तं निहत्य तदस्थिरचितशङ्खं जगृह इति भागवतीयपू० दशमस्कन्धे पञ्चचत्वारिंशत्तमाध्यायस्था कथात्रानुसन्धेया। त्वां आकल्पं कल्पपर्यन्तं ( आङ्मर्यादाभिविध्योरिति समासे नाव्ययीभावादित्यम्. ) सुखयतु सुखिनं करोतु ( सुखिञ्छब्दात्तत्करोतीति णिच् इष्ठवद्भावाट्टिलोपः ततो लोट्. ) यः शङ्खः लीलया हेलया लङ्घितस्तिरस्कृतो मेघनादस्य घनगर्जितस्य विभवः सौभाग्यं येन तादृशः, दानवा एव दन्तिनो गजा अथवा दानवानां दैत्यानां दन्तिनो गजास्तेषां कुम्भाश्च कर्णाश्च कुम्भकर्णम् ( प्राण्यङ्गत्वादेकवद्भावः ) तस्य व्यथां दुःखं ददाति तच्छीलः ( सुप्यजाताविति ताच्छील्ये णिनिः, आतो युगिति युक् ) तादृशः सन् दश मुखानि आरम्भप्रदेशा यस्य तत् ( मुखमुपाये प्रारम्भे इति हैमः ) दिक्चक्रं दिङ्मण्डलमाक्रामति व्याप्नोति. स सुखयत्विति पूर्वेणान्वयः । अत्र श्लोके पूर्वार्धे शङ्खध्वनिवर्णनेन सङ्ग्रामारम्भः उत्तरार्धे लीलालङ्घितमेघनादेत्यत्र 'मेघनादस्तु वरुणे तनये रावणस्य च' इति मेदिनीपर्यालोचनेन मेघनादशब्देनेन्द्रजिदेव गृह्यते एवञ्च लक्ष्मणहस्तेन तद्वधः दानवदन्तिनां कुम्भकर्णव्यथादायीत्यनेन दानवानां कुम्भकर्णनामकरावणानुजस्य च नाशः सूचितः । दशमुखान्दिक्चक्रमित्यनेन रावणहननञ्च ध्वनितम् । ननु मेघनादकुम्भकर्णदशमुखशब्दाना प्रकरणबलान्मेघध्वनिगण्डश्रवणादिकपरत्वात्कथं रावणतत्पुत्रानुजानां प्रतीतिरिति चेन्न, अवाच्यस्याप्यर्थस्य ध्वननसम्भवात् । उक्तञ्च—**काव्यप्रकाशे**—अनेकार्थस्य

अन्यच्च ।

नाभीपद्मवसच्चतुर्मुखमुखोद्गीतस्तवाकर्णन-
प्रोन्मीलत्कमनीयलोचनकलाखेलन्मुखेन्दुद्युतिः ।
सक्रोधं मधुकैटभौ सकरुणस्नेहं सुतामम्बुधेः
सोत्प्रासप्रणयं सरोजवसतिं पश्यन्हरिः पातु वः ॥ ३ ॥

---

शब्दस्य वाचकत्वे नियन्त्रिते । संयोगाद्यैरवाच्यार्थधीकृद्व्यापृतिरञ्जनमिति । संयोगाद्यैरित्यादिपदेन ‘ संयोगो विप्रयोगश्च साहचर्यं विरोधिता । अर्थः प्रकरणं लिङ्गं शब्दस्यान्यस्य सन्निधिः। सामर्थ्यमौचिती देशः कालो व्यक्तिः स्वरादयः। शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः ’ इति । **साहित्यदर्पणे-** रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैरित्युक्तवाच्छ्लिष्टशब्दान्प्रायुङ्क्त कविः, ननु सत्स्वितरेष्वायुधेषु किं शङ्खध्वनिवर्णनेनेतिचेदुक्तं हि **साहित्यदर्पणे**–आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते । देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता । माङ्गल्यशङ्खचन्द्राब्जकोककैरवशंसिनीति । अतः शङ्खो वर्णितः नान्द्यर्थान्तरसूचनद्वारानल्पप्रत्यूहपरिहारोपि कव्यभीप्सितः सिध्यति. वृत्त्यनुप्रासोलङ्कारः । वर्णसाम्यमनुप्रासश्छेकवृत्तिगतो द्विधा । सोऽनेकस्य सकृत्पूर्व एकस्याप्यसकृत्पर इति तल्लक्षणात् । शार्दूलविक्रीडितं वृत्तं लक्षणमुक्तं प्राक्. अत्र गौडीया रीतिः ओजःकान्तिमती गौडीयेतिसूत्रम् समस्तात्युत्कटपदामोजःकान्तिगुणान्विताम् । गौडीयामिति गायन्ति रीतिं रीतिविशारदा इति च ॥२॥

द्वादशपदां नान्दीं निर्वाहयन् तृतीयं पद्यं रचयति **नाभीति** । नाभ्यां यत्कमलं वारिजं तस्मिन्वसतश्चतुर्मुखस्य परमेष्ठिनो मुखैर्लपनैरुद्गीतस्य स्तवस्य स्तोत्रस्य आकर्णनेन श्रवणेन प्रोन्मीलन्ती विकसिते कमनीयलोचने मञ्जुनेत्रे तयोः कलया चातुर्येण ( कला शिल्पे कालभेद इत्यमरः ) खेलन्ती विलसन्ती ( खेलाविलास इति धातोः शतृप्रत्ययः ) मुखेन्दोर्द्युतिर्यस्य, अथवा कमनीयलोचनस्य कलया अंशेन खेलन्ती विलसन्ती मुखे इन्दुद्युतिर्यस्य विधोर्विष्णुलोचनत्वात्तत्कान्तिप्रसरणं मुखे युज्यत एव मधुकैटभौ तन्नामकौ दानवौ सक्रोधं सरोषम् ( वोपसर्जनस्येति सहस्य सादेशः ) पश्यन् अवलोकयन् अम्बूनि क्षीराणि धीयन्तेऽस्मिन्नित्यम्बुधिः तस्यार्णवस्य ( कर्मण्यधिकरणे चेति धात्र:

क्तिः ) सुतां लक्ष्मीं करुणयानुकम्पया स्नेहेन प्रेम्णा च सहितं यथा तथा पश्यन् सरसि जातं सरोजं कमलम् ( सप्तम्यां जनेर्ड इति डः ) तस्मिन्वसतिः स्थितिर्यस्य तं ब्रह्माणं असाधौ साधुमानिनि य उपहासः स उत्प्रासः, उक्तञ्च दर्पणे उत्प्रासनं तूपहासो योऽसाधौ साधुमानिनीति. स च प्रणयः प्रश्रयश्च ताभ्यां सहितं पश्यन्नित्येकस्यापि पदस्यावृत्त्या वाक्यार्थत्रयेऽप्यन्वयः ( हृञोऽच इरित्यौणादिक इप्रत्यये ) हरति भक्तानां पापमिति हरिः विष्णुः वः युष्मान् पातु रक्षतात् ( पारक्षण इति धातोराशिषि लोट् ) नाभीपद्मेति पद्येनापि काव्यार्थः सूचितः, तथा हि मुखमुपाये प्रारम्भ इति हैमकोशबलान्मुखशब्दः प्रारम्भवाची तथा च चतुर्मुखः प्रारम्भे येषां ते चतुर्मुखमुखास्तैर्गीतस्तवाकर्णनेत्यादि पूर्ववत् एवञ्च रामचन्द्रेण रावणादयो मथितास्तदा ब्रह्मादयो निर्जरास्तमस्तुवन्निति सूचितम् सकरुणस्नेहं सुतामम्बुधेरित्यनेनाशोकवनिकानुभूतदुःखस्मरणेन करुणा स्वतःसिद्धश्च स्नेहस्ताभ्यां सह प्रेक्षणेन सीताया निरतिशयाह्लाददायित्वं सूचितम्. सोत्प्रासप्रणयं सरोजवसतिमित्यनेन राक्षसानामभीप्सितवरदानमविचारकारित्वेन स्वस्यैव बाधकं भवतीति ब्रह्मण उपहासः, प्रणयेत्यनेन ब्रह्मणि वात्सल्यमपि सूचितम्. एतेन यो ब्रह्मादिदेवानां महान्त्यपि सङ्कटानि निवारयति स भक्तवत्सलशिरोमणिर्मत्करिष्यमाणग्रन्थविघ्नान्नाशयिष्यतीति किमु वक्तव्यमिति ध्वन्यते. यत्तु इह यद्यपि नान्दीलक्षणे सूचनायाः कर्तव्यता न कुत्रापि बोधिता, इति अनर्घराघवटीकायां **रुचिपतिनोक्तं** तत्त्वविचाररमणीयम्. **दर्पणे**- रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैरिति एवमेव दशरूपकेऽप्युक्तेर्जागरूकत्वात्. अभिज्ञानशाकुन्तलटीकायां **राघवभट्टा** अपि - श्लोकः काव्यार्थसूचक इत्युपक्रम्य, नान्द्यामेव काव्यार्थमन्यं प्रदर्शयन्ति स्म तदनुरोधेनास्माभिरपि अत्र क्वचिल्लक्षणया क्वचिद्व्यञ्जनयापि काव्यार्थः स्पष्टीकृतो नान्द्यामिति सर्वमनवद्यम्. तुल्ययोगिताछेकवृत्त्यनुप्रासा अलङ्काराः वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगितेति तल्लक्षणात् अत्र खेलन्मुखेन्द्वित्यनेन ‘ चन्द्रनामाङ्किता कार्या रसानां स यतो निधिः । स्फीते चन्द्रमसि स्फीता रसश्रीरिति वाल्मीकिः’ इत्युक्तत्वाच्चन्द्रनामाङ्कितनान्दीकरणेन रसपोषकत्वं व्यज्यते, अपि च सक्रोधं मधुकैटभावित्यनेन वीररसप्राधान्यं च ध्वनितम्. अत्रापि गौडीया रीतिः, शार्दूलविक्रीडितं छन्दः, लक्षणं तु पूर्वपद्य उक्त एव ॥ ३ ॥

(नान्द्यन्ते)

**सूत्रधारः**—(परितो विलोक्य। सहर्षम्।) अये, कथममी निजवदनशारदारविन्दनर्तितगिरिनन्दिनीनयनखञ्जनस्य, निखिलमुनिजनहृदयरञ्जनस्य, विकटजटापटलोल्लसद्धुताण्डवितगङ्गातरङ्गनिकरस्य, मन्दाकिनीचन्दनललाटिकायमानमुकुटोपनीतनूतनसुधाकरस्य, त्रिभुवननलिननिर्माणनिर्मलबिसाङ्कुरस्य, भगवतः शंकरस्य यात्रायां परिमीलिता एव पार्षदाः[१]। तदेतानुपगम्य निजकलाविलोकनप्रसादाय तावदभ्यर्थयामि। (विमृश्य।) अथवा किमभ्यर्थनया। यतः।

---

**नान्द्यन्त इति** नान्द्या आवश्यकत्वं **साहित्यदर्पणे**। यन्नाट्यवस्तुन पूर्वं रङ्गविघ्नोपशान्तये। कुशीलवाः प्रकुर्वन्ति पूर्वरङ्गः स उच्यते। प्रत्याहारादिकान्यङ्गान्यस्य भूयांसि यद्यपि। तथाप्यवश्यं कर्तव्या नान्दी विघ्नोपशान्तये इति। तस्याः स्वरूपमपि तत्रैव- आशीर्वचनसंयुक्ता नित्यं यस्मात्प्रयुज्यते। देवद्विजनृपादीनां तस्मान्नान्दीति संज्ञिता। **आदिभरते** च- आशीर्नमस्क्रियारूपः श्लोकः काव्यार्थसूचक। नान्दीति कथ्यत इति। नान्दीशब्दार्थौ **नाट्यप्रदीपे**। नन्दन्ति काव्यानि कवीन्द्रवर्गाः कुशीलवाः पारिषदाश्च सन्तः। यस्मादलं सज्जनसिन्धुहंसी तस्मादियं सा कथितेह नान्दीति। प्रथमाध्याये **भरतः**। पूर्वं कृता मया नान्दी आशीर्वचनसंयुता। अष्टाङ्गपदसंयुक्ता प्रशस्ता वेदसम्मता। पञ्चमाध्याये च। सूत्रधारः पठेन्नान्दीं मध्यमं स्वरमाश्रितः। नान्दीं पदैर्द्वादशभिरष्टाभिर्वाप्यलङ्कृताम् इति। अत्र पदशब्देन श्लोकपादस्यापि ग्रहणम्। उक्तं हि **नाट्यप्रदीपे**। श्लोकपादः पदं केचित्सुप्तिङन्तमथापरे। परेऽवान्तरवाक्यैकस्वरूपं पदमूचिरे इति। **सूत्रधारइति.** एतल्लक्षणं **मातृगुप्ताचार्यैरुक्तम्.** चतुरातोद्यनिष्णातोऽनेकभूषासमावृतः। नानाभाषणतत्त्वज्ञो नीतिशास्त्रार्थतत्त्ववित्। वेश्योपचारचतुरः पौरेषणविचक्षणः। नानागतिप्रचारज्ञो रसभावविशारदः। नाट्यप्रयोगनिपुणो नानाशिल्पकलान्वित। छन्दोविधानतत्त्वज्ञः सर्वशास्त्रविचक्षणः। तत्तद्गीतानुगलयकलातालावधारणः। अवधाय प्रयोक्ता च योक्तॄणामुपदेशकः। एवं गुणगणोपेतः सूत्रधारोऽभिधीयते इति। ननु सूत्रधारः पठेन्नान्दीमित्युक्तत्वात्तेनैव नान्द्याख्यपद्योच्चारणेन सूत्रधारपदं व्यर्थमिति चेन्न। नान्द्या अन्ते सूत्रं प्रयोगकरणं धारयतीति सूत्रधारः

---

१ पारिषदाः।

स्थापकनामा नरः प्रविशतीति शेषः । उक्तञ्च **सङ्गीतसर्वस्वे**- वर्तनीयतया सूत्रं प्रथमं येन सूच्यते । रङ्गभूमिं समाक्रम्य सूत्रधारः स उच्यत इति । **दशरूपकेऽपि**- पूर्वरङ्गं विधायादौ सूत्रधारे विनिर्गते । तद्वन्नरः प्रविश्यान्यः सूत्रधारगुणाकृतिः । सूचयेद्वस्तु बीजमिति । एवमेव **साहित्यदर्पणे** । पूर्वरङ्ग विधायैव सूत्रधारो निवर्तते । प्रविश्य स्थापकस्तद्वत्काव्यमस्थापयेत्ततः । दिव्यमर्त्येषु तद्रूपो मिश्रमन्यतरस्तयोः । सूचयेद्वस्तु बीजं वा मुखं पात्रमथापि वा इति । एवं सत्यपि इदानीं पूर्वरङ्गस्य सम्यक्प्रयोगाभावादेक एव सूत्रधारः सर्वं प्रयोजयतीति व्यवहारः । **परितो विलोक्य सहर्षमिति** इदं सूत्रधाराभिनयबोधकं कविवचनं न तु सूत्रधारोक्तिः एवमेवाऽग्रेऽपि बोध्यम् ।

**अये इति** अये इत्यनेनाकस्मिकप्राप्तिः सूचिता ( अतर्कापतिते त्वये इति विश्वः ) कथमित्यस्य मिलिता इत्यत्र अमी इत्यस्य पारिषदा इत्यत्र च सम्बन्धः । अमी सन्निकृष्टाः अदसस्तु सन्निकृष्टे इत्युक्तेः परिषदि सभायां साधवः पारिषदाः ( परिषदोण्य इत्यत्र परिषदिति योगविभागात्तत्र भक्ताण्ण इत्यस्माण्ण इत्यनुवृत्तेर्णप्रत्ययः ) पार्षदा इति पाठे तु परिपूर्वकषद्लृधातोः क्विपि बाहुलकात्परेरन्त्यलोपे पर्षदिति रूपम्. तस्मात्पर्षदोण्य इति णप्रत्ययः शेषं पूर्ववत् अर्थस्तु सुगम एव । अनेन सभ्यजनप्रशंसा । भगवतः ऐश्वर्ययुक्तस्य ऐश्वर्यस्य समग्रस्य वीर्यस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा । शंकरस्य सुखकरस्य शिवस्येत्यर्थः तथा च **स्कान्दे**-शं करोमि सदा ध्यानात्परमं यन्निरामयम् । भूतानामसकृद्यस्मात्तेनाऽहं शङ्करः स्मृत इति । शमिधातोः संज्ञायामित्यच् ) यात्रायां उत्सवे ( यात्रातु यापनोपाये गतौ देवार्चनोत्सव इति विश्वः ) कथमिति सम्भ्रमे परिमिलिता एव सम्प्राप्ता एव । शङ्करमेव विशिनष्टि । निजं स्वकीयं मुखमेव शारदारविन्दं शरत्कालोद्भवमम्बुजम् ( सन्धिवेलाद्यृतुनक्षत्रेभ्योणित्यण् ) तस्मिन्नर्तितौ गिरिनन्दिन्याः पार्वत्याः नयने नेत्रे एव खञ्जनौ तत्संज्ञकपक्षिणौ येन अनेन रसिकत्वं ध्वनितम् । तथा निखिलमुनिजनानां हृदयानि रञ्जन्त्यस्मिन् ( करणाधिकरणयोश्चेति ल्युट् ) अनेन मोक्षदातृत्वं व्यज्यते । विकटस्य करालस्य ( विकटा वज्रवाराह्यां त्रिषूरुविकरालयोरिति मेदिनी ) जटापटलस्य कपर्दस्य ( कपर्दोस्य जटाजूट इत्यमरः ) उत्सङ्गे ऊर्ध्वप्रदेशे ( उत्सङ्गो मुक्तसंयोगे सक्थन्यूर्ध्वतलेपिचेति मालतीमालायाम् ) ताण्डवं संजातमस्येति ताण्डवितः नर्तितः ( तदस्य संजातंतारकादिभ्य इतीतच् ) गङ्गातरङ्गनिकरः भागीरथ्यूर्मिसंदोहो येन तादृशः । अनेन पवित्रीकरणसामर्थ्यं नर्तनप्रियत्वञ्च ध्वनितम् मन्दाकिन्याविyद्गंगायाः ( मन्दाकिनी वियद्गङ्गेत्यमरः )

आकारेणैव चतुरास्तर्कयन्ति परेङ्गितम् ।
गर्भस्थं केतकीपुष्पमामोदेनेव षट्पदाः ॥ ४ ॥

(विलोक्य । सहर्षम् ।) नूनमेतदभिसंधानादेव सामाजिकसमाजादितोऽभिवर्तते सखा मे रङ्गतरङ्गः ।

(प्रविश्य ।)

**नटः**—भाव, इदं मन्मुखेनैव भवन्तमुदीरयन्ति सामाजिकाः । यत्किल 'अये भरताधिराज–' (इत्यर्धोक्ते ।)

**सूत्रधारः**—(कर्णौ पिधाय ।) अहह । असमञ्जसमसमञ्जसम् । भवतु कार्यं तावदाकर्णयामि ।

**नटः**—भाव, अधुना मयैव भवत्सकाशादाकर्णनीयं किमिदमसमञ्जसमिति ।

**सूत्रधारः**—नन्विदमेव । यत्किल नन्दति ज्यायसि कनीयसि राजपदमुपन्यस्यते । अहं हि भरतमात्रक एव ! मम पुनरग्रजन्मा गुणारामनामा राजपदभाजनम् ।

**नटः**—कीदृग्गुणस्ते गुणारामः ।

**सूत्रधारः**—ननु नाम्नैव दत्तोत्तरम् ।

---

चन्दनस्य मलयजस्य ललाटिका ललाटभूषणं ( कर्णललाटादिति कन् ) तद्वदाचरतीतिललाटिकायमानः ( कर्तुःक्यङिति क्यङ् ङित्वाच्छानच् ) मुकुटं किरीटं उपनीतः प्रापितो नूतनसुधाकरो बालचन्द्रो येन अनेनामृतसान्निध्यं व्यज्यते तथा त्रयाणां भुवनानां समाहारस्त्रिभुवनं जगत्त्रयम् ( पात्राद्यन्तस्येनेति वार्तिकेन स्त्रीत्वाभावः ) तद्रूपं यन्नलिनं पङ्कजं तस्य निर्माणे सृष्टौ निर्मलं स्वच्छः बिसाङ्कुरः कमलाङ्कुरस्तस्य, तत् तस्मात् एतान् समीपतरवर्तिनः समीपतरवर्ति चैतदो रूपमित्युक्तेः सभ्यान् इत्यर्थः उपगम्य संप्राप्य निजकलायाः स्वकीयशिल्पस्य विलोकनं दर्शनमेव प्रसादोऽनुग्रहः तस्मै ( तादर्थ्ये चतुर्थी वाच्येति चतुर्थी ) अभ्यर्थयामि प्रार्थयामि अन्यत्सुगमम्

अभ्यर्थनाभावे कारणं दर्शयति **आकारेणैवेति** । षट्पदाः मधुकराः आमोदेन अतिमनोहरगन्धेन गर्भस्थं कुक्षिस्थं केतक्याः पुष्पमिव चतुराः कुशलाः आकारेणैव परेङ्गितं अन्यहृद्भावम् ( इङ्गितं हृद्गतो भाव इति सज्जनः ) तर्कयन्ति

ऊहयन्ति । परेङ्गितज्ञानफला हि बुद्धय इत्युक्तत्वात् । इयमपि सभ्यप्रशंसा उक्तञ्च **दर्पणे**–तत्र पूर्वं पूर्वरङ्गः सभापूजा ततःपरम् इति सा च द्विविधा उक्तञ्च **सुधाकरे**–प्रशंसा तु द्विधा ज्ञेया चेतनाचेतनाश्रया। चेतनास्तु कथानाथकवि सभ्यनटाः स्मृताः । अचेतनौ देशकालौ कालो मधुशरन्मुखः । सभ्यलक्षणञ्च **आदिभरते** । सभ्यास्तु विबुधैर्ज्ञेया ये दिदृक्षान्विता जनाः । मध्यस्था सावधानाश्च वाग्मिनो न्यायवेदिनः । त्रुटिताऽत्रुटिताभिज्ञा विनयानम्रकन्धराः । अगर्वा रसभावज्ञास्तौर्यत्रितयकोविदाः । असद्वादनिषेद्धारश्चतुरा मत्सरच्छिदः । अमन्दरसनिष्यन्दहृदया भूषणोज्ज्वलाः । सुवेषा भोगिनो नानाभाषा वीरविशारदाः । स्वस्वोचितस्थानसुस्थास्तत्प्रशंसापरायणा इति । उपमालंकार ॥४॥सहर्षमिति क्रियाविशेषणम्। नूनं निश्चयेन एतदभिसंधानादेव एतदभिप्रायादेव सामाजिकसमाजात् सभ्यसमुदायात् ( समवायान्समवैतीति ठक् ) इतोभिवर्तते अत्रागच्छति ( आद्यादित्वात्तसिः ) अनेन नटप्रवेशः सूचितः। तथा च **भरतः**–असूचितस्य पात्रस्य प्रवेशो नैव युज्यत इति· भावेति सूत्रधारस्य सम्बोधनम्। तदुक्तं **दशरूपके**-भावोनुगेन सूत्री च मार्षेत्येतेन सोऽपि चेति।**अन्यत्रापि**-सूत्री नटेन भावेति तेनासौ मारिषेति चेति। **साहित्यदर्पणे तु** सूत्रधारं वदेद्भाव इति वैपारिपार्श्वक इति सामाजिका मन्मुखेनैव इदं वक्ष्यमाणं भवन्तमुदीरयन्ति कथयन्ति. भरताधिराजेति सूत्रधारसम्बोधनम् ( राजाहःसखिभ्य इति टच् । नस्तद्धित इति टिलोपः ) कर्णौ पिधायेत्यनेन नटवाक्यस्याश्राव्यत्वं सूचितम्।अहहेति खेदे असमञ्जसमयोग्यम्( संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्ध इत्यनेनासमञ्जसमित्यस्य द्विर्भावः ) **नटः** अधुना इदानीम्( अधुनेति सूत्रेणेदंशब्दादधुनाप्रत्यय इशादेशे यस्येतिलोपः ) आकर्णनीयं श्रोतव्यं ( आङ्पूर्वात्कर्णधातोरनीयर् ) **सूत्रधारः** इदमेव असमञ्जसमिति सम्बध्यते ज्यायसि ज्येष्ठे ( वृद्धस्य चेति ज्यादेशे ज्यादादीयस इति आत्वम् ) नन्दति सुस्थे कनीयसि अनुजे ( युवाल्पयोरिति कनादेशः ) राजपदमुपन्यस्यते प्रयुज्यते इति यत्तदिदमेवासमञ्जसं ननु निश्चयेन अथवा न नु इति भिन्ने पदे नुशब्दः प्रश्नार्थकः( नु पृच्छायां विकल्पे चेत्यमरः)तथा च इदमसमञ्जसं न नु नकिं इति प्रश्नः। अत्र श्लेषेणार्थान्तरमपि कविना सूचितम् । तथा हि- ज्येष्ठेऽग्रजे रामचन्द्रे सति भरतनाम्नि तदनुजे राजपदमुपन्यस्यत इति.

**नटः**—( विहस्य । ) कथं नाम्नैव गुणावगमः ।

**सूत्रधारः**—अथ किम् ।

गुणग्रामाभिसंवादि नामापि हि महात्मनाम् ।
यथा सुवर्णश्रीखण्डरत्नाकरसुधाकराः ॥ ५ ॥

अपि च । किमिदं गुणारामे कथं नाम्नैव गुणावगम इत्युच्यते । यः खलु रतिजनकस्य राज्ञः सदसि हरचापारोपणं नाम रूपकमभिनीय परितुष्टेन राज्ञा समर्पितां रङ्गविद्याधराख्यातिं प्रियामिव समासादितवान् ।

**नटः**—स पुनः संप्रति कं देशमभिनन्दयति ।

---

**नटः** कथमिति प्रश्ने तथा च नाम्नैव गुणावगमः न कृत्येनेति सोपहासः प्रश्नः अत एव विहस्येयुक्तम्। **सूत्रधारः** अथ किम् इदमङ्गीकारार्थकम् यत्सत्यमिति भावार्थमथ किं स्वीक्रियार्थकमिति **भरत** । तदेव दृष्टान्तेन द्रढयति **गुणग्रामेति** महात्मनां उन्नतचेतसाम् ( आन्महत इत्यात्वम् ) नामापि अपिना व्यवसायाद्यपि गुणानां ग्रामस्य समुदायस्य ( ग्रामः स्वरे संवसथे वृन्दे शब्दादिपूर्वकं इति विश्वः ) अभिसंवादि सूचकम् यथा येन प्रकारेण ( प्रकारवचन इति थाल् प्रत्ययः ) सुवर्णं सुष्ठु वर्णो यस्य श्रीयुतं खण्डं यस्य रत्नानामाकरः खनिः तथा सुधाया आकरः सुधायुताः करा यस्येति वा एतानि नामाक्षराण्यपि गुणान्बोधयन्ति तथा प्रकृतेऽपीति भावः । अर्थान्तरन्यासोऽलङ्कारः । उक्तिरर्थान्तरन्यासः स्यात्सामान्यविशेषयोरिति तल्लक्षणात् ५ गुणग्रामेति । श्लोकोक्तापिशब्दद्योत्यमर्थं पूरयन् नटोपहासोक्तिं खण्डयति अपि चेत्यादिना गुणारामेत्यारभ्यावगमेत्यन्तं नटानुवादः गुणारामे नाम्नैव गुणावगम इति किमिदमुच्यत इति काकुः तथा च नोच्यतामिति भावः । भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयत इति **दर्पणे** यः गुणाराम. रतिजनकस्य तन्नामकस्य राज्ञः सदसि परिषदि हरचापारोपणनामकं रूपकमभिनेयं " दृश्यं तत्राभिनेयं तद्रूपारोपात्तु रूपकमिति " **साहित्यदर्पणे** । अभिनीय प्रयुज्य परितुष्टेन सन्तुष्टेन राज्ञा समर्पितां दत्तां रङ्गविद्याधराख्यातिं प्रियामिव प्रणयिनीमिव समासादितवान् लब्धवान् एवञ्च व्यवसायेनापि गुणावगम इति भावः । अत्रापि जनकसभायां हरचापारोपणेन रामचन्द्रस्य सीताप्राप्तिरिति काव्यार्थः सूचितः ।

**सूत्रधारः**—केनापि दाक्षिणात्येन नटापसदेन ममैवेदं गुणारामेति नामेति वदता रङ्गविद्याधराख्यातिरपहृता । तदाकर्ण्य गुणारामस्तामेव दिशं प्रचलितः । अधुना च श्रुतमस्माभिः । यत्किल सुकण्ठनाम्ना गायकेन सह मैत्रीं विधाय दाक्षिणात्यानां भूभुजां सदसि तेन सह रङ्गसङ्गरमुपक्रान्तवानिति ।

**नटः**—अहो । महानुपक्रमः ।

**सूत्रधारः**—उचितमिदम् । यतः ।

कीर्तिं मृणालकमनीयभुजामनिद्र-
चन्द्राननां स्मितसरोरुहचारुनेत्राम् ।
ज्योत्स्नास्मितामपहृतां दयितामिव स्वां
लब्धुं न कः परमुपक्रममातनोति ॥ ६ ॥

तत्कथय कार्यम् ।

---

**सूत्रधारः** दाक्षिणात्येन ( दक्षिणापश्चात्पुरसस्त्यगिति त्यक्प्रत्यय· कितीचे-त्यादिवृद्धिः ) नटेष्वपसदेन नीचेन ( सप्तमीति योगविभागात्समास· सुप्सुपे-ति वा ) रङ्गविद्याधरेत्याख्यातिः प्रसिद्धिः अपहृतेति श्रुत्वा तामेव दक्षिणामिव प्रचलितः दाक्षिणात्यानां दक्षिणादिग्भवानां भूभुजां राज्ञां सदसि सभायां तेन नटापसदेन सह रङ्गसङ्गरं नृत्ययुद्धं उपक्रान्तवानारब्धवान् । एतेन रावणकृतसी-ताहरणं तदन्वेषणाय रामचन्द्रस्य दक्षिणदिग्गमनं सुग्रीवसख्यं रावणेन सह युद्धारम्भश्च सूचितः

**नटः** अहो इत्याश्चर्ये उपक्रम आरम्भः ।

**सूत्रधारः** **कीर्तिमिति**.मृणालान्येव कमनीया भुजा यस्या. अप्यदृश्यां सितां कीर्तिमकीर्तिञ्च ततोऽन्यथेति **वाग्भटालङ्कारोक्त**कविसङ्केतेन कीर्तेः शु-भ्रत्वात्तत्सदृशवस्तुनः तदवयवत्वारोपः दयितापक्षे तु मृणाले इव कमनीयौ सुं-न्दरौ भुजौ यस्येत्युपमितसमासः अनिद्रः पूर्णश्चन्द्र एवाननं यस्या अन्यत्र अ-निद्रचन्द्र इवाननं मुखं यस्याः स्मितानि प्रफुल्लानि सरोरुहाणि कमलान्येव चा-रूणि शोभनानि नेत्राणि यस्या अन्यत्र स्मिते प्रफुल्ले सरोरुहे इव चारुणी ने-त्रे यस्याः ज्योत्स्नैव चन्द्रिकैव स्मितमीषद्धसनं यस्याः ष्मिङ्धातोर्नपुंसके भावे क्तः, स्मितलक्षणन्तु “ईषत्प्रफुल्लितैर्गण्डैः कटाक्षैः सौष्ठवान्वितैः”। अदृष्टदन्तकुसुमैरुत्त-

नटः—इदमेव । यत्किल त्वयाऽभिनीयमानमवलोकयाम इति ।

प्रत्यङ्कमङ्कुरितसर्वरसावतार-
  नव्योल्लसत्कुसुमराजिविराजिबन्धम् ।
घर्मेतरांशुरिव वक्रतयातिरम्यं
  नाट्यप्रबन्धमतिमञ्जुलसंविधानम् ॥ ७ ॥

---

मानां स्मितं भवेत् । अन्यत्र ज्योत्स्नेव स्मितं यस्या (चन्द्रिका कौमुदी ज्योत्स्नेत्यमरः) स्वां स्वकीयां दयितामिव प्रियामिव कीर्तिं समाख्यामपहृतां परैरिति शेषः, लब्धुं प्राप्तुं परं श्रेष्ठं (परः श्रेष्ठारिदूरान्योत्तरे क्लीबमिति मेदिनी) उपक्रममुद्यमं कः नातनोति अपि त्वातनोत्येवेत्यभिप्रायः। अनेनापि रामचन्द्रेण सीतानयनार्थं कृतोद्योगस्य साधुत्वं ध्वनितम् । उपमारूपकयोः संसृष्टिरलङ्कारः। तद्रूपकमभेदो य उपमानोपमेययोः । सेष्टा संसृष्टिरेतेषां भेदेन यदि हस्थितिरिति लक्षणात् । वसन्ततिलकावृत्तम्। उक्ता वसन्ततिलका तभजा जगौग इति तल्लक्षणात्. ॥ ६ ॥ तत्कथय कार्यमिति । यत्किलाऽये भरताधिराजेति नटवाक्योक्तयच्छब्दोपात्तार्थं तच्छब्देन परामृशति। तदिति. सामाजिका यत्वन्मुखेनोदीरयन्ति तत्कार्यं कथयेत्यर्थः। अथवाऽस्त्वित्यध्याहारः, तथा च तच्छब्दस्य प्रक्रान्तार्थत्वात्तद्रामसम्बन्धि वचोऽस्तु तिष्ठतु, कार्यं सामाजिककार्यं कथयेत्यर्थः। नटः । प्रत्यङ्कमिति. अङ्कमङ्कमिति प्रत्यङ्कम् (अव्ययं विभक्तीति सूत्रेण वीप्सायामव्ययीभावः) अङ्कुरितः सञ्जाताङ्कुरः (तदस्य सञ्जातमितीतच्) सर्वरसानां शृङ्गारहास्यकरुणरौद्रवीरभयानकाः। बीभत्साद्भुतसंज्ञौ चेत्यष्टौ नाट्ये रसाः स्मृताः । निर्वेदस्थायिभावोस्ति शान्तोपि नवमो रस इत्युक्तानां अवतारोऽवतरणं यस्मिन्, अथवाऽङ्कुरितानां सर्वरसानामवतारो यस्मिन् (अवे तॄस्त्रोर्घञिति घञ्) सर्वरसाभिराममिति पाठे अङ्कुरितेन सर्वरसेनाभिरामं सुन्दरमित्यर्थः। नव्यानां नवीनानां उल्लसतां प्रफुल्लानां कुसुमानां प्रसूनानां राजिः पङ्क्तिः सेव विराजी भ्राजमानो बन्धः पदरचना यस्य, बन्धः पदरचनेति **वामनसूत्रवृत्तौ** तृतीयेऽधिकरणे । घर्मेतराः शीता अंशवो गभस्तयो यस्य स चन्द्रः, स इव वक्रतया कुटिलतयाऽतिरम्यं मनोहरं, अतिमञ्जुलानि अतिमनोज्ञानि संविधानानि वस्तुरचना यस्य तं, नाट्यस्याभिनेयस्य प्रबन्धं महावाक्यं रूपकमिति यावत्। त्वयाभिनीयमानमवलोकयाम इति पूर्ववाक्येन सम्बन्धः। उपमाछेकानुप्रासावलङ्कारौ । वसन्ततिलकावृत्तम् ॥ ७ ॥

**सूत्रधारः**—तत्कथं पुनरवधारणीयं किंनामधेयं नाटकमिति। (विमृश्य। सहर्षम्।) अये, कथमहं निजशिरःशेखरशयाल्वपि नीलोत्पलं, रत्नाकरचपलवीचिमालापरिसरे विचारयामि। नन्विहैव श्लोकेऽष्टपङ्क्तिक्रमाल्लिखिते स्फुटमस्ति 'प्रसन्नराघवं नाम' इति।

---

**सूत्रधारः तदिति**· यत्सामाजिकोद्दिष्टं मयाऽभिनीयं तत्किन्नामधेयं किमभिधेयं नाटकं इति, कथं केन प्रकारेण ( किमश्चेति थमुप्रत्ययः ) पुनरवधारणीयं निश्चेयम्। नाटकलक्षणन्तु **दर्पणे**--नाटकं ख्यातवृत्तं स्यात्पञ्चसन्धिसमन्वितम्। विलासर्द्ध्यादिगुणवद्युक्तं नानाविभूतिभिः। सुखदुःखसमुद्भूतिनानारसनिरन्तरम्। पञ्चादिका दशपरास्तत्राङ्काः परिकीर्तिताः। प्रख्यातवंशो राजर्षिर्धीरोदात्तः प्रतापवान्। दिव्योथ दिव्यादिव्यो वा गुणवान्नायको मतः। एक एव भवेदङ्गी शृङ्गारो वीर एव वा। अङ्गमन्ये रसाः सर्वे कार्यनिर्वहणेऽद्भुतम्। चत्वारः पञ्च वा मुख्याः कार्यव्यापृतपूरुषाः। गोपुच्छाग्रसमाग्रन्तु बन्धनं तस्य कीर्तितम् इति। विमृश्य विचार्य. सहर्षम् नाटकाभिधानाभीष्टलाभाद्धर्षः। अभिनयसूचकं कविवचनमेतत्। अये इति स्मरणे ( अये क्रोधविषादे च सम्भ्रमे स्मरणेऽपि चेति मेदिनी ) निजे स्वकीये शिरःशेखरे मस्तकपुष्पमालायां अत्र शिरःशब्दः सान्निध्यबोधकत्वेन न पौनरुक्त्यम्। उक्तञ्च **काव्यप्रकाशे**—कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः। सन्निधानादिबोधार्थमिति। शयाल्वपि सुप्तमपि। लक्षणया स्थितमपीत्यर्थः। ( स्पृहिग्रहीति सूत्रे शीङो वाच्य इति वार्तिकेनालुच्प्रत्ययः ) नीलोत्पलं नीलकमलं रत्नाकरस्योदधेश्चपलवीचिमालायाश्चञ्चलतरङ्गपरम्पराया· परिसरे पर्यन्तप्रदेशे विचारयामि अन्वेषयामि तन्न्यायमनुसरामीति भाव.। नन्विति नटानुनयामन्त्रणे ( प्रश्नावधारणाऽनुज्ञाऽनुनयामन्त्रणे नन्वित्यमर· ) इहैव अस्मिन्नेव ( इदमोह इति हप्रत्ययः ) श्लोके पद्ये क्रमात्सप्ताक्षरक्रमादष्टपाङ्क्ति यथास्यात्तथा लिखिते स्फुटं व्यक्तमस्ति। आद्याक्षरग्रहणेनेति भावः। प्रसन्न-

---

१ कथं करस्थमेव चामीकरं रथ्यायां मृगयमाणस्य सरणिमनुसृतोस्मीत्यधिकः पाठः।

**नटः**—( तमेव श्लोकं पठित्वा । सहर्षम् । ) अहो, देव्याः कविकुलकुमुदविकाशचन्द्रिकायाः प्रसादमहिमा सरस्वत्याः । यत्प्रसादादेवंविधाः कवीनां विचित्रमधुराः सूक्तयः समुल्लसन्ति ।

**सूत्रधारः**—एवमेतत् । नन्वनेनैव कविनोक्तम्—

वाणि त्वत्पदपद्मरेणुकणिका या स्वान्तभूमिं सतां
संप्राप्ता कवितालता परिणता सैवेयमुज्जृम्भते ।
त्वत्कर्णेऽपि चिराय यत्किसलयं सूक्तापदेशं शिरः-
कम्पभ्रंशितपारिजातकलिकागुच्छे विधत्ते पदम् ॥ ८ ॥

---

रावबं नामेतीति. उक्तञ्च **साहित्यदर्पणे** । नाम कार्यं नाटकस्य गर्भितार्थप्रकाशकमिति । **नटः** । अहो इति विस्मये । कविकुलमेव कुमुदं कैरवं तस्य विकाश उन्मीलने चन्द्रिकेव तस्या सरस्वत्याः प्रसादमहिमा, यस्याः सरस्वत्याः प्रसादादनुग्रहादेवंविधा एतादृशा विचित्रमधुरा वैचित्र्यमाधुर्ययुक्ता, अन्तर्निगूढाभिप्रायेण वैचित्र्यम् समुल्लसन्ति प्रकाशन्ते । **सूत्रधार**. । एवंशब्दोऽङ्गीकारे, एतत्त्वदुक्तमङ्गीकृतमित्यर्थः । ( शक्ताविवं प्रकारे स्यादङ्गीकारावधारण इति मेदिनी ) तत्र कविसम्मतिमेव दर्शयति नन्वनेनैवेत्यादिना । कविना जयदेवेन । **वाणीति**. हे वाणि भारति, या तव पदपद्मयोश्चरणकमलयोरेणुरेव कणिका धान्यांश बीजमिति यावत् । कणशब्दादल्पार्थे कन् । क्वचित्स्वार्थिका प्रत्ययाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति परिभाषया पुंस्वाभावः ( कणोऽतिसूक्ष्मे धान्यांश इति मेदिनी ) सतामभ्यर्हितानां स्वान्तभूमिं चेतःक्षेत्रं संप्राप्ता सैव रेणुकणिकैव कवितालता कवित्ववल्ली परिणता सती उज्जृम्भत उदेति । सूक्तस्य सुवचसोऽपदेशो व्याजो यस्य ( व्याजोऽपदेशो लक्ष्यश्चेत्यमरः) तत् यस्याः कवितालतायाः किसलयं पल्लवः शिरस उत्तमाङ्गस्य कम्पेन चलनेन कविताकर्णनानन्दादिति भावः । भ्रंशितोऽधःपातितः सञ्जातभ्रंशो वा पारिजातस्य तदाख्यस्य स्वर्द्रोः कलिकायाः कोरकस्य गुच्छस्तबको यस्मात्तस्मिन् । अभीप्सितप्रदातृपारिजातकलिकापतनशङ्कामप्यनादृत्य कविताश्रवणे सरस्वती शिरश्चालयतीति भावः । तादृशे त्वत्कर्णे तव श्रवणे

( पुनर्विभाव्य । ) मम पुनः कविकमलसद्मनि मुनौ वल्मीकजन्मनि मनः कौतुकितं, यस्यैकमपि वदनारविन्दमासाद्य चतुर्मुखकमलवनविहारविनोदमनुभवति भारती नाम राजहंसी ।

**नटः**—एवमेतत् । त्रिभुवनाभोगेऽपि हि

भास्वद्वंशवतंसकीर्तिरमणीरङ्गप्रसङ्गस्वन-
द्वादित्रप्रथमध्वनिर्विजयते वल्मीकजन्मा मुनिः ।
पीत्वा यद्वदनेन्दुमण्डलगलत्काव्यामृताब्धेः किम-
प्याकल्पं कविनूतनाम्बुदमयी कादम्बिनी वर्षति ॥९॥

---

पदं स्थानं चिराय बहुकालं विधत्ते करोति । चिरायेत्यनेन तदपेक्षया मधुरश्रवणाभावाच्छिरश्चालनाभावेन सूक्तपल्लवं कर्णान्न भ्रष्टमिति भावः । अत्र रूपकवृत्त्यनुप्रासालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥८॥ कविरेव कमलसद्मा ब्रह्मा तस्मिन् । मयूरव्यंसकादित्वात्समासः । वल्मीकाद्वामलूराज्जन्म जनिर्यस्य ( वामलूरश्च नाकुश्च वल्मीकमित्यमरः ) तस्मिन्मुनौ प्राचेतसे । उक्तञ्चाध्यात्मरामायणेऽरण्यकाण्डे षष्ठाध्याये । सर्वसङ्गविहीनस्य वल्मीकोऽभून्ममोपरि । ततो युगसहस्रान्ते ऋषयः पुनरागमन् । मामूचुर्निष्क्रमस्वेति तच्छ्रुत्वा तूर्णमुत्थितः । वल्मीकान्निर्गतश्चाहं नीहारादिव भास्करः । मामप्याहुर्मुनिगणा वाल्मीकिस्त्वं मुनीश्वर । वल्मीकात्संभवो यस्माद्द्वितीयं जन्म तेऽभवदिति । मनः कौतुकितं कौतुकयुक्तम् । यस्य वाल्मीकिरूपब्रह्मण एकमपि वदनारविन्दं मुखकमलमासाद्य प्राप्य, भारती नाम यस्या एतादृशी राजहंसी, चत्वारि मुखान्येव कमलानि तेषां वनं काननं तस्मिन्विहारविनोदं विहरणकौतुकं ( कौतूहलं विनोदः स्यादित्यभिधानरत्नमालायाम् ) अनुभवति । **नटः** । एतत्पूर्वोक्तमेव निश्चितम् । हि यस्मात् त्रिभुवनाभोगेऽपि । **भास्वदिति.** भास्वतः सूर्यस्य ( भास्वद्विवस्वत्सप्ताश्वेत्यमरः ) यो वंशोऽन्वयः तस्य वतंसः शिरोभूषणं रामचन्द्र इत्यर्थः ( वतंसस्तु पुमान्कर्णपूरशेखरयोरपीति मेदिनी ) ( वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोरित्यकारलोपः ) तस्य कीर्तिरेव रमणी तस्या रङ्गस्य नृत्यस्य प्रसङ्गेऽवसरे स्वनत् शब्दायमानं वादित्रं वीणामुरजवंशकांस्यतालादि चतुर्विधं वाद्यम् ।(ततं वीणादिकं वाद्यमानद्धं मुरजादिकम् । वंशादिकं तु सुषिरं कांस्यतालादिकं घनम् । चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम् इत्यमरः । वादित्रातोद्यनामकमित्यत्र वादित्रनामकमातोद्यनामकं चेत्यर्थः । तथा च

(विमृश्य ।) मम तु रामचन्द्र एव निर्भरमानन्दितोऽयं चित्तचकोरः । यत्कीर्तिचन्द्रिकाचुम्बितोऽयं वाल्मीकेरपि सारस्वतसागरः समुल्ललास ।

**सूत्रधारः**—इत्थमिदम् ।

चन्द्रे च रामचन्द्रे च नारीणां च दृगञ्चले ।
नीलोत्पलसुहृत्कान्तौ कस्य नामोदते मनः ॥ १० ॥

अपि च ।

---

**भरत** ततश्चैवावनद्धञ्च घनं सुषिरमेव च । चतुर्विधन्तु विज्ञेयमातोद्यं लक्षणान्वितमिति । तदिव प्रथमध्वनि प्रथमोत्पन्नच्छन्दोरूपध्वनिर्यस्य स वल्मीकजन्मा मुनिर्वाल्मीकिर्विजयतेऽत्युत्कर्षेण वर्तते ( विपराभ्याञ्जेरित्यात्मनेपदम् )। यस्य वाल्मीकिमुनेर्वदनेन्दुमण्डलाद्गलद्यत्काव्यमेवामृतं तस्याब्धेः समुद्रस्य किमपि अनिर्वचनीयमित्यर्थः । पीत्वा कवय एव नूतनाम्बुदा मेघाः प्रकृता यस्यां सा ( तत्प्रकृतवचने मयडिति मयट् । टिड्ढाणञिति ङीप्) कादम्बिनी मेघमाला ( कादम्बिनी मेघमालेत्यमरः ) आकल्पं कल्पपर्यन्तम् ( आङ्मर्यादाभिविध्योरित्यव्ययीभावः ) वर्षति अर्थात्कवितामृतमिति भाव । ( वृषधातोः प्रसिद्धकर्मकत्वादकर्मकत्वम् तदुक्तम्- धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसङ्ग्रहात् । प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रियेति ) एतेन वाल्मीकेरादिकवित्वमितरकवीनां तन्मार्गानुयायित्वं च सूचितम् । तेनादिकविवर्णितो रामचन्द्र एवेतरैरपि कविभिर्वर्णनीय इति ध्वनितम् । रूपकालङ्कारः शार्दूलविक्रीडितं वृत्तम् ॥ ९ ॥ मम तु तुशब्दः समुच्चये ममापीत्यर्थः ( तु पादपूरणे भेदे समुच्चयेऽवधारण इति मेदिनी ) अयं चित्तमेव चकोरो जीवंजीवः, ( जीवञ्जीवश्चकोरक इत्यमरः ) राम एव चन्द्रस्तस्मिन्नेव, निर्भरं यथा तथानन्दितः सन्तुष्ट । यस्य रामचन्द्रस्य कीर्तिचन्द्रिकया यशःकौमुद्या चुम्बितः स्पृष्टः हरशिरश्चुम्बिनीविच्छटायामिति **भर्तृहरि** । अङ्गारचुम्बितमिव व्यथमानमास्त इति **मालतीमाधवे भवभूतिः** चुबि **वक्त्रसंयोग** इति धातोः कर्मणि क्तः । सरस्वत्या आगतं, सम्बन्धि वा सारस्वतं काव्यं (तत आगतः, तस्येदमिति वाण्) तदेव सागरोऽकूपारः समुल्ललास ववृधे। **सूत्रधारः चन्द्रे चेति**· चन्द्रे इन्दौ रामचन्द्रे दाशरथौ तथा नारीणामङ्गनानां नीलोत्पलस्येन्दीवरस्य ( इन्दीवरञ्च नीलेऽस्मिन्नित्यमरः ) सुहृत्सदृशी, चन्द्रपक्षे तु सदृशी सखी कान्तिर्यस्य, सुहृत्प्रतिपक्षादिशब्दाः

झटि<sup>१</sup>ति जगतीमागच्छन्त्याः पितामहविष्टपा-
न्महति पथि यो देव्या वाचः श्रमः समजायत।
अपि कथमसौ मुञ्चेदेनं न चेदवगाहते
रघुपतिगुणग्रामश्लाघासुधामयदीर्घिकाम्॥ ११॥

नटः—कथं पुनरमी कवयः सर्वे रामचन्द्रमेव वर्णयन्ति।

**सूत्रधारः**—नायं कवीनां दोषः। यतः।

स्वसूक्तीनां पात्रं रघुतिलकमेकं कलयतां
कवीनां को दोषः स तु गुणगणानामवगुणः।
यदेतैर्निःशेषैरपरगुणलुब्धैरिव जग-
त्यसावेकश्चक्रे सततसुखसंवासवसतिः॥ १२॥

---

सादृश्यबोधका इति **काव्यप्रदीपोद्योते** स्पष्टम्। तस्मिंस्त्रयेऽपि कस्य मनो नामोदते न हृष्यति, अपि तु सर्वेषामेव हृष्यतीति काका ध्वनितम्. श्लेषदीपकालङ्कारौ। श्लेषः स वाक्य एकस्मिन्यत्रानेकार्थता भवेदिति। सकृद्वृत्तिस्तु धर्मस्य प्रकृताऽप्रकृतात्मनाम्। सैव क्रियासु बह्वीषु कारकस्येति दीपकमिति च तयोर्लक्षणात्। श्लोकश्छन्दः। श्लोके षष्ठं गुरु ज्ञेयं सर्वत्र लघु पञ्चमम्। द्विचतुष्पादयोर्ह्रस्वं सप्तमं दीर्घमन्ययोरिति तल्लक्षणम्। **झटितीति.** पितामहविष्टपात् ब्रह्मलोकात् झटिति शीघ्रं जगतीं भुवमागच्छन्त्या देव्या वाचः सरस्वत्या महति विशाले पथि मार्गे यः श्रमः खेदः खेदो रत्यध्वगत्यादेः श्वासनिद्रादिकृच्छ्रम इति **साहित्यदर्पणे** समजायत प्रादुरभूत्। असौ सरस्वती रघुपते रामचन्द्रस्य गुणग्रामस्य गुणसमुदायस्य श्लाघा प्रशंसा (श्लाघा स्त्रियां प्रशंसायामिति मेदिनी) सैव सुधामयदीर्घिकाऽमृतप्रचुरवापी तां नावगाहते चेन्नप्रविशेच्चेदेनं श्रमम् (इदमोन्वादेश इति सूत्रेणान्वादेशविषयत्वादेनादेशः। किञ्चित्कार्यं विधातुमुपात्तस्य कार्यान्तरं विधातुं पुनरुपादानमन्वादेशः) कथमपि केनापि प्रकारेण मुञ्चेत्त्यजेत् अपिः प्रश्ने (अपि संभावनाप्रश्नशङ्कागर्हासमुच्चय इति मेदिनी) रूपकालङ्कारः। हरिणी वृत्तम्। रसयुगहयैर्न्सौ म्रौ स्लौ गो यदा हरिणी तदेति तल्लक्षणात्। **सूत्रधारः स्वसूक्तीनामिति.** स्वासां स्वकीयानां सूक्तीनां व्याहाराणां एकं रघूणां तिलकमिव विशेषकमिव तं, पात्रं भाजनं कलयतां जानतां कवीनां

---

१ झगितीति पाठः।

अपि च। भोः,

बीजं यस्य चिरार्जितं सुचरितं प्रज्ञा नवीनोऽङ्कुरः
काण्डः पण्डितमण्डलीपरिचयः काव्यं नवः पल्लवः।
कीर्तिः पुष्पपरम्परा परिणतः सोऽयं कवित्वद्रुमः
किं वन्ध्यः क्रियते विना रघुकुलोत्तंसप्रशंसाफलम् ॥ १३ ॥

नट·—कः पुनरस्य कविः।

---

को दोषः नकोऽपीत्यर्थः। स त्ववगुणो दोषः, तुरवधारणे। गुणगणानां गुणसमुदायानामेवं, यद्यस्माज्जगति नि शेषैरखिलैरेतैर्गुणगणैर्गुणग्रामैः परेषां गुणैर्लब्धा न भवन्ति तथा तादृशैरिवैक एवासौ रघुतिलक· सततं सर्वदा सुखेन संवासस्य स्थितेर्वसतिर्गृहं (वसतिर्गृहयामिन्योरिति विश्व) चक्रे कृतः (कृञः कर्मणि लिट्) अत्र गुणनिन्दया रामचन्द्रस्तुत्यभिव्यक्त्या व्याजस्तुतिरलङ्कार·। व्याजस्तुतिर्मुखे निन्दा स्तुतिर्वा रूढिरन्यथेति लक्षणम्। तस्य, गुणलुब्धैरिवेत्यत्र हेतूत्प्रेक्षायाश्च सुखसंवासवसतिरित्यत्रत्यरूपकस्याङ्गत्वादङ्गाङ्गिभावरूपः सङ्करोऽलङ्कारः। अविश्रान्तिजुषामेषामङ्गाङ्गित्वन्तु संकर इति तल्लक्षणात्। शिखरिणी वृत्तम्। रसै रुद्रैश्छिन्ना यमनसभला गः शिखरिणीति तल्लक्षणम्। स्वैरङ्गैश्चापि वीथ्यङ्गैः प्रकुर्यादामुखं बुध इति **मातृगुप्ताचार्योक्ते·** वीथ्यङ्गान्यामुखाङ्गत्वात्प्रोच्यन्तेऽत्रैव तानि त्विति **दशरूपकोक्तेश्चा**त्र मृदवं नाम वीथ्यङ्गमुक्तम्। तल्लक्षणन्तु—दोषा गुणा गुणा दोषा यत्र स्युर्मृदवं हि तादिति **दर्पणोक्तेः** ॥ १२ ॥ **बीजमिति.** यस्य कवित्वद्रुमस्य चिरार्जितं बहुकालसंपादितं सुचरितं पुण्यं कवित्वप्रयोजकजन्मान्तरीयदेवताराधनादिजन्यः संस्कारः बीजं, नवीनोऽङ्कुरः नूतनोद्भेदः प्रज्ञा बुद्धिः, पण्डितमण्डलीपरिचयो विद्वत्समूहसंस्तवः (संस्तवः स्यात्परिचय इत्यमरः) काण्डः स्कन्धः, (काण्डः स्तम्भे तरुस्कन्ध इति मेदिनी.) काव्यं कविकर्म नवो नूतन· पल्लवः किसलयं, कीर्तिर्यशः पुष्पपरम्परा पुष्पपरिपाटी, (परम्परा परिपाट्यां हिंसासंतानयोरपीति मेदिनी.) सोऽयं परिणतः कवित्वद्रुमः रघुकुलोत्तंसस्य प्रशंसा स्तुतिः सैव फलं तेन विना (पृथग्विनानानाभिरिति द्वितीया) वन्ध्योऽफलः (वन्ध्योऽफलोऽवकेशी चेत्यमरः) क्रियते किम्। **अप्पदीक्षितमते** रत्नावलीरूपकयोः संसृष्टिः। **प्रकाशकृन्मते** तु रत्नावल्या अस्मिन्नेवान्तर्भावात्साङ्गरूपकमलङ्कारः

**सूत्रधारः**—(सप्रणयकोपम्।)

विलासो यद्वाचामसमरसनिष्यन्दमधुरः
कुरङ्गाक्षीबिम्बाधरमधुरभावं गमयति।
कवीन्द्रः कौण्डिन्यः स तव जयदेवः श्रवणयो-
रयासीदातिथ्यं न किमिह महादेवतनयः॥ १४॥

---

तद्रूपकमभेदो य उपमानोपमेययोः। समस्तवस्तुविषयं श्रौता आरोपिता यदा। श्रौता आर्थाश्च ते यस्मिन्नेकदेशविवर्ति तत्। साङ्गमेतदिति तल्लक्षणात्। शार्दूलविक्रीडितं वृत्तम्॥ १३॥ **सूत्रधारः विलास इति.** यस्य वाचां वचनानां असमा विषमा नवेत्यर्थः। ये रसाः शृङ्गारादयस्तेषां निष्यन्देन प्रस्रवणेन मधुरः स्वादुः (ऊषसुषिमुष्कमधोर इति रप्रत्ययः) अथवा असमा असदृशा रसा इत्यर्थः शेषं पूर्ववत्। विलासः लीला, कुरङ्गस्याक्षिणी इवाक्षिणी यस्य। उष्ट्रमुखवत्समासः। अथवा कुरङ्ग इवाक्षिणी यस्या इति बहुव्रीहिः। अत्र कुरङ्गशब्दः कुरङ्गाक्ष्णि लाक्षणिकः। अस्मिन्पक्षे उत्तरपदलोपस्यानावश्यकत्वम्। बहुव्रीहौ सक्थ्यक्ष्णोरिति समासान्तः षच्, षित्त्वान्ङीष्) तस्या बिम्बमिवाधरोऽधरोष्ठस्तस्य मधुरभावं माधुर्यं गमयति प्रापयति, जनमिति शेषः, ण्यन्तस्य गमेर्द्विकर्मकत्वात्। बिम्बाधरमधर-भावं गमयतीति पाठः साधीयान्। तथा च बिम्बाधरं अधरभावं नीचभावं गमयतीत्यर्थः। अस्मिन्पक्षे जनमिति पदाध्याहारक्लेशोऽपि परिहृतः। इह अस्मिञ्जगति स महादेवतनयः महादेवसूनुः कौण्डिन्यः कौण्डिन्यगोत्रोद्भवः कवीन्द्रो कविश्रेष्ठो जयदेवस्तव श्रवणयोः श्रोत्रयोरातिथ्यमतिथित्वं नाया-सीत्किम् नागतः किम्। उपमाश्लेषयोः संसृष्टिरलङ्कारः। शिखरिणी छन्दः। अनेन भारतीवृत्तेः प्ररोचनानामकमङ्गमुपक्षिप्तम्, कवेर्नामगोत्रे च दर्शिते। ऋतुवर्णनस्य प्रायिकत्वात्तन्न कृतम्। तथा च **साहित्यदर्पणे**—रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः। रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत्। ऋतुञ्च कञ्चित् प्रायेण भारतीं वृत्तिमाश्रित इति। भारतीवृत्तिलक्षणं तु तत्रैव—भारती संस्कृतप्रायो वाग्व्यापारो नटाश्रयः। तस्याः प्ररोचना वीथी तथा प्रहसनामुखे। अङ्गान्यत्रोन्मुखीकारः प्रशंसातः प्ररोचनेति॥ १४॥

---

१ मधुरभावमितिपाठः।

अपि च ।

लक्ष्मणस्येव यस्यास्य सुमित्राकुक्षिजन्मनः ।
रामचन्द्रपदाम्भोजे भ्रमद्भृङ्गायते मनः ॥ १५ ॥

नटः—कथमविदितचन्द्रमसश्चकोरकिशोरकस्य चरितमनुसृतोऽस्मि । तेन हि मम हस्ते निजनाटकमर्पयित्वेदमुक्तोऽस्मि—'रक्षणीयमिदं सूक्तिरत्नं चौरेभ्यः' इति । स च मया सविनयमिदमुक्तः—

कर्णे निधाय च पिधाय च कण्ठपीठे
धृत्वा च मूर्धनि नते हृदये च कृत्वा ।
चोरापहारचकितेन चिरं मयैष
त्वत्सूक्तिमौक्तिकगणः परिरक्षणीयः ॥ १६ ॥

---

**लक्ष्मणस्यैवेति.** सुमित्रायास्तदभिधाया मातुः कुक्षेरुदरात् जन्म जनिर्यस्य यस्यास्य प्रसिद्धस्येत्यर्थः । यच्छब्दस्य निकटे स्थित इदंशब्दः प्रसिद्धिं परामृशतीति **काव्यप्रकाशे** सप्तमोल्लासे प्रतिपादितम् । मनश्चित्तं, लक्ष्मणस्य रामावरजस्येव रामचन्द्रपदाम्भोजे रामचरणकमले भ्रमन्यो भृङ्गो मधुकरस्तद्वदाचरति ( कर्तुः क्यङिति क्यङ्, ङित्वादात्मनेपदम् ) लक्ष्मणोपि सुमित्रायां दशरथादजनीति **रामायणे** बालकाण्डे । श्लेषोपमारूपकालङ्काराः । श्लोकश्छन्दः ॥ १५ ॥ **नटः** कथमविदितोऽज्ञातश्चन्द्रमा येन तादृशस्य चकोरकिशोरकस्य जीवंजीवशिशोश्चरितमाचरणमनुसृतोस्मि अनुकृतवानस्मि। अत्यन्तपरिचितस्य चन्द्रमसः विस्मरणं सर्वथा असंभाव्यमपि चकोरस्य यथा संपद्येत तथेदानीमविरलपरिचितस्यास्य कवेर्विस्मरणं ममाभूदिति भावः । स जयदेवः, इदमनन्तरश्लोके वक्ष्यमाणं ( उक्त इति गौणकर्मणि क्तः । गौणे कर्मणि दुह्यादेरित्युक्तेः ) **कर्णे निधायेति.** कर्णे निधायेत्यनेन श्राव्यत्वं, कण्ठपीठे इत्यनेन गानयोग्यत्वं, नते मूर्धनि इत्यनेनादरातिशयः, हृदये च कृत्वेत्यनेन मनसि विचारार्हसूक्ष्मयुक्त्यादिविषय घटित इति सर्वतोऽपि रमणीयत्वं नाटकस्येति सूचितम्। सूक्तिरेव मौक्तिकगणः परिरक्षणीयः । मौक्तिकगणोपि कर्णकण्ठमूर्धादिप्रदेशेषु संस्थाप्य चोराद्रक्ष्यते तथा सूक्तिगणोपीति भावः । रूपकपर्यायालङ्कारौ एकं क्रमेणानेकस्मिन्पर्याय इति लक्षणात् । वसन्ततिलका वृत्तम् ॥ १६ ॥

**सूत्रधारः**—केयमलीकशङ्का तस्य कवेः ।

सुललितवदनामुदारवृत्तां
कृतिमथवा युवतिं परस्य हृत्वा ।
तटमपि परमर्णवस्य गत्वा
वद कतरः सुखभाजनं जनः स्यात् ॥ १७ ॥

**नटः**—एवमेतत् । नन्वयं प्रमाणप्रवीणोऽपि श्रूयते । तदिह चन्द्रिकाचण्डातपयोरिव कवितातार्किकत्वयोरेकाधिकरणतामालोक्य विस्मितोऽस्मि ।

**सूत्रधारः**—क इह विस्मयः ।

येषां कोमलकाव्यकौशलकलालीलावती भारती
तेषां कर्कशतर्कवक्रवचनोद्गारेऽपि किं हीयते ।
यैः कान्ताकुचमण्डले कररुहाः सानन्दमारोपिता-
स्तैः किं मत्तकरीन्द्रकुम्भशिखरे नारोपणीयाः शराः ॥ १८ ॥

---

**सूत्रधारः**—तस्य कवेः केयमलीकस्यापहाररूपाप्रियस्य शङ्का संशयः ( अलीकं त्वप्रियेऽनृत इत्यमरः ) **सुललितेति.** शोभनं ललितं शृङ्गारचेष्टादि यस्मिन् । वाग्वेषयोर्मधुरता तद्वच्छृङ्गारचेष्टितं ललितमिति दर्पणे । तादृशं वदनमाननं यस्याः । अन्यत्रातिसुन्दरं वदनं वचनं यस्याम्(वदेर्भावे ल्युट्)उदारं वृत्तं वर्तनं यस्याः । अन्यत्रोदाराणि गम्भीराणि वृत्तानि छन्दःशास्त्रोक्तानि यस्याम् । एतादृशीं परस्य उत्तमस्य, अन्यस्य वा पुरुषस्य, कवेर्वा, कृतिं काव्यं युवतिं कामिनीं वा हृत्वा चोरयित्वा, समुद्रस्य रत्नाकरस्य परन्तटमुत्तरतीरं गत्वापि कतरो नरः ( किंयत्तदोर्निर्धारण इति डतरच् ) कृतियुवतिहर्त्रोरन्यतरः सुखभाजनं हर्षभाक् स्याद्भवेत् वद, न कोपि भवेदितिभावः । अनेन रावणः सीतां हृत्वा समुद्रमुत्तीर्य गतोपि महत्सङ्कटमापेति सूचितम् । श्लेषालङ्कारः नानार्थसंश्रयः श्लेषो वर्ण्यावर्ण्योभयाश्रय इति लक्षणात् । पुष्पिताग्रा वृत्तम् । अयुजि नयुगरेफतो यकारो युजि च नजौ जरगाश्च पुष्पिताग्रेति हि तल्लक्षणम् । **नटः** प्रमीयत अनेनेति प्रमाणं न्यायादिशास्त्रम् । **सूत्रधारः येषामिति.** येषां कवीनां कोमलस्य मृदुलस्य काव्यस्य यत्कौशलं कुशलता ( हायनान्तयुवादिभ्य इत्यण् ) सैव कला शिल्पं सैव लीलाऽस्या अस्तीति तादृशी भारती अस्तीत्यध्याहारः । तेषां कर्कशेन कठोरेण तर्केण गौतमादिप्रणीतशास्त्रेण वक्राणां कुटिलानां वचनानामुद्गारेपि उपन्यासेऽ-

**नटः**—अपि नाम स्वयमेव कविताकोविदाः पारिषदा अस्य सूक्तिभिर्विनोदिष्यन्ते ।

**सूत्रधारः**—नन्वनेनैवोक्तम्—

अपि मुदमुपयान्तो वाग्विलासैः स्वकीयैः
परभणितिषु तोषं यान्ति सन्तः कियन्तः ।
निजघनमकरन्दस्यन्दपूर्णालवालः
कलशसलिलसेकं नेहते किं रसालः ॥ १९ ॥

**नटः**—अहो अस्य कवेः सूक्तीनां सरलता कोमलता च ।

**सूत्रधारः**—क्वचिद्वक्रता कठिनता च ।

---

पि किं ह्रीयते न किमपीति भावः । तदेव दृष्टान्तेन निर्दिशति **यैरिति.** यैः कान्ताकुचमण्डले कामिनीस्तनप्रदेशे ( मण्डलं परिधौ कोठे देश इति मेदिनी ) कररुहाः नखराः सानन्द सहर्षमारोपिताः स्थापितास्तैरेव मत्तानां मदयुतानां करीन्द्राणां कुम्भशिखरेषु शरा बाणा नारोपणीयाः किम् अपि त्वारोपणीयाएवेति भाव· । दृष्टान्तालङ्कारः चेद्बिम्बप्रतिबिम्बत्वं दृष्टान्तस्तदलङ्कृतिरिति तल्लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ १८ ॥ **नटः** ये स्वयमेव कवितायाः कोविदा ज्ञातार· ( ज्ञो दोषज्ञः कोविदः स्यादित्यभिधानरत्नमालायाम् ) अर्थात्कर्तुमित्यर्थः । पारिषदाः सभ्या अस्य जयदेवकवेः । **सूत्रधारः अपि मुदमिति** स्वस्येमे स्वकीयास्तैः ( गहादित्वाच्छप्रत्यये स्वस्य चेति गणसूत्रेण कुगागमः ) वाग्विलासै· काव्यरूपवाग्लीलाभिर्मुदं हर्षमुपयान्त· प्राप्नुवन्तोऽपि परभणितिषु परकृतकाव्येषु कियन्त ( किंशब्दात्किमिदंभ्यामिति वतुपि वस्य घादेशे तस्येयादेशे यस्येति लोपे उगित्वान्नुम् ) सन्तः साधवः तोषं प्रमोदं यान्ति । निजेन स्वकीयेन घनमकरन्दस्यन्देन सान्द्रपुष्परसप्रस्रवणेन पूर्णं पूरितमालवालमावापो यस्य स रसालः सहकारवृक्षः कलशसलिलस्य घटोदकस्य सेकं सेचनं नेहते किम् नेच्छति किम् अपि त्विच्छत्येवेति भावः । दृष्टान्तालङ्कारः । मालिनी वृत्तम् ननमयययुतेयं मालिनी भोगिलोकैरिति तल्लक्षणात् ॥ १९ ॥ **नटः** अहो इत्याश्चर्ये अस्य कवेः प्रबन्धकर्तुः सूक्तीनां मधुरोक्तीनां सरलता सारल्यं कोमलता मृदुता च । **सूत्रधार·** वक्रता कुटिलत्वं कठिनता दुर्बोधत्वं च

**नटः**—कथमेते अपि रमणीये।

**सूत्रधारः**—अथ किम्।

निन्द्यन्ते यदि नाम मन्दमतिभिर्वक्राः कवीनां गिरः
स्तूयन्ते न च नीरसैर्मृगदृशां वक्राः कटाक्षच्छटाः।
तद्वैदग्ध्यवतां सतामपि मनः किं नेहते वक्रतां
धत्ते किं न हरः किरीटशिखरे वक्रां कलामैन्दवीम् ॥ २० ॥

अपि च।

अमृतजलधेः पायंपायं पयांसि पयोधरः
किरति करकास्ताराकारा यदि स्फटिकावनौ।
तदिह तुलनामानीयन्ते क्षणं कठिनाः पुनः
सततममृतस्यन्दोद्गारा गिरः प्रतिभावताम् ॥ २१ ॥

---

**नटः** एते अपीत्यत्र (ईदूदेद्द्विवचनम् इति प्रगृह्यसंज्ञाया प्रकृतिभावा न्न सन्धिकार्यम्) एते वक्रताकठिनते। **सूत्रधारः** अथ किं स्वीक्रियार्थकमिति भरत। **निन्द्यन्त** इति नामेति कुत्सायाम् (नाम प्राकाश्यसम्भाव्यक्रोधोपगमकुत्सित इत्यमरः) यदि इति पक्षान्तरे. (पक्षान्तरे चेद्यदि चेत्यमरः) मन्दमतिभिरज्ञैः कवीनां वक्राः कुटिला गिरः उक्तयः निन्द्यन्ते तथा नीरसैररसिकैः मृगदृशां हरिणाक्षीणां वक्राः कटाक्षाणामपाङ्गदर्शनानां छटाः समूहाः। **शिशुपालवधे** प्रथमसर्गे सटाछटाभिन्नघनेन बिभ्रतेत्यत्र **मल्लिनाथेन** छटाः समूहा इति व्याख्यातम्। यदि न स्तूयन्ते तथापि तासु कविवक्रोक्तिनारीकटाक्षच्छटासु वैदग्ध्यं चातुर्यं तदस्ति येषां तेषां चतुराणा सतां साधूनामपक्षपातिनामिति भावः। मनो वक्रतां किं नेहते नेच्छतीति प्रश्नः, हरः शङ्करः किरीटशिखरे किरीटाग्रे, वक्रामैन्दवीमिन्दुसम्बन्धिनीं कलां षोडशं भागं न धत्ते किम् अपि तु धत्त एव अनेनास्य कविता सत्हृदयरञ्जनीति दर्शितम् अवज्ञालङ्कार, ताभ्यां तौ यदि न स्यानामवज्ञालङ्कृतिस्तु सेति लक्षणात्। शार्दूलविक्रीडितं वृत्तम् ॥ २० ॥

**अमृतेति** अमृतजलधेस्सुधासागरस्य पयांसि जलानि पयोधरो मेघ. पायंपायं पीत्वापीत्वा (आभीक्ष्ण्ये णमुल् चेति णमुल्, नित्यवीप्सयोरित्यनेन द्विर्भावः) यदि स्फाटिकस्य तन्नामकशिलाया अवनौ भूमौ ताराणां नक्षत्राणामाकार इव आकार आकृतिर्यासाम् ताः करकाः वर्षोपलान् किरति वर्षति ततदा, यदि सखी लोलापिनि गच्छसि तत् किं त्वदीयं मे इति काव्यप्रकाशटीकायाम् वैद्यनाथः

नटः—नूनमस्य कवेः किमपि कौतुकप्रमोदमेदुरमन्तःकरणं यदेवंविधाः सरसशीतलाः सूक्तयः समुल्लसन्ति।

सूत्रधारः—उचितमिदम्।

यस्याश्चोरश्चिकुरनिकरः कर्णपूरो मयूरो
भासो हासः कविकुलगुरुः कालिदासो विलासः।
हर्षो हर्षो हृदयवसतिः पञ्चबाणस्तु बाणः
केषां नैषा कथय कविताकामिनी कौतुकाय॥ २२॥

---

तत्तदा इत्यर्थ इति। सततमनारतममृतस्य सुधायाः स्यन्दनं प्रस्रवणं उद्गिरन्ति ता अमृतस्राविण्य इति भावः। क्षणम् अल्पकालम् (कालाध्वनो रत्यंतसंयोगे इति द्वितीया) कठिनाः कठोरा पुनरप्यर्थकः, प्रतिभा नवनवोन्मेषशालिनी बुद्धि,प्रज्ञा नवनवोन्मेषशालिनी प्रतिभा मतेत्युक्तेः। सा अस्त्येषामिति प्रतिभावन्त तेषाम् (तदस्यास्तीति मतुप्) कवीनां गिरः वचनानि, इह भूलोके काव्ये वा तुलां सादृश्यं आनीयन्ते (नयतेर्द्विकर्मकत्वात् प्रधानकर्मणि लकारः। उक्तं च (गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहाम् इति) संभावनालङ्कार। संभावना यदीत्थं स्यादित्यूहोन्यस्य सिद्धये इतिलक्षणात्। हरिणी वृत्तम्॥ २१॥ **नट** नूनमिति तर्के, अस्य कवेर्जयदेवस्यान्तःकरणं मनः किमपि अनिर्वचनीयं कौतुकामोदाभ्यां कुतूहलानन्दाभ्यां मेदुरं व्याप्तं (भञ्जभासमिदो घुरजिति घुरच्) यद्यस्मात्सरसा रसभरिता अतः शीतला आह्लादजनकाः सूक्तयः समुल्लसन्ति. **सूत्रधारः** उचितम् युक्तम्। **यस्या इति**. एषा कवितैव कामिनी केषां कौतुकाय कुतूहलाय न भवतितत् कथयेति सम्बन्धः। कविताकामिनीस्वरूपमाह, यस्याः कविताकामिन्याश्चिकुरस्य केशस्य निकरः समूहः चोरस्तन्नामककविः मयूर. सूर्यशतकादिकर्ता भासस्तन्नामकः कविर्हासः कर्णपूरः कर्णभूषणम्,हास्यं,विलासः कविकुलगुरुः कविश्रेष्ठः कालिदास-शाकुन्तलादिकर्ता हर्षः सन्तोषो हर्षो नैषधादिकर्ता हृदयं वसतिर्गृहं यस्य स पञ्चबाणो मन्मथ.। अरविन्दमशोकञ्च चूतञ्च नवमल्लिका। नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायका इति। बाणः कादम्बर्यादिकर्ता। एतेनास्याः सर्वाङ्गानवद्यता सूचिता। साङ्गरूपकच्छेकवृत्तियमकालङ्काराः। यमकम्, अर्थे सत्यर्थभिन्नानां वर्णानां सा पुनः श्रुतिरिति लक्षणम्। मन्दाक्रान्ता वृत्तम् मन्दाक्रान्ता जलधिषडगैर्म्भौ नतौताद्गुरूचेदिति तल्लक्षणात्॥२२॥

अपि च ।

न ब्रह्मविद्या न च राजलक्ष्मी-
स्तथा यथेयं कविता कवीनाम् ।
लोकोत्तरे पुंसि निवेश्यमाना
पुत्रीव हर्षं हृदये करोति ॥ २३ ॥

( नेपथ्ये )

साधु भोः, कुशीलवकुलोत्तंस साधु ।

**सूत्रधारः**—कथमयं भगवतो याज्ञवल्क्यस्य प्रियोऽन्तेवासी दाल्भ्यायन इत एवाभिवर्तते । तदस्यानवलोकनीयचतुर्थवर्णस्य पुरतः स्थातुमनुचितमस्माकम् । तदेहि । परतो गच्छावः ।

( इति निष्क्रान्तौ ।

**इति प्रस्तावना ।**

---

**न ब्रह्मेति.** लोकेषु भुवनेषु जनेषु वा उत्तरे श्रेष्ठे ( उपर्युदीच्यश्रेष्ठेष्वप्युत्तरः स्यादित्यमरः ) पुंसि पुरुषे निवेश्यमाना स्थाप्यमाना पुत्रीवात्मजेव कवीनामियं कविता यथा हृदये मनसि हर्षं प्रमोदमातनोति विस्तारयति तथा तेन प्रकारेण ब्रह्म वेदस्तस्य विद्या अथवा ब्रह्मप्रापिका विद्या योगसाधनवेदान्तादिर्वा च परं राज्यलक्ष्मी राज्यसंपदपि नेति भावः प्रस्तुतप्रबन्धप्रतिपाद्यसन्दर्भसूचनादत्र मुद्रानामालङ्कारः उक्तञ्च **चन्द्रालोके**- सूच्यार्थसूचनं मुद्रा प्रकृतार्थपरैः पदैरिति, उपमालङ्कारोऽप्यत्र । इन्द्रवज्रा वृत्तम् स्यादिन्द्रवज्रा यदि तौ जगौग इति लक्षणात्॥२३॥ नेपथ्ये. जवनिकायां(नेपथ्यं स्याज्जवनिकेत्यजयः) भगवत. श्रीकाममाहात्म्यादिविशिष्टस्य । उक्तञ्च **दशरूपके** भगवन्तो वरैर्वाच्या विद्वद्देवर्षिलिङ्गिनइति । याज्ञवल्क्यस्य प्रियोन्तेवासी छात्रो दाल्भ्यायनस्तन्नामक ऋषिरितोऽत्रैवाभिवर्तते, अनेन दाल्भ्यायनप्रवेशसूचनं । असूचितस्य पात्रस्य न च नाट्ये प्रवेशनमित्युक्तेः । अनवलोकनीयोनभिवीक्ष्यश्चतुर्थवर्णः शूद्रवर्णो यस्य ( विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमिति स्मृतमित्यमरः ) । **प्रस्तावनेति.** प्रस्तावनासामान्यलक्षणं **दशरूपके**- सूत्रधारो नटीं ब्रूते मार्षं वापि विदूषकम् । स्वकार्यं प्रस्तुताक्षेपि चित्रोक्त्यायत्तदामुखम् । प्रस्तावना वेति **भरतेऽपि**- नटी विदूषको वाऽपि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते । आमुखं नाम तस्यैव

प्रविश्य ।

**दाल्भ्यायनः**--( तमेव श्लोकं पठित्वा । साकूतम् । ) साधूक्तमनेन । तथा हि । भूपतिरयं जनकोऽपि सकललोचनारविन्दमार्तण्डे क्वचिदपि पुरुषप्रकाण्डे निजां कन्यां समर्पयितुकामोऽस्मद्गुरूपदिष्टायां ब्रह्मविद्यायां कुलक्रमागतायां राज्यलक्ष्म्यां च शिथिलादरः संवृत्तः ।

---

सैव प्रस्तावना मतेति । **साहित्यदर्पणेऽपि**-नटी विदूषको वापि पारिपार्श्वक एव वा । सूत्रधारेण सहिताः संलापं यत्र कुर्वते, । चित्रैर्वाक्यैः स्वकार्योत्थैः प्रस्तुताक्षेपिभिर्मिथः । आमुखं तत्तु विज्ञेयं नाम्ना प्रस्तावना तु सेति । अस्या भेदा अपि **साहित्यदर्पणे** उद्धात्यकः कथोद्घातः प्रयोगातिशयस्तथा । प्रवर्तकावलगिते पञ्च प्रस्तावनाभिदेति । तन्मध्येऽत्र कथोद्घातरूपा प्रस्तावना उक्तञ्च **दर्पणे**-सूत्रधारस्य वाक्यं वा समादायार्थमस्य वा । भवेत्पात्रप्रवेशश्चेत्कथोद्घातः स उच्यत इति । अत्र न ब्रह्मविद्येति पद्यं समादायैव दाल्भ्यायनप्रवेशात् । एषामन्यतमेनार्थं पात्रं वाक्षिप्य सूत्रभृत् । प्रस्तावनान्ते निर्गच्छेत्ततो वस्तु प्रपञ्चयेदित्युक्तेः स्थापकनामकनटगमनम् । **दाल्भ्यायनः** तमेव न ब्रह्मविद्येत्यादिपूर्वोक्तमेव । साकूतं साभिप्रायम् ( आकूतं स्यादभिप्राय इत्यभिधानरत्नमालायाम् ) तथा सूत्रधारोक्तप्रकारेण हि निश्चितम् ( हि हेताववधारण इत्यमर· ) अथवा हीति हेत्वर्थकं उत्तरवाक्येऽन्वेति, भूपती राजा, । अयं जनकः इदं मिथिवंशस्य साधारणं नाम· तथा च **रामायणे** उत्तरकाण्डे सप्तपञ्चाशत्तमे सर्गे- ऋषयोपि महात्मानो निमेर्देहं समाहरन् । अरणिं तत्र निक्षिप्य मथनं चक्रुरोजसा । मन्त्रहोमैर्महात्मान· पुत्रहेतोर्निमेस्तदा । अरण्यां मथ्यमानायां प्रादुर्भूतो महातपा । मथनान्मिथिरित्याहुर्जननाज्जनकोऽभवत् । यस्माद्विदेहात्संभूतो वैदेहस्तु ततः स्मृत । एवं विदेहराजश्च जनकः पूर्वकोऽभवत् । मिथिर्नाम महातेजास्तेनायं मैथिलोऽभवदिति । सकलानां लोकानां जनानां लोचनानि नेत्राणि तान्येवारविन्दानि वारिजानि तेषां मार्तण्डे सूर्ये ( विकर्तनार्कमार्तण्डेत्यमरः ) निखिलजननयनविकासकारीत्यर्थः । प्रकाण्डः प्रशस्तश्चासौ पुरुषश्चेति कर्मधारयः (प्रशंसावचनैश्चेति समासः) प्रकाण्डशब्दस्यानुपसर्जनत्वान्न पूर्वनिपातः ) ( प्रकाण्डमुद्घतल्लजौ प्रशस्तवाचकानीत्यमरः ) निजां स्वकीयां कन्यां कुमारीं सीतामिति यावत्· समर्पयितुं दातुं कामः इच्छा यस्य ( लुम्पेदवश्यमः कृत्ये तुंकाममनसोरपीत्यनेन तुमुनो मकारलोपः ) अस्मद्गुरुणा याज्ञवल्क्येन ( अस्माकं गुरुणेति बहुत्वविवक्षया

( पुनः कर्णं दत्त्वा । ) कथमयमाकाशे वीणाध्वनिः श्रूयते । तन्नूनमस्मद्गुरुमभ्यागच्छता समीरसंघट्टनकलक्कणद्वल्लकीगुणेन देवर्षिणा नारदेन भवितव्यम् । ( विलोक्य । ) कथं ध्वनिसादृश्येन प्रतारितोऽस्मि। नन्वयं गगनतलावलम्बिनोर्मधुकरयोरेव ध्वनिराकर्ण्यते । ( पुनः कर्णं दत्त्वा । सहर्षविस्मयम् । ) अहो, भगवतो योगीश्वरस्य प्रसादमहिमा येनाहमेवंविधानामपि वचनावबोधमधुरां सिद्धिमासादितवानस्मि । तदाकर्णयामि किमेतावालपतः । ( कर्णं दत्त्वा । ) एकः किमाह—'सखे कलालाप, कुत आगतोऽसि । ' अपरः किमाह—'वयस्य मधुरप्रिय, संततविकस्वराच्चन्द्रमौलिमन्दाकिनीकुमुदकाननात् । ' अहो अनयोश्चतुरालापपेशलता रुचिरनामधेयता च । (पुनः कर्णं दत्त्वा ।) किमाह मधुरप्रियः— 'अस्ति नवीनः कोऽपि वृत्तान्तः । ' किमाह कलालापः— 'अस्ति । अचिरमेव कदापि खलु बलिनन्दनो बाणासुरः कमलमालया भगवन्तमिन्दुमौलिमभ्यर्च्य सविनयमिदमूचिवान् । यत्किल भगवन्,

---

एकार्थवाचित्वाभावान्न प्रत्ययोत्तरपदयोश्चेति मदादेशः ) उपदिष्टायां शिक्षितायां ब्रह्मविद्यायां वेदविद्यायां योगविद्यायां वा च परं कुलक्रमेण वंशपरम्परयागतायां प्राप्तायां राज्यस्य लक्ष्म्यां सम्पत्तौ शिथिलोऽदृढः आदरो यस्य तादृशः संपन्नः । **पुनः कर्णं दत्त्वेति.** अत्र ब्रवीतीत्यध्याहारः । कर्णं दत्त्वा पुनर्ब्रवीतीति योजना । अस्मद्गुरु याज्ञवल्क्यं, नूनमिति तर्के, समीरस्य वायो संघट्टनेन ताडनेन कलमव्यक्तं क्वणन्तो ध्वनन्तः वल्लक्या वीणायाः ( वीणा तु वल्लकीत्यमरः ) गुणास्तन्त्र्यो यस्य तेन देवर्षिणा नारदेन भवितव्यम् । ध्वनिसादृश्येन वीणाभ्रमरध्वनिसाम्यात्प्रतारितोऽस्मि वञ्चितोऽस्मि । गगनतलावलम्बिनोर्गगनावस्थितयोर्मधुकरयोर्मधु करोति तच्छीलयोः ( कृञो हेतुताच्छील्यानुलोम्येष्विति टः ) अहो इत्याश्चर्ये, भगवतः पूज्यस्य, भगवन्तो वरैर्वाच्या विद्वद्देवर्षिलिङ्गिन इति **दशरूपके** । योगीश्वरस्य प्रसादमहिमा अनुग्रहवैभवम् । एवंविधानामपि तिर्यञ्चामपि वचनानामुक्तीनामवबोधेन ज्ञानेन मधुरां प्रियाम् ( स्वादुप्रियौ तु मधुरावित्यमरः ) **एकः किमाहेति.** इदमाकाशभाषितम् । उक्तञ्च **दशरूपके.** किं ब्रवीष्येवमित्यादि विना पात्रं ब्रवीति यत् । श्रुत्वेवानुक्तमप्येकस्तत्स्यादाकाशभाषितमिति. आसादितवानुपलब्धवान्, एतौ भ्रमरौ, सन्ततं सर्वदा विकस्वराद्विकासितात् (स्थेशभासपि-

कैलासाधिकसारं किमस्ति वस्तु महीतले ।
यस्मिन्सफलतामेति मम दोर्दण्डमण्डलम् ॥ २४ ॥

ततश्च विहस्येदमाह च भगवानिन्दुमौलिः—

अस्ति मे कार्मुकं दिव्यं न्यस्तं जनकभूभुजि ।
यस्य बाणानले तिस्रः पुरः प्राप्ताः पतङ्गताम् ॥ २५ ॥

तदाकर्ण्य च तत्कार्मुकं विलोकयितुं स तत्र गतः । अहमिहागतः । कुतः पुनस्त्वमिह । कथय कीदृशो वा तत्र नवीनो वृत्तान्त इति । दाल्भ्यायनः किमाह मधुरप्रियः—'अहमागतोऽस्मि नन्दनवनात् । अथ च

---

सकसौ वरजिति वरच् ) चन्द्रमौलेः शङ्करस्य मन्दाकिनी वियद्गङ्गा तस्याः कुमुदकाननात् कमलवनात्, आगत इति सम्बध्यते । ( अहो अनयोरित्यत्रौदिति प्रगृह्यसंज्ञायां प्लुतप्रगृह्या इति प्रकृतिभावः ) चतुरालापस्य विदग्धालापस्य पेशलता चारुता, ( चारौ दक्षे च पेशल इत्यमरः ) रुचिरनामधेयता त्वद्याभिधेयता च ( नामशब्दाद्भागरूपनामभ्य इति स्वार्थे धेयप्रत्ययः ) अचिरमेवाल्पकाल एव बलेस्तन्नामकदैत्यस्य तनयः पुत्रो बाणासुरः, ऊचिवान् ( ब्रूधातोर्लिटि क्वसौ वचादेशे संप्रसारणे रूपम् । अकथितञ्चेति द्विकर्मकत्वम् । **कैलासाधिकेति.** महीतले कैलासादधिकः सारः स्थिरांशो यस्मिंस्तत् वस्तु अस्ति किम्. यस्मिन्वस्तुनि मम दोर्दण्डस्य मण्डलं निवहः सफलतां एति एष्यतीत्यर्थः ( वर्तमानसामीप्ये वर्तमानवद्वेति लट् ) छेकानुप्रासोऽलङ्कारः । श्लोकश्छन्दः २४ **अस्तीति.** जनकभूभुजि जनकमहीभृन्निकटे ( औपश्लेषिकाधारे सप्तमी ) मे मम (तेमयावेकवचनस्येति म आदेशः) दिव्यं दिविभवं ( दिव्यं लवङ्गे धात्र्यां स्त्री वल्गौ दिविभवे त्रिष्विति मेदिनी ) कर्मणे प्रभवति कार्मुकं धनुः, ( कर्मण उकञ् इति उकञ् ) अस्ति । यस्य धनुषः बाणानले बाणवह्नौ तिस्रः पुरः मयनिर्मितं पुरत्रयं पतङ्गतां शलभतां प्राप्ताः । रूपकपरिकरालङ्कारौ । साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुर इति लक्षणात् । श्लोकश्छन्दः ॥ २५ ॥ **तदाकर्ण्येति.** स बाणासुरः, अहं कलालापः, त्वं मधुरप्रियः, आगतोऽस्मीति ( गत्यर्थाकर्मकेति कर्तरि क्तः ) ।

तत्र मया लङ्केश्वरानुचरस्य गर्जितमाकर्णितम्—आः कथं रे, नन्दनवनस्य रक्षिणोऽनर्चितचन्द्रचूड एव निशाचरचक्रवर्तिनि लूनसकलप्रसूनं नन्दनवनमिति । ततस्तैरिदमुक्तो निशाचरः—क्षन्तव्यमेतत् । अद्य हि जनकराजकन्यकावीरस्वयंवरविलोकनकुतुकितसकलसुरलोकविमानमण्डनाय महान्कुसुमोपयोगः । तदाकर्ण्य चेममेव वृत्तान्तमुपायनीकरोमि लङ्केश्वरस्येति प्रचलितो निशाचरः । अहमपि कौतुकादिहागतोऽस्मि ।' ( सविषादम् । ) अहो महाननर्थाङ्कुरोद्भेदो यदयं बाणरावणयोः कर्णान्तिकमपि विश्रान्तः सीतास्वयंवरवृत्तान्तः । अथवा । अलमतिकातरतया । भ्रमारोपिता अपि भ्रमरोक्तयः संभवन्ति । ( विमृश्य । ) कुतो वा [1]भ्रमसंभावना ।

लङ्केश्वरानुचरस्य रावणसेवकस्य, आ इति क्रोधोद्भेदकं ( आस्तु स्यात्कोपपीडयोरित्यमरः ) निशाचराणां राक्षसानां चक्रवर्तिनि सार्वभौमे ( चक्रवर्ती सार्वभौम इत्यमरः ) अनर्चितोऽपूजितश्चन्द्रचूडः शङ्करो येन स तथा सत्यपि ( अत्र षष्ठी चानादर इत्यनादरे सप्तमी) तथा चानर्चितचन्द्रचूड निशाचरचक्रवर्तिनमनादृत्येत्यर्थः। लूनानि च्छिन्नानि सकलानि प्रसूनानि सुमनानि यस्मिस्तत्, तैर्वनरक्षिभिः निशाचरः रावणानुचरः, अस्मिन्नहनि अद्य ( सद्यः परुत्परार्यैषम इति निपातनम् ) जनकराजकन्यकायाः सीतायाः (क्षिपकादीनां चेतीत्वाभावः) वीराणां स्वयं वरं वरणं (ग्रहवृदृनिश्चीति भावेऽप्) तस्य विलोकने प्रेक्षणे कुतुकितानां सञ्जातकुतूहलानां सुरलोकानां देवानां विमानस्य व्योमयानस्य ( व्योमयानं विमानोऽस्त्रीत्यमरः ) मण्डनाय परिष्क्रियायै, इममेव वृत्तान्तम् स्वयंवरवृत्तान्तमेव उपायनीकरोमि उपहारीकरोमि इति । निशायां चरतीति निशाचरः ( चरेष्ट इति टः ) प्रचलितः गन्तुं प्रवृत्तः ( आदिकर्मणि क्तः कर्तरि चेति क्तः)। **दाल्भ्यायन इति.** अनर्थ एवाङ्कुरस्तस्योद्भेदः प्रकटनम्, यद्यस्मादयं सीतास्वयंवरवृत्तान्तः बाणरावणयोः कर्णान्तिकमपि कर्णसमीपमपि विश्रान्तः प्राप्तः । अनेन बाणासुरस्यापि शंकरेणायं वृत्तान्तः कथित इति कल्प्यते. अतिकातरतया अधीरतया(अधीरे कातरस्त्रस्त इत्यमरः) **भ्रमेति.** भ्रमराणां मधुकराणामुक्तयः **भ्रमेण.** मिथ्या मत्या आरोपिताः कल्पिताः संभवन्ति, भ्रमराभ्यामनुक्तमपि भ्रमेणोच्चरितमिव श्रूयते इति भावः। विमृश्य विचार्य,भ्रमरसंभावनेति । प्रत्यक्षे भ्रमरे सम्भावना

१ भ्रमरसम्भावनेति पाठः ।

मकरन्दरसस्यन्दसुन्दरोद्गारधारिणौ ।
श्रवणानन्दिनावेतौ बन्दिनाविव राजतः ॥ २६ ॥

( नेपथ्ये )

साधु भगवन्, विज्ञातं बन्दिनाविव खल्वावां नानादिगन्तसमागतनृपतिचक्रवर्णनाय जनकेन समादिष्टौ ।

दाल्भ्यायनः—अहो घुणाक्षरन्यायो यदिदं भ्रमरद्वयं प्रति मयोक्तं बन्दिद्वयं प्रति फलितं वचः । भवतु । तदिमं भ्रमरवृत्तान्तमस्मद्गुरवे निवेदयामि ।

( इति निष्क्रान्तः । )

इति विष्कम्भकः ।

---

भ्रमसंभावना कुतो वा, न कुतोपीत्यर्थः । कुतो वा भ्रमसंभावनेति युक्तः पाठः । भ्रमस्य संभवनापि नास्तीत्यर्थः । तदेव दर्शयति **मकरन्देति.** मकरन्दस्य पुष्परसस्य यो रसो द्रवः ( गुणे रागे द्रवे रस इत्यमरः ) तस्य स्यन्देन क्षरणेन सुन्दराः शोभना उद्गारा मुखवायवस्तान्धरतस्तौ तथा श्रवणानन्दिनौ श्रोत्रानन्ददायिनौ एतौ भ्रमरौ बन्दिनाविव स्तुतिपाठकाविव राजतो दीप्येते । बन्दिपक्षे तु मकरन्दरसस्यन्द इव सुन्दरा उद्गारा उपन्यासास्तान्धरत इति योजना । अनेन बन्दिप्रवेशसूचनम् । उपमाश्लेषच्छेकवृत्त्यनुप्रासालङ्काराः । श्लोकश्छन्दः ॥२६॥ **नेपथ्य इति.** नानादिगन्तेभ्यः समागतानां नृपतीनां चक्रस्य गणस्य ( चक्रो गणे चक्रवाक इति विश्वः ) वर्णनाय समादिष्टौ नियुक्तौ । अत्रोल्लेखो नाम नाट्यालङ्कारः कार्यग्रहणमुल्लेख इति लक्षणात् । **दाल्भ्यायनः** घुणो नाम काष्ठभेदकः कीटविशेषः ( घुणः स्यात्काष्ठभेधक इति रत्नकोशः ) तेन तु जातिस्वभावेन काष्ठं भिद्यते तत्राक्षराणि तु आकस्मिकानि सन्दृश्यन्ते न तु घुणेच्छया तथैव प्रकृते भ्रमरोद्देशेनोच्चारितं वचो बन्दिद्वयं प्रति फलितम् । अस्मद्गुरवे याज्ञवल्क्यायेत्यर्थः । **विष्कम्भकः** तल्लक्षणं **साहित्यदर्पणे**— वृत्तवर्तिष्यमाणानां कथांशानां निदर्शकः । सङ्क्षिप्तार्थस्तु विष्कम्भ आदावङ्कस्य दर्शितः । मध्येन मध्यमाभ्यां वा पात्राभ्यां सम्प्रयोजितः । शुद्धः स्यात्स तु सङ्कीर्णो नीचमध्यमकल्पितः इति. **सुधाकरेऽपि**—तत्र विष्कम्भको भूतभाविवस्त्वंशसूचकः । अमुख्यपात्ररचितः संक्षेपैकप्रयोजनः । द्विधा स शुद्धो मिश्रश्च मिश्रः स्यान्नीचमध्यमैः । शुद्धः

( ततः प्रविशति बन्दिद्वयम्। )

एकः—[१]वंअस्स मञ्जीरअ, पेक्ख पेक्ख। गइन्ददसणसिणिद्धसलाआसहस्सणिम्मिहेसु मञ्चएसु आसीणा इमे कुङ्कुमकअङ्गराआ राआणो अमलफडिअपासाअसिहरासङ्गिणो कणअसिंहा विअ रेहन्ति। अमुद्धदुद्धसाअरलहरिसिहरावलम्बिणो अभिणवुग्गमन्तणिसाअरबिम्बपडिबिम्बा विअ सोहन्ति।

---

१. वयस्य मञ्जीरक, पश्य। गजेन्द्रदशनस्निग्धशलाकासहस्रनिर्मितेषु मञ्चेष्वासीना इमे कुङ्कुमकृताङ्गरागा राजानोऽमलस्फटिकप्रासादशिखरासङ्गिन कनकसिंहा इव राजन्ते। अमुग्धदुग्धसागरलहरीशिखरावलम्बिनोऽभिनवोद्गच्छन्निशाकरबिम्बप्रतिबिम्बा इव शोभन्ते।

---

केवलमध्योयमेकानेककृतो द्विधेति। मध्यमपात्रेण प्रयोजितत्वाच्छुद्ध एककृतः। अत्र सीतास्वयंवरवृत्तान्तस्य बाणरावणश्रवणपथावतरणं जनकागारे हरकार्मुकावस्थानमिति वृत्तस्य तथा स्वयंवरदिदृक्षया नृपचक्रबाणरावणागमनस्य वर्तिष्यमाणस्य च कथांशस्य सूचनम्। **ततः प्रविशति बन्दिद्वयं**। **एक इति.** वयसा समो वयस्य. ( नौवयोधर्मेत्यादिना यत् ) गजेन्द्रस्य गजश्रेष्ठस्य दशनानां दन्तानां स्निग्धं चिक्कणं ( स्निग्धं स्नेहयुते चिक्कणेऽपि स्यादिति मेदिनी) यच्छलाकासहस्रं इषीकासहस्रं ( शलाका स्यादिषीका हीत्युणादिकोशः ) तैर्निर्मितेषु निष्पादितेषु मञ्चेषु पल्यङ्केषु आसीना उपविष्टाः कुङ्कुमेन काश्मीरजेन कृतोऽङ्गरागो यैस्त इमे राजानोऽमलानामच्छानां स्फटिकप्रासादानां स्फटिकमयराजगृहाणां शिखरेष्वग्रेषु आसङ्गिनः संलग्नाः कनकसिंहा इव सुवर्णकेसरिण इव राजन्ते अमुग्धस्य न विद्यते मुग्धो यस्मादिति बहुव्रीहिणाऽतिसुन्दरस्येत्यर्थ· ( मुग्धः सुन्दरमूढयोरिति विश्वः ) दुग्धसागरस्य लहरीणामूर्मीणां शिखरावलम्बिनः शिखरासङ्गिनोऽभिनवोद्गच्छन्तो निशाकरस्य चन्द्रस्य प्रतिबिम्बा इव प्रतिच्छन्दा इव शोभन्ते। मञ्चानां शुभ्रत्वात् राज्ञां च कुङ्कुमाक्तत्वादमलस्फटिकास्थितकनकसिंहसाम्यं, उत्तरवाक्येऽपि तथैव।

मञ्जीरकः—सखे नूपुरक, पश्य पश्य ।

स्वांस्वां दिशं श्रितवतां निवहेन राज्ञां
मञ्चावलीवलयमाकलितं विभाति ।
सीतास्वयंवरविलोकनकौतुकेन
पुञ्जीकृताकृति दिशामिव चक्रवालम् ॥ २७ ॥

अपि च ।

नटति नरकराग्रव्यग्रसूत्राग्रलग्न-
द्विपदशनशलाकामञ्चपाञ्चालिकेयम् ।
त्रिपुरमथनचापारोपणोत्कण्ठिताना-
मतिरभसवतीव क्ष्माभृतां चित्तवृत्तिः ॥ २८ ॥

---

मञ्जीरकः-- स्वांस्वामिति. स्वांस्वां स्वकीयां स्वस्वस्वामिकामिति यावत् (वीप्सायां नित्यवीप्सयोरिति द्वित्वम् ) दिशं काष्ठां श्रितवतां सेवमानानां राज्ञां भूपतीनां निवहेन सन्दोहेन आकलितमभ्युपगतं मञ्चावलीवलयं पर्यङ्कश्रेणीमण्डलं । सीतायाः जानक्याः स्वयंवरः स्वयंवरणं तस्य विलोकने प्रेक्षणे कौतुकेन कुतूहलेन ( हेताविति तृतीया ) पुञ्जीकृता सङ्घीकृता ( अभूततद्भावे च्विः ) आकृतिराकारो येन तादृशं दिशाञ्चक्रवालं मण्डलमिव विभाति ( भादीप्ताविति धातोर्लट् ) उत्प्रेक्षाछेकानुप्रासावलङ्कारौ संभावनमथोत्प्रेक्षा प्रकृतस्य समेन यदिति लक्षणात् । वसन्ततिलका वृत्तम् ॥२७॥ नटतीति. त्रिपुराणां मथनो नाशको मृडस्तस्य चापारोपणे धनुःसज्जीकरणे उत्कण्ठितानामुन्मनसां क्ष्माभृतां भूभुजामतिरभसवत्यतिवेगवती ( रभसो वेगहर्षयोरिति मेदिनी ) इयं चित्तवृत्तिः नरकराग्रेषु मनुजहस्ताग्रेषु अङ्गुलीष्विति यावत्. व्यग्रस्य व्यासक्तस्य ( व्यग्रो व्यासक्त आकुल इति मेदिनी ) सूत्रस्याऽग्रे लग्नाऽऽसक्ता द्वाभ्यां मुखशुण्डाभ्यां पिबन्ति ते द्विपाः दन्तिनः ( द्विरदोऽनेकपो द्विप इत्यमरः ) ( सुपीति योगविभागात्कः ) तेषां दशनशलाकानां दन्तेषीकानां ( शलाका स्यादिषीका हीत्युणादिकोशः) मञ्चे पाञ्चालिका पुत्रिका ( पाञ्चालिका पुत्रिका स्याद्वस्त्रदन्तादिभिः कृतेत्यमरः ) सेव नटति नृत्यति ऐन्द्रजालिकाङ्गुलिलग्नादृश्यतन्तुयन्त्रिता पुत्रिका मञ्चे यथा नृत्यति तथेति भावः । उपमालङ्कारः । मालिनी वृत्तम् ॥ २८ ॥

**नूपुरकः**—वंअस्स मञ्जीरअ, को इमो सीदाकरग्गहवासनावसन्तलच्छीविलसन्तपुलअमुउलजालमण्डिदं णिअभुअसहआरसाहिजुअलं पुलोवन्तो चिट्ठदि।

**मञ्जीरकः**—स एष निजयशःपरिमलप्रमोदितचारणचञ्चरीकचयकोलाहलमुखरितदिक्चक्रवालक्ष्मापालकुन्तलालङ्कारो मल्लिकापीडो नाम।

---

१. वयस्य मञ्जीरक, कोऽयं सीताकरग्रहवासनावसन्तलक्ष्मीविलसत्पुलकमुकुलजालमण्डितं निजभुजसहकारशाखियुगलं विलोकयंस्तिष्ठति।

---

**नूपुरकः** सीताया जानक्याः परिग्रहस्य पाणिग्रहणस्य वासनैवेच्छैव वसन्तलक्ष्मीः वसन्तशोभा तया विलसन्तो विकसन्तः पुलका रोमाञ्च (रोमाञ्चाः पुलकः स्यादिति हलायुधः) त एव मुकुलाः कुड्मलास्तेषां जालेन समूहेन मण्डितं भूषितम्, निजौ स्वकीयौ भुजावेव सहकारशाखिनावतिसुरभिरसालौ (आम्रश्चूतो रसालोऽसौ सहकारोऽतिसौरभ इत्यमरः) तयोर्युगलं द्वन्द्वं विलोकयन्पश्यँस्तिष्ठति। **मञ्जीरकः** निजस्य यशसः समज्ञायाः (यशः कीर्तिः समज्ञा चेत्यमरः) परिमलेनामोदेन, कीर्तेः सुरभित्ववर्णनन्तु कविसमयेनेति बोध्यम्. अथवा निजयश एव परिमल इति रूपकं तेन प्रमोदिता हर्षिताश्चारणा एव चञ्चरीका रोलम्बाः (इन्दिन्दिरश्चञ्चरीको रोलम्बो दारुदारुक इति व्याडि.) तेषां चयस्य समूहस्य कोलाहलेन कलकलेन मुखरितं शब्दितं दिक्चक्रवालं दिङ्मण्डलं येन सचासौ क्ष्मापालानां क्षोणीपतीनां कुन्तलालङ्कारः शिरोभूषणश्चेति विषेशणोभयपद· कर्मधारयः। मल्लिकापीडो नाम तन्नामक इत्यर्थ·। मल्लिकाया आपीडः शिखामालापि शिरोरुहभूषणं स्वस्वपरिमलेन भ्रमरानानन्दयतीति प्रसिद्धिः। श्लिष्टपदमहिम्ना ईदृगर्थो ज्ञातव्यः, एवमेवाग्रे मञ्जीरकस्य सिन्धुराजवर्णनान्तोक्तौ बोद्धव्यम्। यत्तु मुखरितं दिक्चक्रवालं यैस्तादृशानां क्ष्मापालानां कुन्तलालङ्कार इति विग्रहयन्ति तन्न रुचिरं, निजस्वात्मादिशब्दानां प्रधानक्रियाकर्त्रन्वयत्वव्युत्पत्तिरिति मिश्रप्रमुखोक्तेर्निजशब्दस्य प्रधानक्रियाकर्तृमल्लिकापीडे एवान्वयस्यौचित्यात्। अतएव भर्तुर्नृत्तानुकारे जयति निजतनुस्वच्छलावण्यवापीसंभूताम्भोजशोभां विदधदभिनवो दण्डपादो भवान्या इत्यत्र मम्मटाचार्यैः **काव्यप्रकाशे** सप्तमोल्लासे. अत्र दण्डपादगता निजतनुः प्रतीयते भवान्याः सम्बन्धिनी तु विवक्षितेति अभवन्मतयोगरूपो दोषो निर्धारित·, तस्माद्यथाप्रदर्शितमेव सम्यक्।

नूपुरकः—ईमो उण कदमो जो किल दूरावसारिअकडअप्पअडिअधणुग्गुणकिणकसणलेहामण्डले भुअदण्डे पुलोवन्तो चिट्ठदि ।

मञ्जीरकः—सोऽयं कुबेरदिगङ्गनाललाटतटविलासलम्पटः काश्मीरतिलकः ।

नूपुरकः—ईमो उण को निअपडावदिणअरुग्गमपुव्वगिरिसिहरसहअरं दक्खिणभुअदण्डमुन्नमिअ वट्टदि ।

---

१. अयं पुनः कतमो यः किल दूरापसारितकटकप्रकटितधनुर्गुणकिणकषणलेखामण्डले भुजदण्डे विलोकयंस्तिष्ठति ।

२. अयं पुनः को निजप्रतापदिनकरोद्गमपूर्वगिरिशिखरसहचरं दक्षिणभुजदण्डमुन्नमय्य वर्तते ।

---

नूपुरकः दूरमर्थादूर्ध्वमपसारितेन निःसारितेन कटकेन बलयेन प्रकटितमाविष्कृतं धनुर्गुणस्य किणयोः कषणेन लेखा मण्डलं ययोस्ते भुजदण्डे विलोकयन्पश्यंस्तिष्ठति । अनेन सव्यसाचित्वं चापारोपणोत्साहश्च ध्वन्यते । **मञ्जीरकः सोयमिति.** तच्छब्दस्य प्रक्रान्तार्थत्वान्न यच्छब्दोपादानापेक्षा, कुत्सितं बेरं शरीरं यस्य स कुबेरः तस्य धनदस्य । कुत्सायां क्विति शब्दोयं शरीरं बेरमुच्यते। कुबेरः कुशरीरत्वान्नाम्ना तेनैव सोऽङ्कित इति **वायुपुराणे**। दिगेवाङ्गना उत्तरा दिगित्यर्थः ( इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमादित्यमरः ) तस्या ललाटतटे ललाटप्रदेशे ( तटं नपुंसके क्षेत्र इति मेदिनी ) यो विलासो लीला तस्य लम्पटो लालसः ( लालसं लम्पटं विदुरित्यभिधानरत्नमालायाम् ) काश्मीराणां राजा काश्मीरः ( जनपदशब्दादिति सूत्रस्थक्षत्रियसमानशब्दाज्जनपदादितिवार्तिकेनाञ् ) स तिलक इव, अन्यत्र काश्मीरस्य कुङ्कुमस्य तिलकः विशेषकम्, कामिन्यः सौभाग्यचिह्नं कुङ्कुमविशेषकं ललाटे धारयन्तीति संप्रदायः । **नूपुरकः** निजप्रताप एव दिनकरो भास्करः तस्योद्गम उदये ( वैषयिके आधारे सप्तमी ) पूर्वगिरिशिखरस्योदयाचलशृङ्गस्य सहचरः सदृशः ( पचादित्वादच्, सप्तमीति योगविभागात्समासः ) अथवा दिनकरोद्गमस्य पूर्वगिरिशिखरसहचर इति ( षष्ठीति सूत्रेण समासः ) दक्षिणं वामेतरं भुजदण्डमुन्नमय्योद्यम्य वर्तते ।

**मञ्जीरकः**—स एष निजप्रतापप्रभापटलपिञ्जरितमलयाचलनितम्बतटः काञ्चीमण्डनो वीरमाणिक्यनामा नृपतिः ।

**नूपुरकः**—को इमो हरिसुल्लसन्तपुलअविसंठुलकपोलत्थलचलिअकुण्डलसरिसनिवेसणावदेसेण पअडिअहरसरासणकण्णऊरमनोरहो रेहदि ।

**मञ्जीरकः**—सोऽयमसमरणामहार्णवैकमकरो मत्स्यराजः ।

---

१ कोऽयं हर्षोल्लसत्पुलकविसंष्ठुलकपोलस्थलचलितकुण्डलसदृशनिवेशनापदेशेन प्रकटितहरशरासनकर्णपूरमनोरथो राजते ।

---

**मञ्जीरकः** निजप्रतापस्य स्वप्रभावस्य ( सप्रतापः प्रभावश्च यत्तेजः कोशदण्डजमित्यमरः ) प्रभापटलेन कान्तिवृन्देन पिञ्जरितं सञ्जातपीतवर्णं ( पिञ्जरोऽश्वान्तरे क्लीबं स्वर्णे पीते च वाच्यवदिति मेदिनी ) मलयाचलस्य नितम्बतटं कटकदेशो मध्यप्रदेश इति यावत्. येन सः, काञ्च्यास्तन्नामकपत्तनस्य मण्डनो भूषणं ( माडिधातोः करणे ल्युट् ) वीरेषु माणिक्यमिव रत्नमिवेत्यन्वर्थं नाम यस्य सः, अन्यत्र काञ्च्या रशनाया मण्डनं वीरं श्रेष्ठं माणिक्यं तन्नामकरत्नविशेषः, स्वप्रभापटलेन मदिराक्ष्या नितम्बतट पिञ्जरयति । अथवा निजप्रताप एव प्रभापटलं तेनपिञ्जरितो मलयाचल एवं नितम्बतट इति रूपकम्। **नूपुरक** हर्षेण प्रमोदेनोल्लसद्भिरुद्गच्छद्भिः पुलकै रोमाञ्चैः ( पुलको बिन्दुरोमाञ्चयोरिति वैजयन्ती ) विसंष्ठुले विषमे कपोलस्थले गण्डप्रदेशे चलितयोः कुण्डलयोः कर्णभूषणयोः सदृशमुचितं ( समं वा सदृशं समे इचिते वेति मेदिनी ) यन्निवेशनं स्थापनं तस्यापदेशेन व्याजेन प्रकटितो व्यञ्जितो हरशरासनस्य शितिकण्ठधनुषो यः कर्णपूरः कर्णभूषणं तस्मिन्मनोरथो येन, अथवा हरशरासनमेव कर्णपूरस्तस्मिन्मनोरथो येन तादृशो राजते शोभते· अयं क इति प्रश्नः । शरासनमुद्यम्य कर्णान्तमाकर्षामीति अध्यवसायो दर्शित इति भावः । **मञ्जीरकः** असमोऽसदृशो रणः समरः स एव महार्णवोऽगाधवारिधिः तास्मिन्नेकोऽद्वितीयो मकरो जलजन्तुविशेषः, मत्स्यराज मत्स्यदेशाधिपतिः ( मत्स्यो मीनेऽथ पुंभूम्नि देशे इति मेदिनी· ) मकरोप्यगाधसमुद्रचारी मीनानां राजा चेति प्रसिद्धिः ।

नूपुरकः—ईमो उण को अमलमलअअरसधवलिअणिअभुअदण्ड-विडम्बिअभुअगराअसिरी सिरीसकुसुमसुउमारं माररिपुसराअणं कलअन्तो विप्फुरदि ।

मञ्जीरकः—स एष विमलमुक्तावलीविराजमानवक्षस्तटस्तुङ्गभुजङ्गतरङ्गः सिन्धुराजः । तदलमनेन । प्रकृतं तावदुपक्रमामहे । ( परिक्रम्य । उच्चै. । ) अहो राजानः, आकर्णयत आकर्णयत ।

आकर्णान्तं त्रिपुरमथनोद्दण्डकोदण्डनद्धां
मौर्वीमुर्वीवलयतिलकः कोपि यः कर्षतीह ।
तस्यायान्ती परिसरभुवं राजपुत्री भवित्री
कूजत्काञ्चीमुखरजघना श्रोत्रनेत्रोत्सवाय ॥ २९ ॥

---

१. अयं पुनः कोऽमलमलयजरसधवलितनिजभुजदण्डविडम्बितभुजगराजश्रीः शिरीषकुसुमसुकुमारं माररिपुशरासनं कलयन्विस्फुरति ।

---

नूपुरक अमलेन निर्मलेन मलयजस्य चन्दनस्य रसेन द्रवेण धवलिताभ्यां निजभुजदण्डाभ्यां विडम्बितानुकृता ( चौरादेर्बहुलमेतन्निदर्शनमिति गणसूत्रेण विडम्बधातोर्ण्यन्तात्कर्मणि क्त. ) भुजगराजस्य शेषस्य श्री. शोभा येन माररिपोर्नीलकण्ठस्य शरासनं कार्मुकं शिरीषस्य कपीतनस्य ( शिरीषस्तु कपीतन इत्यमरः ) कुसुममिव सुकुमारं कोमलं ( सुकुमारन्तु कोमलमित्यमर ) कलयन्सम्भावयन् विस्फुरति सञ्चलति. शिरीषकुसुमस्यातीवकोमलत्वात्तत्सादृश्यज्ञानेन शरासनस्य भङ्गोपि सुकरः किमारोपणमिति भावः । मञ्जीरकः विमलया प्रसन्नया मुक्तावल्या हारेण विराजमानं भासमानं वक्षस्तटं वक्षस्थलं यस्य स चासौ तुङ्गौ पुष्टौ भुजङ्गौ साध्यवसानलक्षणया भुजावित्यर्थः । तौ तरङ्गा इव यस्य स चेति विशेषणोभयपद· कर्मधारयः । भुजयोस्तरङ्गसादृश्यं चाञ्चल्येनैव । कालिदासोपि वीचिलोलभुजयोस्तयोर्गतमिति रघुवंशे । सिन्धुराजः सिन्धुदेशभूपः ( सिन्धुर्वमथुदेशाब्धिनदे नेति मेदिनी. ) अन्यत्र सिन्धूनां नदीनां राजा समुद्रः सोपि मुक्तावलीविराजितटः तुङ्गतरङ्गश्चेति श्लेषप्रतिपादितोर्थ· । वस्तुतस्तु तुङ्गभुजतरङ्ग इत्येवात्र पाठः साधीयान् । तथा च साध्यवसानलक्षणानावश्यकत्वम् । अनेन राजचर्चानुधावनेन । प्रकृतं जनकसन्देशमुपक्रमामहे आरभामहे ।

---

१ भुजतरङ्गः

( पुनः सकौतुकम् । ) सखे, पश्यताममी ।

कामारिकार्मुकविकर्षणकौतुकोर्मि-
रोमाञ्चितद्विगुणपीवरबाहुदण्डाः ।
सीताकरग्रहमिलत्कुतुकातिमात्र-
विस्तीर्यमाणहृदयाः परितो नरेन्द्राः ॥ ३० ॥

( पुनः सहर्षम् ) अये, कथमुच्चलितमेव समसमयसंचरणमिलत्कपोलतल संघट्टमसृणरणन्मणिकुण्डलेन राजमण्डलेन ।

**नूपुरकः**—पुलोवेहि पुलोवेहि । इमाणं अण्णोण्णसंघट्टन्तकेयूरसमुच्चलन्तकणअकणमिसेण पआवाग्गिणो विप्फुलिङ्गा विअ दीसन्ति ।

**मञ्जीरकः**—( विहस्य । )

१. विलोकय विलोकय । एषामन्योन्यसंघट्टमानकेयूरसमुच्चलत्कनककणमिषेण प्रतापाग्नेर्विस्फुलिङ्गा इव दृश्यन्ते ।

( उपपराभ्यामित्यात्मनेपदं ) परस्मैपदपरत्वाभावात्क्रमः परस्मैपदेष्विति दीर्घो न ) आकर्णयत शृणुत ( नित्यवीप्सयोरित्याभीक्ष्ण्ये द्वित्वम् । **आकर्णान्तमिति.** इह अस्मिन्समाजे यः कोपि अन्यतम उर्वीवलयस्य भूमण्डलस्य तिलक इव विशेषकमिवालङ्कार इति यावत्। मौर्वी ज्यां त्रिपुरमथनस्य भूतेशस्य उद्दण्डे प्रचण्डे कोदण्डे चापे नद्धां बद्धां कृत्वेति शेषः। पूर्वोत्तरसन्दर्भात् कर्णस्यान्तात्प्रान्तभागादा इत्याकर्णान्तं ( आङ्मर्यादाभिविध्योरित्यव्ययीभावेन नपुंसकत्वम् ) कर्षति तस्य पुरुषश्रेष्ठस्य कूजन्त्या ध्वनन्त्या काञ्च्या सप्तक्या ( स्त्रीकट्यां मेखला काञ्ची सप्तकी रशना तथेत्यमरः ) मुखरं शब्दायमानं जघनं कटिपुरोभागो यस्याः सा राजपुत्री जानकी परिसरभुवं पर्यन्तभुवम् पर्यन्तभूः परिसर इत्यमरः ) आयान्ती सती श्रोत्रे च नेत्रे च श्रोत्रनेत्रं तस्योत्सवाय महाय भवित्री भविता काव्यलिङ्गच्छेकवृत्त्यनुप्रासा अलङ्काराः काव्यलिङ्गं हेतोर्वाक्यपदार्थतेति तल्लक्षणात् । मन्दाक्रान्ता वृत्तम्।अत्राध्यवसायो नाम नाट्यालङ्कारः प्रतिज्ञाध्यवसायक इति तल्लक्षणम् ॥ २९ ॥ **पुनरिति.** पश्यतां पश्यतो जनाननादृत्येति षष्ठी चानादर इत्यनेनानादरे षष्ठी । दृश्यन्तामिति युक्तः पाठः।अमी इति नरेन्द्रा इति उत्तरश्लोकस्थपदेनान्वेति। **कामारीति.** कामारेर्मदनरिपोः कार्मुकस्य चापस्य विकर्षण आकर्षणे कौतुकानां कुतूहलानामूर्मिभिर्वेगैः ( ऊर्मिः स्त्रीपुंसयोर्वीच्यां प्रकाशे वेगभङ्ग्यो-

१ दृश्यन्ताममी इति पाठः ।

पश्य पश्य सुभटैः स्फुटभावं
भक्तिरेव गमिता न तु शक्तिः ।
अञ्जलिर्विरचितो न तु मुष्टि-
र्मौलिरेव नमितो न तु चापः ॥ ३१ ॥

नूपुरकः—कहं आरम्भरमणिज्जो जेव्व इमाणं संरम्भो ।

मञ्जीरकः—( सविषादम् )

२. कथमारम्भरमणीय एवैतेषां संरम्भः ।

रिति मेदिनी) रोमाञ्चिताः सञ्जातरोमाञ्चा अत एव द्विगुणाः पीवराः पुष्टा बाहुदण्डा दोर्दण्डा येषां, तथा सीतायाः वैदेह्याः करग्रहणे पाणिग्रहणे मिलत्सङ्गतं यत्कुतुकं कुतूहलं तेनातिमात्रं निर्भरं ( अतिमात्रोद्गाढनिर्भरमित्यमरः ) विस्तीर्यमाणं विस्तृतं हृदयमन्तःकरणं येषां, परितः समन्ततो नरेन्द्राः सन्तीति शेषः । स्वभावोक्तिवृत्त्यनुप्रासावलङ्कारौ वसन्ततिलका वृत्तम् ॥ ३० ॥ **पुनः सहर्षमिति.** कथं समसमये समानकाले संचरणेन चलनेन मिलतां परस्परसक्तानां कपोलतलानां गण्डस्थलानां संवट्टेन वर्षणेन मसृणमकर्कशं यथा तथा ( मसृणोऽकर्कशे स्निग्ध इति मेदिनी ) रणन्ति स्वनन्ति मणिकुण्डलानि येषां तेन राजमण्डलेन राजचक्रेणोच्चलितमेवोत्थितमेव । **नूपुरकः** विलोकयेत्यत्र ( नित्यवीप्सयोरिति द्वित्वम् ) एषां राज्ञामन्योन्येषां परस्परेषां ( कर्मव्यतिहारे सर्वनाम्नो द्वे वाच्ये इति द्विर्भावः, समासवच्च बहुलमिति बहुलग्रहणादसमासवद्भावे पूर्वपदस्थस्य सुपः सुर्वक्तव्य इति सुरादेशः ) संघट्टमानानि संघृष्टानि यानि केयूराण्यङ्गदानि तेभ्यः समुच्चलन्त उच्छलन्तो ये कनकस्य हेम्नः कणास्तेषां मिषेण व्याजेन मतापाग्नेर्विस्फुलिङ्गा दृश्यन्त इवेत्युत्प्रेक्षा । **मञ्जीरकः पश्येति.** शोभनैर्भटैर्योधैर्भक्तिरेव श्रद्धैव ( भक्तिः सेवागौणवृत्त्योर्भङ्ग्यां श्रद्धाविभागयोरिति हेमचन्द्रः ) स्फुटभावं व्यक्तिं गमिता नीता न तु शक्तिर्गमिता, किञ्च अञ्जलिर्हस्तसम्पुटक एव विरचितः कृतो न तु मुष्टिर्विरचितः, अपि च मौलिरेव शीर्षमेव नमितः मह्वीकृतः न तु चापः, ज्यारोपणार्थं कार्मुकं न नमितमिति भावः । परिसंख्यालङ्कारस्तथाछेकवृत्त्यनुप्रासौ । परिसंख्या निषिध्यैकमेकस्मिन्वस्तुयन्त्रणामिति तल्लक्षणात् । स्वागता वृत्तम् । स्वागतेति रनभाद्गुरुयुग्ममिति लक्षणात् ॥ ३१ ॥ **नूपुरकः कथमिति.** एतेषां राज्ञां संरम्भ आटोपः (आवेगः संवेगः संरम्भः संभ्रमस्तथाटोप इति हलायुधः ) आरम्भे प्रारम्भे रमणीयो मनोहर एव नान्तत इति भावः।

आद्वीपात्परतोऽप्यमी नृपतयः सर्वे समभ्यागताः
कन्येयं कलधौतकोमलरुचिः कीर्तिश्च लाभास्पदम् ।
नाकृष्टं न च टाल्कृतं न नमितं स्थानाच्च न त्याजितं
केनापीदमहो धनुः किमधुना निर्वीरमुर्वीतलम् ॥ ३२ ॥

( नेपथ्ये )

आः, कोऽयमलीकवैतालिको धनुर्मात्रकेऽपि नमयितव्ये निर्वीरमुर्वीतलमुपदिशति ।

नूपुरकः—वँअस्स, कस्स इमो महीअलचलन्तराहुरहचक्करवकक्कसो कण्ठधुणी सुणीअदि ।

---

१. वयस्य, कस्याय महीतलचलद्राहुरथचक्ररवकर्कशः कण्ठध्वनिःश्रूयते।

---

मञ्जीरकः आद्वीपादिति. अमी दृश्यमानाः सर्वेऽपि नृपतयः क्षोणीपालाः द्विर्गता आपोऽस्मिन्निति द्वीपं (द्व्यन्तरुपसर्गेभ्योऽप ईदितीत्त्वम्) तस्मात्, द्वीपमभिव्याप्येत्यर्थः ( आङ्मर्यादेति समासे नाव्ययीभावादिति पञ्चम्या अलुक् ) अथवा आद्वीपादिति भिन्ने पदे अर्थस्तु प्राग्वत्। परतोऽपि द्वीपस्य परभागादपि समभ्यागताः सम्प्राप्ताः। कलधौतस्य सुवर्णस्येव कोमला मृद्वी रुचिः कान्तिर्यस्याः ( कलधौतं रूप्यहेम्नोरित्यमरः ) एतादृशी कन्या वैदेही, कीर्तिश्च चशब्दः समुच्चायकः। कीर्तिपक्षे कलधौतस्य रूप्यस्येव कोमलरुचिर्यस्या इत्यर्थः । कीर्तेः श्वेतत्ववर्णनं कविसमयेन । उक्तञ्च दर्पणे—मालिन्यं व्योम्नि पापे यशसि धवलता वर्ण्यते हासकीर्त्योरिति । लाभस्य कन्याकीर्तिप्राप्तिरूपलाभस्यास्पदं स्थानमेतादृशं धनुः केनापि नाकृष्टं, न च टाल्कृतं टङ्कारीकृतं, न नमितं नम्रीकृतं, स्थानाच्च धनुराश्रितस्थलाच्च न त्याजितं न चालितमधुना सम्प्रति उर्वीतलं पृथिवीतलं निर्वीरं किम् शूररहितं किम्। केचित्तु लाभास्पदमिति कन्याकीर्त्योर्विशेषणं कुर्वन्ति। श्लेषविषादनच्छेकानुप्रासा अलङ्काराः। नानार्थसंश्रयश्लेषो वर्ण्यावर्ण्योभयाश्रितः। इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनमिति, सोनेकस्य सकृत्पूर्व इति च तेषां लक्षणसद्भावात् । शार्दूलविक्रीडितं वृत्तम्॥३२॥अत्र विलोभनं नाम मुखसन्ध्यङ्गमुपक्षिप्तम्, गुणाख्यानाद्विलोभनमिति दशरूपके उक्तत्वात्। नेपथ्य इति. धनुरेव धनुर्मात्रं ( मयूरव्यंसकादित्वात्समासः ) नूपुरकः महीतले चलन्यो राहोः स्वर्भानो रथस्य रवः शब्दः स इव कर्कशः क्रूरः कण्ठध्वनिः श्रूयते । मञ्जीरकः सकलदेशपदेन समुद्रवलयितभूमेर्ग्रहणं तेन रावणवसतेरेतद्देशबाहि-

**मञ्जीरकः**——मयाप्ययमपरिचितः । तदेनं पृच्छामि तावत् । (परिक्रम्य ।) अहो, कः खलु भवान्यः सकलदेशदर्शिनो ममापि न विख्यातः ।

(प्रविश्य ।)

**पुरुषः**—(साटोपं परिक्रम्य । सक्रोधम् ।) आः पाप, वैतालिकापसद, कतिपयग्रामटिकापर्यटनदुर्विदग्ध, कथं मामपि दश–(इत्यर्धोक्ते । स्वगतम् ।) कथं संवरणीयं विवरितुमुपक्रान्तोऽस्मि । भवतु । इदमेव तावन्निर्वाहयामि । (कथं मामपि दशदिग्विलासिनीकर्णपूरीकृतकीर्तिपल्लवं त्रिभुवनवीरनामधेयं कूपमण्डूक इव सागरमविख्यातमपदिशसि । तत्कथय । क्व तावत्कर्णान्तनिशमयगुणं कन्यारत्नं कार्मुकं च ।

---

भूतत्वेन परिचयाभावो युज्यत एव । **प्रविश्य पुरुष इति.** वैतालिकापसद प्रबोधकाधम (प्रबोधका मागधबन्दिसूता वैतालिका मङ्गलपाठकाश्चेति हलायुध) कतिपयासु कासुचिदल्पो ग्रामो ग्रामटिका (अल्पार्थे तद्धिता इति बहुवचनबोध्यष्टिकच्प्रत्यय इत्युद्योते स्पष्टम् । क्वचित्स्वार्थिका प्रत्यया प्रकृतितो लिङ्गवचनान्यतिवर्तन्त इति स्त्रीत्वम्) तासु पर्यटनेन दुर्विदग्ध पण्डितंमन्य । **स्वगतमिति.** अश्राव्यं स्वगतं मतमिति **दशरूपके** संवरणीयं । गोपनीयं विवरितुं व्यञ्जितुमुपक्रान्तोऽस्मि आरब्धवानस्मि। इदमेवोक्तं दशेति पदमेव निर्वाहयामि प्रकृतार्थसाधकत्वेन योजयामि । कूपमण्डूकः सागरमिव दशसंख्याका दिशः काष्ठाः, दिश एकत्वेपि चतस्रः कीर्तयेद्वाष्टौ दश वा ककुभ क्वचिदिति **वाग्भटोक्त**कविसमयेन नानेकत्ववर्णनमसमञ्जसम् । ता एव विलासिन्यः सुन्दर्यः (विलासशब्दान्मत्वर्थे इनिः, ऋन्नेभ्य इति ङीप्) तासां कर्णपूरीकृतं (अभूततद्भावे कृभ्वस्तियोगे संपद्येति च्विः, अस्य च्वावितीत्वम्) कीर्तिरेव पल्लवं येन, त्रयाणां भुवनानां समाहारस्त्रिभुवनं (पात्राद्यन्तत्वात्स्त्रीत्वाभावः) तस्मिन्वीरं श्रेष्ठं नामधेयं यस्य (वीरो जिने नटे श्रेष्ठ इति हैमः) मामपि कथमविख्यातमप्रसिद्धमपदिशसि लक्षयसि । तत्तस्मात्कथय क्व कुत्र (किमोऽदिति सूत्रेणात् प्रत्ययः, क्वातीति क्वादेशः) कर्णान्तेन कर्णप्रान्तेन (अन्तः स्वरूपे निकटे प्रान्ते निश्चयनाशयोरिति हैमः) निशमयाः श्रवणीया गुणाः सौन्दर्यशीलाद्या यस्य(निशमयेत्यत्र निपूर्वाच्छमयतेरेरच् इत्यच्प्रत्ययः, संज्ञापूर्वकविधेरनित्यत्वान्न णिलोपः) तत्कन्यारत्नं कार्मुकञ्च । कार्मुकपक्षे तु कर्णान्ते कर्णनिकटे नितरां

---

१ शमनीयगुणमिति पाठः ।

मञ्जीरकः—इदं तावत्कार्मुकम्। कन्या तु चरमं लोचनपथमवतरिष्यति।

पुरुषः—( ससंरम्भम्। ) धिङ् मूर्ख। कथं रे, राशिनक्षत्रपाठकानां गोष्ठी न दृष्टवानसि। तेऽपिकन्यामेव प्रथमं प्रकटयन्ति, चरमं धनुः।

मञ्जीरकः—( स्वगतम्। ) कथमयं वाचाटतां प्रकटयति। भवतु। अनयैव तावदेनं निवारयामि। ( प्रकाशम्। ) अये, एतावति वीरमण्डले भवानेव नक्षत्रविद्याकुशलः।

पुरुषः—( सक्रोधम्। ) आः, कथं रे, अहमेव क्षत्रविद्यायामकुशलः।

मञ्जीरकः—तत्कथं कार्मुकमन्तरेणैवकन्याविलोकनायोत्कण्ठसे।

---

शमय विश्रमितो गुणो यस्य आकर्णकृष्टगुणमिति भाव अथवा कर्णान्तनिशमनीयगुणमिति पाठः कल्पनीयः शमेरर्हार्थेऽनीयर्, अर्थः प्राग्वत् **मञ्जीरकः** इदं तावत् इदमेव ( यावत्तावच्च साकल्येऽवधौ मानेऽवधारण इत्यमरः ) चरमं पश्चात् लोचनपथम् दृङ्मार्गम् ( ऋक्पूरब्धूपथामित्यनेन समासान्तोऽप्रत्ययः ) **पुरुष** ससंभ्रमम् सगर्वम् ( दर्पो मदोऽवलेपो मानो गर्वो भवेदहङ्कारः। आवेगः संवेगः संरम्भः सम्भ्रमस्तथाऽटोप इति हलायुध ) धिङ् मूर्खेत्यत्र सम्बुध्यन्तस्य धिक्शब्दार्थान्वयाभावाद्द्वितीया न भवतीति प्रौढमनोरमायां स्पष्टम्। राशीनां, मेषो वृषोऽथ मिथुनं कर्कटः सिंहकन्यके। तुला च वृश्चिको धन्वी मकरः कुम्भमीनकौ। एतेषां, नक्षत्राणामश्विन्यादीनां पाठकानामध्येतॄणां गोष्ठीं परिषदं न दृष्टवानसि नाद्राक्षीरिति प्रश्नः। तेपि मौहूर्तिका अपि प्रथममादौ कन्यां तदभिधराशिं प्रकटयन्त्याविष्कुर्वन्ति। चरमं पश्चाद्धनुस्तन्नामकराशिम्। **मञ्जीरकः** वाचाटतां कुत्सितबहुभाषणं ( आलजाटचौ बहुभाषिणीति सूत्रेणाटच् ) **अनयैव** वाचाटतयैव पुरुषं ( द्वितीयाटौस्स्वेनेत्यनेनेदंशब्दस्यान्वादेश एनादेशः ) **प्रकाशमिति.** सर्वश्राव्यं प्रकाशं स्यादिति दशरूपके। **अये इति** क्रोधे ( अये क्रोधे विषादे चेति मेदिनी ) एतावति एतत्परिमाणे ( यत्तदेतेभ्य परिमाणे इति वतुप्, आसर्वनाम्न इत्यात्त्वम् ) वीरमण्डले योधसमूहे नक्षत्रविद्यायां कार्तान्तिकविद्यायां कुशलः प्रवीणः। अत्र वक्रोक्त्या ति भिन्नं पदं तथा च भवानेव क्षत्रविद्यायां धनुरादिविद्यायां कुशलो

पुरुषः—( साटोपम् । परिक्रम्य । ) कथं ममापि चापारोपणे संशयः ।

मञ्जीरकः—अथ किम् ।

पुरुषः—तदेष ममाभिसंभाव्यते । यदि

विनैवाम्भोवाहं बहुलरुचिलिप्ताम्बरतला-
तडिल्लेखा हेमद्युतिविततिरम्या विलसति ।

यदि वा

विनैव स्वर्गङ्गां नभसि रभसोन्मुद्रशफरी-
परीवर्तैः साकं स्फुरति नवनीलोत्पलवनम् ॥ ३३ ॥

( विलोक्य सविषादम् । ) कथमस्मत्प्रतिज्ञाभङ्गाय विपरीतं सृष्टिनैपुणं प्रणीतवान्विधिः । नन्विदं तथैव पश्यामि । ( विमृश्य ) अथवा क एष विधिरपि मद्विरोधाय ।

---

नेत्यर्थः । पुरुषः सक्रोधम् वक्रोक्तिश्रवणेन रोषः । **मञ्जीरकः** कार्मुकमन्तरेण कार्मुकेण विना ( पृथग्विनान्तरेणर्ते इत्यमरः ) अन्तरान्तरेण युक्त इति द्वितीया ) । **पुरुषः** तदा तास्मिन्काल एष संशयो ममाभिसम्भाव्यते यदि **विनैवेति.** अम्भांसि वारीणि वहतीति ( कर्मण्यण् ) तं घनं विना ( पृथग्विनानानाभिरिति द्वितीया ) बहुलयाऽदभ्रया ( अदभ्रं बहुलं बह्वित्यमरः ) रुच्या प्रभया लिप्ताद्व्याप्तादम्बरतलाद्व्योमप्रदेशात् हेम्नः शातकुम्भस्य द्युतिविततिः कान्तिनिचयः सैव रम्या रुचिरा तडिल्लेखा विद्युत्पङ्क्तिर्विलसति प्रकाशते. वा अथवा यदि स्वर्गङ्गां मन्दाकिनीं विनैवान्तरेणैव नभस्यम्बरे नवानां नूत्नानां नीलोत्पलानामिन्दीवराणा वनं काननं रभसेन **हर्षेण** उन्मुद्राः प्रफुल्ला या. शफर्यः प्रोष्ठयस्तासां परीवर्तैः प्रवर्तनैः ( परिवर्तो विनिमये कूर्मराजे प्रवर्तन इति मेदिनी ) सार्धं साकं स्फुरति दीप्यते, तदेषेति पाऽठेपि तदित्यस्य तदेत्येवार्थः. प्रमाणन्तु एकविंशातितमे पद्ये प्रदर्शितम् । सम्भावनालङ्कारः वृत्त्यनुप्रासश्च । संभावनं यदीत्थं स्यादित्यूहोऽन्यस्य सिद्धय इति तल्लक्षणात् । मम्मटभट्टमते तु यद्यर्थातिशयोक्तिरलङ्कारः। यद्यर्थोक्तौ च कल्पनमिति लक्षणात् । अत्र गर्वो नाम नाट्यालङ्कारः गर्वोऽवलेपजं वाक्यमिति **साहित्यदर्पणे.** शिखरिणी वृत्तम् ॥ ३३ ॥

मयि क्षीरोदन्वन्निभृतमुरजिन्नाभिनलिनीं
निजक्रीडावापीजलकमलिनीं कर्तुमनसि।
पदभ्रंशाशङ्की मधुरमधुरालापचतुरै-
श्चतुर्भिः स्वैर्वक्त्रैरनुनयपरोऽभूदयमपि ॥ ३४ ॥

( पुनर्निपुणं निरूप्य। ) अये, सादृश्येन प्रतारितोऽस्मि।

तडिल्लेखा नेयं विलसति परं सौधशिखरे
वसन्त्याः कस्याश्चित्कनकरुचिरा गात्रलतिका।

---

**विलोक्य सविषादमिति.** सौधशिखरे सीतां दृष्ट्वा सादृश्येनान्यथा शङ्कते **कथमिति.** अस्मत्प्रतिज्ञायाः सन्धाया भङ्गाय विघाताय विधिर्ब्रह्मा विपरीतं सृष्टिनैपुणं सृष्टिचातुर्यम् ( हायनान्तयुवादिभ्योऽणिति भावेऽण् ) प्रणीतवान्प्रयुक्तवान् कथं किम् ( कथं हर्षे च गर्हायां प्रकारार्थे च सम्भ्रमे। प्रश्ने सम्भावनायाञ्चेति मेदिनी ) अयं भावः—कथं ममापि चापारोपणे संशय इत्यनेन संशयो नास्तीति प्रतिज्ञातम्, तदुपरि विनैवाम्भोवाहमित्यादिप्रकारेणोक्तं यदि स्याच्चेन्मम प्रतिज्ञाभङ्गः स्यादिति प्रतिपादितम्. इदानीमुपरि तडिल्लेखादि दृश्यते तन्मत्प्रतिज्ञाभङ्गार्थमेवेति। **अथवेति.** एष विधिरपि ब्रह्मापि ( एतत्तदोः सुलोपोऽकोरिति सुलोपः ) मद्विरोधाय मदपकाराय. तदेव दर्शयति **मयीति.** मयि क्षीरोदन्वति दुग्धसमुद्रे। लवणेक्षुसुरासर्पिर्दधिक्षीरजलाः समा इति सप्तसमुद्रान्यतमे निभृतस्य मुरजितो विष्णोः ( क्विप् चेति क्विपि, ह्रस्वस्य पितीति तुक् ) नाभिनलिनीं तुन्दकूपिकाकमलिनीं ( नाभिः स्यात्तुन्दकूपिकेति शारदीनाममाला ) निजक्रीडायाः वाप्यां दीर्घिकायां जलकमलिनीं जलपद्मिनीं कर्तुं मनो यस्य तस्मिन्सति. ( तुंकाममनसोरपीति तुमुनो मकारलोपः ) अयमपि ब्रह्मापि पदस्य स्थानस्य ( पदं व्यवसितत्राणस्थानलक्ष्माङ्घ्रिवस्तुष्विति मेदिनी ) भ्रंशमाशङ्कते तच्छीलः मधुरेभ्यो मधुरा अत्यन्तं मधुरा इत्यर्थः। चतुर्भिः चतुःसंख्याकैः स्वैः स्वकीयैः वक्त्रैर्लपनैरनुनयपरः प्रसादनपरोऽभूत् ( भूधातोर्लुङ्, गातिस्थेति सिचो लुक् ) काव्यलिङ्गवृत्त्यनुप्रासावलङ्कारौ। समर्थनीयस्यार्थस्य काव्यलिङ्गं समर्थनमिति तल्लक्षणात्। शिखरिणी वृत्तम् ॥ ३४ ॥ सादृश्येन तडिन्नीलोत्पलमत्स्यसाम्येन। अनेन जानकीतनुकटाक्षनेत्रस्य तडिन्नीलोत्पलमीनसादृश्यं प्रतारणे हेतुरिति सूचितम्. प्रतारितोऽस्मि वञ्चितोऽस्मि । तदेव विशदयति **तडिदिति.** इयं प्रत्यक्षदृ-

अपीदं नोन्मज्जत्कुवलयवनं मीनतरलं
परं तस्या एव स्फुरति नयनालोकललितम् ॥ ३५ ॥

( विभाव्य । ) नूनं तदेव सीताभिधानं कन्यारत्नम् । ( पुनः सहर्षम् ।

राजीव जीवसि मुधा न सुधाकर त्व-
मस्याः समः पदनखस्य कुतो मुखस्य ।
अग्रे दृशोर्मृगदृशः कतमः कुरङ्ग-
स्तत्खञ्जन त्वमपि किं जनरञ्जनाय ॥ ३६ ॥

---

श्यमाना ( इदमः प्रत्यक्षगतं समीपतरवर्ति चैतदो रूपमित्युक्तेः ) तडितो विद्युतो लेखा श्रेणिर्न, परं केवलं ( परं तु केवल इति हेमचन्द्रः ) सौधस्य राजसदनस्य ( सौधोऽस्त्री राजसदनमित्यमरः ) शिखरेऽग्रे वसन्त्याः कस्याश्चित्सुन्दर्याः कनकवद्धेमवद्रुचिरा चार्वी गात्रं वपुरेव लतिका कोमललता, ( प्रत्ययस्थादितीत्त्वम् ) विलसति चकास्ति । इदमपि मीनाभ्यां तरलं चञ्चलं उन्मज्जन्ति कुवलयानि कमलानि तेषां वनं काननं न, परन्तस्याः सौधशिखरस्थिताया एव नयनयोरीक्षणयोरालोकस्य वीक्षणस्य च ललितं सौकुमार्यं । सुकुमारतयाङ्गानां विन्यासो ललितं भवेदिति दर्पणे. स्फुरति दृश्यते. भ्रान्तापन्हुतिरलङ्कारः भ्रान्तापन्हुतिरन्यस्य शङ्कायां भ्रान्तिवारण इति तल्लक्षणात् । दण्डी त्वत्र तत्त्वाख्यानोपमेत्युपमाभेदं मेने. यदाह-न पद्मं मुखमेवेदं न भृङ्गौ चक्षुषी इमे । इति विस्पष्टसादृश्यात्तत्वाख्यानोपमा मतेति. । शिखरिणी वृत्तम् ॥ ३५ ॥ नूनमिति तर्के ( नूनं तर्केऽर्थनिश्चय इत्यमर ) तदेव मया पृष्टमेव, कन्यारत्नं श्रेष्ठकन्यका (रत्नं स्वजातिश्रेष्ठेऽपीत्यमरः) **राजीवेति.** हे राजीवाम्भोरुह त्वं मुधा वृथा जीवसि सीतायाः मुखेन तिरस्कृतत्वादिति भावः। हे सुधाकर कलानिधे त्वमस्याः पदनखस्य चरणनखरस्य समस्तुल्यो नासि कुतो मुखस्य नैवेत्यर्थः। मृगदृशः कुरङ्गाक्ष्या दृशोरग्रे कतमः कुरङ्गो मृगः ( वा बहूनां जातिपरिप्रश्ने इति डतमच् ) न कोऽपीत्यर्थः। तत्तस्माद्धे खञ्जन त्वमपि जनरञ्जनाय जनाल्हादाय किम् नैव भविष्यसीति भावः। प्रतीपकाव्यार्थापत्तियमकच्छेकानुप्रासा अलङ्काराः आक्षेप उपमानस्य प्रतीपमुपमेयता । तस्यैव यदि वा कल्प्या तिरस्कारनिबन्धनम् इति, कैमुत्येनार्थसांसिद्धिः काव्यार्थापत्तिरिष्यत इति च लक्षणसद्भावात् । वसन्ततिलका वृत्तम् ॥ ३६ ॥

( पुनः सरभसम् । )

कदली कदली करभः करभः
करिराजकरः करिराजकरः ।
भुवनत्रितयेऽपि बिभर्ति तुला-
मिदमूरुयुगं न चमूरुदृशः ॥ ३७ ॥

मञ्जीरकः—सखे नूपुरक, किमेतत् । कस्याश्चिदपि हस्तादादाय सानन्दमालोकयत्यान्तःपुरिको जनः ।

नूपुरकः—अहं एरिसं संभावेमि जं किर गुरुभवणादो आगदाए चन्दणिआए समप्पिदं चित्तपडं पुलोवेदि त्ति ।

---

१. अहमीदृशं संभावयामि यत्किल गुरुभवनादागतया चन्दनिकया समर्पितं चित्रपटं विलोकयतीति ।

---

सरभसं सहर्षम् । कदलीति. सर्वं वाक्य सावधारणमिति न्यायात्कदली कदल्येवेत्यर्थः। न तदूरुक्षमेति भावः। करभः करभेदेशः (मणिबन्धादाकनिष्ठं करस्य करभो बहिरित्यमरः ) करभ एव । करिराजस्य गजश्रेष्ठस्य करः शुण्डादण्डः करिराजकर एव नोरुसदृश इतिभावः । ननु कदलीकरभकरिराजकराणां सादृश्याभावेपि भुवनान्तरेऽन्यत्किञ्चित्सदृशं स्यादित्याशङ्कान्निरस्यति भुवनत्रितयेऽपीति. चमूरोर्हरिणविशेषस्य दृशाविव दृशौ यस्यास्तस्या वैदेह्या इदं प्रत्यक्षदृश्यमानमूरुयुगं सक्थिद्वन्द्वं भुवनात्रितयेऽपि त्रिभुवनेऽपि ( संख्याया अवयवे तयबिति तयप् ) तुलां सादृश्यं न बिभर्ति न धरति । विधिमतीपलाटानुप्रासवृत्त्यनुप्रासा अलङ्काराः। सिद्धस्यैव विधानं यत्तदाहुर्विध्यलङ्कृतिमिति, शाब्दस्तु लाटानुप्रासो भेदे तात्पर्यमात्रत इति च तल्लक्षणात् । तोटकवृत्तम् इह तोटकमम्बुधिसैः कथितमिति तल्लक्षणात् ॥ ३७ ॥ मञ्जीरकः अन्तःपुरे भवः आन्तःपुरिकः (तत्र भव इत्यधिकारे अन्तःपूर्वपदादिति ठञ् । ञित्त्वादादिवृद्धिः ) जनः कस्याश्चिद्धस्तादादाय सानन्दमिति क्रियाविशेषणम् ( क्रियाविशेषणानां कर्मत्वाद्द्वितीया ) आलोकयति पश्यत्येतत्किमित्यन्वय. । नूपुरकः गुरुभवनाद्याज्ञवल्क्यागारात्,चन्दनिकया तन्नामकस्त्रिया समर्पितं दत्तम्। नूपुरकः भर्तृदारिका सीता ( राजा भट्टारको देवस्तत्सुता भर्तृदारिकेत्यमर. ) अन्यः इतरः कोपि नीलोत्पलस्येन्दीवरस्य दामेव मालेव ( माला स्रग्दाम माल्यं स्यादिति शारदीनाममालायाम् ) श्यामलोऽसितः (सिध्मादि-वाल्लच्)

मञ्जीरकः—स त्वया दृष्टश्चित्रपटः

नूपुरकः—अथ किम् ।

मञ्जीरकः—तत्कथय किं तत्र लिखितम् ।

नूपुरकः—भट्टदारिआ[1] दाव अणच्च को वि णीलुप्पलदामसामलओ कुसुमसरसरिसरूओ कुण्डलीकदहरचावो चक्कवट्टिकुमारो ।

मञ्जीरकः—अहह, मुग्धः खल्वबलाजनः । यदेवमपि कठोरप्रतिज्ञे राजनि किशोरवयसं जामातरमाशंसति । सखे, जानासि केन लिखितं चित्रमिति ।

नूपुरकः—जाणामि[2] महेसिणो जण्णवक्कस्य दुदिअए धम्मआरिणीए ।

मञ्जीरकः—( सहर्षम् । ) इदानीमुद्भिन्नो मम मनोरथाङ्कुरः । देवी हि मैत्रेयी सिद्धयोगिनी कालत्रयदर्शिनी सा नालीकमालिखेत ।

---

१. भर्तृदारिका तावदन्यश्च कोऽपि नीलोत्पलदामश्यामलः कुसुमशरसदृशरूपः कुण्डलीकृतहरचापश्चक्रवर्तिकुमारः ।

२. जानामि महर्षेर्याज्ञवल्क्यस्य द्वितीया धर्मचारिण्या ।

---

कुसुमशरो मदनः तस्य कुसुमशरत्वं कविसमयात् । उक्तं च दशरूपके मौर्वी रोलम्बमाला धनुरथ विशिखाः कौसुमाः पुष्पकेतोर्भिन्नं स्यादस्य बाणैर्युवजनहृदयं स्त्रीकटाक्षेण तद्वदिति। तस्य सदृशं तुल्यं रूपं सौन्दर्यं यस्य, कुण्डलीकृतः आकर्णज्याकर्षणेनेति भाव । चक्रवर्तिनः सार्वभौमस्य कुमारश्च मया चित्रपटे दृष्टाविति शेषः। मञ्जीरकः अहहेत्यद्भुते ( अहहेत्यद्भुते खेद इत्यमरः ) कठोरा प्रतिज्ञा धनुरारोपणरूपा यस्य तस्मिन् राजनि जनके सति किशोरवयसं अल्पवयसं, आशंसतीच्छति। नूपुरकः द्वितीयया ( पूरणार्थे द्वेस्तीय इति तीयप्रत्ययः ) धर्मचारिण्या भार्यया। मञ्जीरकः इदानीमस्मिन्काले (दानीं चेति दानींप्रत्ययः) उद्भिन्न उद्गतो मम मनोरथ एवाङ्कुरः । हि यस्मान्मैत्रेयी याज्ञवल्क्यद्वितीयभार्या सिद्धो योगो यस्या अस्तीति सिद्धयोगिनी.( न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकर इति त्वसुब्वत इति महाभाष्यप्रयोगात्प्रायिकम् ) कालत्रयं

**नूपुरकः**—सव्वं संभावीअदि जइ इमो जरठङ्गो इदो ओसर'द

**मञ्जीरकः**—आः, कोऽयं किमिदम् । एनमपसारयामि । अये, किमितस्ततो विलोकयसे। नन्विदं शांभवं धनुः। तदिहैव दीयतां दृष्टिः ।

**पुरुषः**—आः, किमुच्यते दृष्टिरिति । नन्वियं मुष्टिरपि दीयते । ( परिक्रम्य शेखरभ्रंशमभिनीय सविषादं विलोकयति । )

**मञ्जीरकः**—

अये लङ्केश विस्रस्तशेखरालोकनेन ते ।
समयो याति तत्तूर्णं गृहाण हरकार्मुकम् ॥ ३८ ॥

**पुरुषः**—( स्वगतम् । ) कथमनेन विदितोऽस्मि । ( विमृश्य । ) अथवा घुणाक्षरन्यायगतं शब्दसादृश्यमेतत् । ( प्रकाशम् । ससंरम्भम् )

---

१ सर्वं संभाव्यते यद्ययं जरठाङ्ग इतोऽपसरति ।

---

पश्यतीति तथा अतः सा ऽलीकं मिथ्या नालिखति **नूपुरकः** जरठाङ्गः कर्कशतनुः ( जरठः कर्कशे पाण्डौ कठिनेप्यभिधेयवदिति मेदिनी ) रावण इति भावः। इतः अस्मात्स्थानात् ( पञ्चम्यास्तसिल्, इदम इशादेश. ) अपसरति गच्छति. **मञ्जीरकः** आः इति क्रोधे. **पुरुषः मुष्टिरिति**. धनुरारोपणायेति भाव· । शेखरभ्रंशमभिनीय नाटयित्वा सविषादम् अशुभसूचकत्वाद्विषादः । **मञ्जीरकः अये इति.** अये इति क्रोधे ( अये क्रोधविषादे चेति मेदिनी ) ते तव केशादलकाद्विस्रस्तस्य भ्रष्टस्य शेखरस्य शिरोभूषणस्यावलोकनेन प्रेक्षणेनालम् प्रेक्षणं न कर्तव्यमित्यर्थ· (अलं भूषणपर्याप्तिशक्तिवारणवाचकमित्यमरः) समयोऽवसरो याति गच्छति. तत्तस्मात्तूर्णं सत्वरं हरकार्मुकं शङ्करधनुर्गृहाण स्वीकुरु ( ग्रहधातोर्लोट्, हलःश्न इति शानच्, अतो हेरिति लुक् ) वक्रोक्त्या लङ्केशेति पृथक्पदम् विस्रस्तशेखरालोकनेन ते समयो याति. आलोकनेनेति हेतौ तृतीया शेषं पूर्ववत् । वक्रोक्तिवृत्त्यनुप्रासावलङ्कारौ वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनमिति तल्लक्षणात् । श्लोकश्छन्दः ॥ ३८ ॥ **पुरुषः** विमृश्य विचार्य, अथवेति पक्षान्तरे घुणस्य वज्रकीटस्य यान्यक्षराणि तेषां न्याये गतं स्थितम् शब्दस्य सादृश्यमेतन्मञ्जीरकोक्तम् । प्रकाशं सर्वश्राव्यं

सावलेपकमनीयमुदस्य
क्रीडयैव विनिबध्य च मौर्वीम् ।
कृष्टमेव हरकार्मुकमेत-
द्दृश्यमत्र सुदृशो हृदयं च ॥ ३९ ॥

( धनुषि हस्तमर्पयित्वा । स्वगतम् । ) कथं न चलत्यपि । भवतु । (प्रकाशम् ।) अये, धनुरिति वक्रः पन्थाः । तत्सरलेन करवालधारापथेन सीतामानयामि ।

**मञ्जीरकः**—कथमतिप्रगल्भसे । न विलोकयसि ।

रोषारुणीकृतविलोचनकान्तिभिन्न-
भ्रूभङ्गभीमघटितभ्रुकुटीविटङ्कम् ।
उत्खातलोलकरवाललताकराल-
दोर्दण्डचण्डचरितं नरवीरचक्रम् ॥ ४० ॥

**पुरुषः**—( कृपाणमुद्यम्य । परितो विलोक्य । ) पश्यत पश्यत ।

---

प्रकाशं स्यादिति भरतः । ससम्भ्रमम् सगर्वम् । **सावलेपेति.** अवलेपेन गर्वेण सहितं सावलेपं तच्च तत्कमनीयञ्च इदं क्रियाविशेषणम्।एतत्सन्निकृष्टं हरकार्मुकं क्रीडयैव हेलयैवोदस्योत्क्षिप्य मौर्वीं शिञ्जिनीञ्च निबध्य एतत्सन्निकृष्टं हरकार्मुकं सुदृशः कन्याया हृदयञ्च कृष्टमेव दृश्यं प्रेक्षितव्यम् ( ऋदुपधाच्चाक्लृपिचृतेरिति क्यप्) तुल्ययोगितावृत्त्यनुप्रासौ, वर्ण्यानामितरेषां वा धर्मैक्यं तुल्ययोगितेति लक्षणात् । स्वागता वृत्तम् । अत्र गर्वो नाम नाट्यालङ्कारः गर्वोऽवलेपजं वाक्यमिति साहित्यदर्पणे ॥ ३९ ॥ **अये इति.** क्रोधे। वक्रः कुटिलः पन्था मार्गः धनुषो वक्रत्वात् तत्सरलेन ऋजुना करवालधारापथेन चन्द्रहासाख्यकृपाणनिशितमुखमार्गेणेत्यर्थः। धारासैन्याग्रिमस्कन्ध इत्युपक्रम्य खड्गादेर्निशितमुख इति मेदिनी।कृपाणस्य सरलत्वात् सीतामानयामीति।अयं भावः। खड्गमुद्यम्य युद्धायोपस्थिते मयि जनकः स्वयमेव मह्यमर्पयिष्यति सीतामिति । **मञ्जीरकः** प्रगल्भसे विकत्थसे. **रोषेति.** रोषेण त्वत्प्रागल्भ्यजनितक्रुधाऽरुणीकृतानां रक्तीकृताना विलोचनानां नयनानां कान्त्या प्रभया भिन्नयोर्मिश्रयोर्भ्रुवोर्भङ्गेन रचनया भीमं भयानकं यथा तथा घटितः संयोजितः भ्रुकुटीविटङ्कः भ्रुकुट्यूर्ध्वप्रदेशो येन। (विटङ्क उन्नतो देश इति रत्नकोशः ) उत्खाताः कोशादुद्धृता ये लोलकरवालाश्चञ्चलत्कृपाणास्त एव लताः प्रतानिन्यस्ताभिः करालैर्भीषणैः ( करालो दन्तुरे तुङ्गे भीषणे चाभिधेयवदिति मेदिनी ) दोर्दण्डैर्बाहुदण्डैश्चण्डं तीक्ष्णम् (तिग्मं तीक्ष्णं खरं

निर्भिन्नवैरिकरिकुम्भतटीविमुक्त-
मुक्ताफलप्रकरतारकिताम्बरश्रीः ।
यः कालरात्रिरिव भाति रणे स एष
रे रे नृपा मम कृपाकृपणः कृपाणः ॥ ४१ ॥

( आकाशे कर्णं दत्त्वा । ) किं ब्रूथ ।

एकः कथं बहुतरैः सुभटैः करोमि
संग्रामडम्बरमिति त्यज रे विषादम् ।
यं मन्यसे सुलभमत्र सहैव तेन
चेतो निधेहि समरे समरेखयैव ॥ ४२ ॥

अहो धृष्टता मनुष्यकीटानाम् । तदेतान्निजमूर्त्यैव तावद्भीषयामि ।

( साटोपं निष्क्रान्तः । )

---

तीव्रं चण्डमुष्णमिति हलायुधः ) चरितं चेष्टितं यस्य तादृशं नरेषु वीराणां शूराणां चक्रं गणम् ( चक्रं प्रहरणे गण इति हैमः ) न विलोकयसि न पश्यसि इति पूर्ववाक्येन सम्बन्धः । काक्वा प्रश्नार्थत्वम् सर्वेपि भूपतयः खङ्गयुद्धनिपुणा इति भावः । परिकरच्छेकानुप्रासवृत्त्यनुप्रासा अलङ्काराः अलङ्कारः परिकरः साभिप्राये विशेषण इति तल्लक्षणात् । वसन्ततिलका वृत्तम् ॥ ४० ॥ पुरुषः **निर्भिन्नेति.** रे रे नृपा राजानः निर्भिन्ना विदारिता वैरिणामरातीनां ये करिणो दन्तिनस्तेषां कुम्भतट्यः शिरःपिण्डप्रदेशास्ताभ्यो विमुक्तानां निर्गतानां मुक्ताफलाना मौक्तिकानां प्रकरेण गणेन तारका उडूनि सञ्जाता अस्मिन्निति तारकितं यदम्बरं व्योम तस्य श्रीरिव श्रीर्यस्येति उष्ट्रमुखवद्बहुव्रीहिः । यः कृपाणो रणे सङ्गरे कालस्य प्रलयकालस्य रात्रिरिव रजनीव, रजनिपक्षे तारकिताम्बरस्य श्रीर्यस्यामिति विग्रहः । भाति प्रकाशते स एष मम कृपाणोऽसिः कृपायां दयायां कृपणः कदर्यः वर्तत इति शेषः । गर्वो नाम नाट्यालङ्कारः । परिकरवृत्त्यनुप्रासौ । वसन्ततिलका वृत्तम् ॥ ४१ ॥ **एक इति.** रे इति पुरुषसंबोधनं, एकोऽसहायः बहुतरैः सुभटैर्योधैः सङ्ग्रामडम्बरं संग्रामसाहसं कथं केन प्रकारेण करोमि इति विषादं खेदं त्यज जहीहि. अत्रास्मिन्राजचक्रे यं सुलभं जेतुमिति शेषः । मन्यसे जानासि तेनैव सह ( सहयुक्ते इति तृतीया ) समरेखयैव सांमुख्येनैव समरे युद्धविषये चेतोऽन्तःकरणं निधेहि स्थापय काव्यलिङ्गयमकालङ्कारौ । वसन्ततिलका वृत्तम् ॥ ४२ ॥ अहो

( नेपथ्ये )

मन्दाकिनीकनकपद्मबिसाङ्कुराणां
किंचोग्रदिग्गजलसद्दशनाङ्कुराणाम् ।
उन्मूलनैरलमनीयत शैशवं यै-
स्तेऽमी निजा मम भुजाः प्रकटीभवन्तु ॥ ४३ ॥

( ततः प्रविशति निजरूपेण दशकण्ठः । )

**नूपुरकः**—वंअस्स, पेक्ख पेक्ख कोदूहलं जं एकस्स वि माणुसस्स दस मत्थआइं ।

**मञ्जीरकः**—नैष मानुषः । राक्षसराजः खल्वसौ दशकण्ठः ।

**नूपुरकः**—तो परित्ताअदु मं वअस्सो । णं रक्खसमत्तो जेव्व संमुहपडिदं माणुसं चव्वेइ किं उण रक्खसराओ ।

---

१. वयस्य, पश्य पश्य कौतूहलं यदेकस्यापि मानुषस्य दश मस्तकानि ।

२. तत्परित्रायतु मां वयस्यः । नूनं राक्षसमात्र एव समुखपतितं मानुषं चर्वति ।किं पुना राक्षसराजः ।

---

इति विस्मये।मनुष्याः कीटा इव क्षुद्रा इत्यर्थः।निजमूर्त्यैव स्वस्वरूपेणैव भीषयामि (हेतुमण्णिच्, भियो हेतुभय इति षुक् । नन्वत्र हेतुभयं वर्तते न वा।नाद्यः।तथासति भीस्म्योरित्यात्मनेपदप्रसङ्गात् ।नान्त्यः।षुगभावप्रसङ्गादिति चेद्ब्रूमः।अत्र निजमूर्तिः प्रयोज्यकर्त्री रावणश्च प्रयोजकः तथा च निजमूर्तिर्मनुष्यकीटान्भीषयते इत्यत्र प्रयोजकाद्भयसत्त्वात्षुगागमः।तस्मात्पुनर्हेतुमण्णिचि प्रयोजकाद्रावणाद्भयाऽविवक्षया परस्मैपदं सिध्यति. स्पष्टा चेयं प्रक्रिया नित्यं स्मयतेरिति सूत्रे सिद्धान्तकौमुद्याम् । **नेपथ्य इति**· **मन्दाकिनीति**· यैर्भुजैर्मन्दाकिन्याः स्वर्गङ्गायाः कनकपद्मानां स्वर्णाम्भोरुहाणां ये बिसाङ्कुरा मृणालोद्भेदास्तेषां किञ्चोग्राणामुत्कटानां दिग्गजानां, ऐरावतः पुण्डरीको वामनः कुमुदोऽञ्जनः। पुष्पदन्तः सार्वभौमः सुप्रतीकश्च दिग्गजा इत्येतेषां लसन्तः शोभायमाना ये दशनाङ्कुरा रदनाङ्कुरास्तेषामुन्मूलनैरुत्पाटनैः शैशवं बाल्यम् ( प्राणभृज्जातिवयोवचनेत्यम्· ) अलं पर्याप्तमनीयत ते मम भुजा बाहवः प्रकटीभवन्तु आविर्भवन्तु· परिकरयमकवृत्त्यनुप्रासालङ्काराः । वसन्ततिलका वृत्तम् ॥ ४३ ॥ **नूपुरकः** मानुषस्य ( मनोजीताविल्यत्र् षुगागमश्च ) **मञ्जीरकः** राक्षसानां राजा राक्षसराजः ( राजाहःसखिभ्य इति टच् ) दशकण्ठो रावणः । **नूपुरकः** तत् यद्ययं राक्षसराजः तर्हि इत्यर्थः ।

मञ्जीरकः—अलं कातरतया । सकलवीरवृन्दवन्दनीया हि बन्दि-जातिः तत्कथमस्मद्विधेषु सकलभुवनैकवीरो विपरीतं वर्तिष्यते दश-कण्ठः ।

नूपुरकः—( सहर्षम् । ) जेदि एरिसं ता किंपि इमं णीसङ्को पुस्सिस्सम् । ( उपसृत्य । ) अये, किंति एत्तिआइं मत्थआइं उव्वहीअन्ति किंति वा एक्कं रक्खिअ उण अवराइं जत्तकुत्तवि ण णिक्खिप्पन्ति ।

रावणः—आः पाप, कथमस्थाने शिरश्छेदवार्तयाऽमङ्गलमावेदयसि । तदेष वैतालिक इत्युपेक्ष्यः ।

मञ्जीरकः—( विहस्य । ) स्थाने शिरश्छेदवार्तापि भवतो मङ्गलाय ।

रावणः—अथ किम् । ननु रे,

विद्याधरप्रणयिनीकरपल्लवाग्र-
लीलाविमुक्तकुसुमप्रकरावकीर्णे ।
श्रीचन्द्रचूडचरणे च रणे च कामं
छिन्नोऽपि मस्तकगणो मम मङ्गलाय ॥ ४४ ॥

---

१. यदीदृशस्तर्हि किमप्येनं निःशङ्कः प्रक्ष्यामि । अये, किमितीयन्ति मस्तकान्युह्यन्ते किमिति वैकं रक्षित्वा पुनरपराणि यत्रकुत्रचिन्न निक्षिप्यन्ते ।

---

प्रियवयस्यो मां परित्रायतां ( पुना राक्षसराज इत्यत्र रोरीति लोपे ढ्लोप इति दीर्घः ) मञ्जीरकः कातरतया भीरुतयाऽलमिति वारणे सकलवीरवृन्देन समग्रशूरसमूहेन वन्दनीया अभिवादनीया बन्दिजातिः स्तुतिपाठकजातिः अस्मद्विधेषु अस्मादृशेषु अस्माकं विधा प्रकारो येषामिति व्यधिकरणो बहुव्रीहिः। सकलभुवनेषु निखिललोकेष्वेकोऽद्वितीयः वीरः शूरः ( विशेषणं विशेष्येण बहुलमित्यत्रत्यबहुलग्रहणादेकशब्दस्य पूर्वनिपातोऽन्यथा पूर्वापरप्रथमेति समासे वीरशब्दस्य पूर्वनिपातः स्यात् ) । नूपुरकः ईदृशोऽविपरीतवर्तनस्तर्हि एनं रावणं निःशङ्कः भक्षणादिभयाभावादिति भावः । रावणः अस्थानेऽप्रशस्तदेशे नञोऽप्राशस्त्यार्थत्वात् । तदुक्तम्—तत्सादृश्यं तदन्यत्वं तदल्पत्वं विरोधिता । अप्राशस्त्यमभावश्च नञर्थाः षट् प्रकीर्तिता इति । शिरश्छेदवार्तया मस्तकनिक्षेपकथयाऽमङ्गलमशुभमावेदयसि बोधयसि । मञ्जीरकः विहस्येति. अस्थाने इत्युक्तत्वाद्धासः. पूर्वत्र रावणवाक्येऽस्थाने शिरश्छेदवार्तयाऽमङ्गलमावेदयसीत्यनेन स्थाने शिरश्छेदवार्तामङ्गलायेति ध्वनितम्. अयन्तु शिरश्छेदवार्ता कुत्रापि मङ्गलाय न भवतीति मनसि कृत्वा पृच्छति. स्थाने इति.

नूपुरकः—[१]जदि एरिसो तुम तां किंति णिअरूअं संगोविअ चोरा व्व पविट्ठोसि ।

रावणः—धिङ् मूर्ख । न जानासि रे,

ये चन्द्रचूडाचलचालनैक-
चातुर्यचिन्तामणयो भुजा मे ।
तैरेव भूयिष्ठतरैः प्रवृत्त-
श्चापाधिरोपाय कथं न लज्जे ॥ ४५ ॥

तत्कथय कुत्र जानकीति ।

---

१. यदीदृशस्त्वं तर्हि किमिति निजरूपं संगोप्य चोर इव प्रविष्टोऽसि ।

---

स्थाने मङ्गलसूचकाः शब्दा मङ्गलाय भवन्तु नाम परन्तु शिरश्छेदवार्तापि भवतो मङ्गलाय भवति किमिति काका ध्वन्यते । **विद्याधरेति.** विद्याधराणां देवविशेषाणां याः प्रणयिन्यः सुन्दर्यस्तासां कराः पल्लवा इव तेषामग्रेभ्यो लीलया विलासेन विमुक्तानां कुसुमानां सुमानां प्रकरेण संघेनाऽवकीर्णेऽवक्षिप्ते श्रीचन्द्रचूडस्य गिरीशस्य चरणेऽङ्घ्रौ च परं रणे सङ्ग्रामे च कामं यथेच्छं छिन्नोपि लूनोऽपि मस्तकगण· मम मङ्गलाय श्रेयसे भवेदित्यर्थः। तुल्ययोगितायमकवृत्त्यनुप्रासालङ्काराः । वसन्ततिलका वृत्तम् ॥ ४४ ॥ **रावणः ये चन्द्रेति.** ये मम भुजाश्चन्द्रचूडस्य कपर्दिनो योऽचलः कैलासस्तस्य चालने कम्पने एकमद्वितीयं चातुर्यं कौशलं तस्मिंश्चिन्तामणय इव चिन्तामणेर्यथेप्सितप्राप्तिस्तथा भुजेभ्योऽपि कैलासचालनरूपेप्सितप्राप्तिरिति भावः। पर्वतन्तु समासाद्य वाक्यमाह दशाननः। पुष्पकस्य गतिश्छिन्ना यत्कृते मम गच्छतः। तमिमं शैलमुन्मूलं करोमि तव गोपते। केन प्रभावेण भवो नित्यं क्रीडति राजवत्। विज्ञातव्यं न जानीते भयस्थानमुपस्थितम्। एवमुक्त्वा ततो राम भुजान्विक्षिप्य पर्वते । तोलयामास तं शीघ्रं स शैलः समकम्पत। चलनात्पर्वतस्यैव गणा देवस्य कम्पिताः। चचाल पार्वती चापि तदाश्लिष्टा महेश्वरम् इति वा०रा०उ० काण्डस्थसप्तदशसर्गस्थकथाऽत्राऽनुसन्धेया. भूयिष्ठतरै· करद्वयापेक्षयाऽत्यधिकैः (इष्टस्य यिट्चेत्यनेन बहोर्भूादेशः इष्ठस्य लोपयिडागमौ ) तैरेव बाहुभिरेव चापाधिरोपाय धनुःसज्जीकरणाय प्रवृत्त उद्युक्तः कथं न लज्जे अपि तु लज्ज एवेत्यर्थः। विषमवृत्त्यनुप्रासालङ्कारौ। विषमं वर्ण्यते यत्र घटनाननुरूपयोरिति लक्षणम्।इन्द्रवज्रा वृत्तम्॥४५॥

**मञ्जीरकः**— ( सविषादम् । )

यस्याः स्वयं कुलगुरुः किल याज्ञवल्क्य-
स्तातः स एष जनको जननी धरित्री ।
सापि त्वमद्य बत दुर्विधिशैशवेन
वत्से निशाचरकराङ्कगता भवित्री ॥ ४६ ॥

**नूपुरकः**—( अपवार्य । ) अलं तावेण । कहं एत्तिअमेत्तम्मि वीरमण्डले कोवि णत्थि जो इमस्स हठप्पउत्तस्स पुरदो होदि ।

**मञ्जीरकः**—कुपितस्य दशकण्ठस्य कः संमुखे भवति क्षत्रियः ऋते सहस्रबाहोः कार्तवीर्यात् ।

**नूपुरकः**—( सहर्षम् । ) जीविद म्ह । पेच्छ णं पत्तो सहस्सबाहू किदवीरपुत्तो ।

---

१. अलं तापेन । कथमेतावन्मात्रे वीरमण्डले कोऽपि नास्ति योऽस्य हठप्रवृत्तस्य पुरतो भवति ।

२. जीविताः स्म. । पश्य ननु प्राप्तः सहस्रबाहुः कृतवीर्यपुत्रः ।

---

**मञ्जीरकः** हे वत्से जानकि यस्यास्तव कुलस्य गुरुः स्वयं स्वतः याज्ञवल्क्यः न तु तद्गोत्रोत्पन्नो यः कश्चिदपि तातः पिता स प्रसिद्ध एष जनकः जननी माता धरित्री धरणि. भूजनितत्वात् । उक्तं च **वा. रा.** बा. ६६ सर्गे–अथ मे कृषतः क्षेत्रं लाङ्गलादुत्थिता ततः । क्षेत्रं शोधयता लब्धा नाम्ना सीतेति विश्रुता । भूतलादुत्थिता सा तु व्यवर्धत ममात्मजेति । साऽपि एतादृश्यपि त्वमद्य (सद्यः परुत्परार्यैषमोतिनिपातनात्साधु. ) दुर्विधेर्दुर्दैवस्य शैशवेन मूढतया निशायां रात्रौ चरन्ति गच्छन्ति ते (अधिकरणे उपपदे चरेष्ट इति ट·) तस्य रावणस्य कराङ्के करोत्सङ्गे ( अङ्को रूपकभेदाङ्कचिन्हरेखाजिभूषणे । रूपकांशान्तिकोत्सङ्गे इति मेदिनी ) गता पतिता भवित्री भाविनी बतेति खेदे ( खेदानुकम्पासन्तोषविस्मयामन्त्रणे बतेत्यमरः ) विषमच्छेकानुप्रासावलङ्कारौ । वसन्ततिलका वृत्तम् ॥ ४६ ॥ **नूपुरकः** अपवार्य परावृत्य. उक्तञ्च **साहित्यदर्पणे**–तद्भवेदपवारितम् । रहस्यन्तु यदन्यस्य परावृत्य प्रकाश्यते । हठप्रवृत्तस्य प्रसभोद्यतस्य पुरतोऽग्रतः । **मञ्जीरकः** ऋते कार्तवीर्यात् कार्तवीर्यं विनेत्यर्थः ( अन्यारादितरर्तेतिसूत्रेण पञ्चमी ) **नूपुरकः** सहस्रबाहुरित्यनेन बाणासुरप्रवेशः सूचितः ।

**मञ्जीरकः**—धिङ् मूर्ख । जामदग्न्यकुठारधाराजलनिमग्नः क्व संप्रति कार्तवीर्यः । तन्नूनमयं बाणासुरो भविष्यति । हन्त भोः, तदिदमनर्थान्तरम् । ( विमृश्य । ) अथवा विषस्य विषमौषधं भविष्यति ।

( ततः प्रविशति बाणासुरः । )

**बाणासुरः**—( परिक्रम्य । साटोपम् । )

कैलासशैलशिखरादपि भूरिसारं
निःसीमभारमधुना धनुरिन्दुमौलेः ।
आलम्ब्य पुष्पसदृशं करपल्लवेन
स्फीतं भुजद्रुमवनं सफलं करोमि ॥ ४७ ॥

**रावणः**—( अनाकर्णितकेन । ) कथमद्यापि नानीयते जानकी ।

**बाणः**—( । विलोक्य स्वगतम् । ) कथमिह दशकण्ठोपि । ( प्रकाशम् । ) अहो, एतावति वीरलोके न केनापि तावदारोपितमैश्वरं धनुः ।

**नूपुरकः**—नारोपणीय च ।

---

**मञ्जीरकः** जामदग्न्यस्य परशुरामस्य कुठारधारैव परशुतीक्ष्णाग्रमेव जलमुदकं तस्मिन्निमग्नः परशुरामकुठारेण हत इति भावः। उक्तञ्च **भागवते**—भुजान्कुठारेण कठोरनेमिना चिच्छेद रामः प्रसभं त्वहेरिवेति नवमस्कन्धे पञ्चदशाध्याये· तत्तस्मान्नूनं निश्चयेन अयं सन्निकृष्टो बाणासुरः बलिपुत्रः। अस्यापि सदाशिवप्रसादेन दोःसहस्रवत्त्वम्। प्रतिपादितं **चैतद्भागवते** दशमस्कन्धे. हन्तेति विषादे अन्योनर्थोऽनर्थान्तरम् मयूरव्यंसकादित्वात्समासः। **बाणासुरः कैलासेति** कैलासशैलस्य कैलासगिरेः शिखराच्छृङ्गात् ( कूटोऽस्त्री शिखरं शृङ्गमित्यमरः ) अपि तदपेक्षयापीत्यर्थः। भूरिर्बहुलः सारः स्थिरांशो यस्य ( सारो बले स्थिरांशे चेत्यमरः ) निर्गता सीमा यस्य तादृशो भारो यस्येति बहुव्रीहिगर्भो बहुव्रीहिः। अथ वा सीमायाः निर्गतः निस्सीमः ( निरादयः क्रान्ताद्यर्थे इति समासः ) इन्दुश्चन्द्रो मौलौ यस्य तस्य धनुः चापोऽधुना अस्मिन्काले ( अधुनेति सूत्रेणाधुनाप्रत्यये इदम इश्, यस्येति लोपः ) करपल्लवेन हस्तकिसलयेन पुष्पसदृशं कुसुमतुल्यं यथा तथाऽऽलम्ब्य धृत्वा स्फीताः पुष्टा भुजा बाहव एव द्रुमास्तेषां वनं काननं सफलमवन्ध्यं करोमि । रूपकवृत्त्यनुप्रासावलङ्कारौ। वसन्ततिलका वृत्तम् ॥४७॥ **नूपुरकः** नारोपणीयं च ( रुहधातोर्णिजन्तादनीयर्, रुहः पोन्यतरस्यामिति पकारः ) आरोपयितुमशक्यं चेत्यर्थः।

**रावणः**—कथमद्यापि नानीयते सीता । तदयं चन्द्रहास एव मे बलादानयति ।

**बाणः**—( विहस्य । ) यदीदृशं वीरडम्बरं तत्किमारोप्यैव हरकार्मुकं नानीयते सीता ।

**रावणः**—आः, कोऽयमलीकपण्डितः ।

उद्दण्डचण्डिमलसद्भुजदण्डखण्ड-
हेलाचलाचलहराचलचारुकीर्तेः ।
कीदृग्यशस्तुलितबालमृणालकाण्ड-
कोदण्डकर्षणकदर्थनयाऽनया मे ॥ ४८ ॥

**बाणः**—सोऽयमशक्तिमकारः ।

**रावणः**—आः, कथं दशमुखस्याप्यशक्तिसंभावना ।

**बाणः**—( विहस्य । ) अये, बहुमुखता नाम बहुप्रलापितायाः कारणम् । विक्रमस्य बहुबाहुतैव ।

**रावणः**—आः, कथं रे, पलालभारनिःसारेण भुजभारेण वीरंमन्योऽसि ।

**बाणः**—( सक्रोधम् । ) अये समरकलाकुण्ठ दशकण्ठ, ममापि भुजभारं निःसारं व्यपदिशसि । न जानासि किं यतोऽत्रैव

---

**रावणः** मे मम ( तेमयावेकेति म आदेशः ) चन्द्रहासः तन्नामककृपाण· ( चन्द्रहासो दशग्रीवकरवाले इति मेदिनी ) । **रावणः** अलीकेष्वप्रियवचनेषु पण्डितः । **उद्दण्डेति**· उद्दण्डेनोत्कटेन चण्डिम्ना तीव्रतया ( चण्डस्तु यमदासेऽतिकोपने तीव्रे दैत्यविशेषे चेति हेमचन्द्रः ) लसतां राजतां भुजदण्डानां बाहुदण्डानां खण्डस्यैकदेशस्य हेलया लीलया चलाचलश्चञ्चलः ( चलं लोलं चलाचलमित्यमरः ) यो हराचलः कैलासस्तेन चार्वी रमणीया कीर्तिर्यस्य तादृशस्य मे अनया तुलितमुपमितं बालमृणालस्य कोमलबिसस्य काण्डं येन तस्य कोदण्डस्य चापस्य कर्षणकदर्थनया आकर्षणकुत्सिताशंसया (कोः कत्तत्पुरुषेऽचीति कदादेशः ) कीदृक् कीदृशं यशः न कीदृगपीत्यर्थः । विषमवृत्त्यनुप्रासालङ्कारौ । वसन्ततिलका वृत्तम् ॥ ४८ ॥ **बाणः** बहुप्रलापितायाः बहुजल्पनस्य कारणं हेतुः विक्रमस्य पराक्रमस्य बहुबाहुतैव. अनेन स्वस्य सहस्रभुजत्वाद्विक्रमाधिक्यं सूचितम् । **रावणः** पलालानां निष्फलतृणगुच्छानां भारेणेव निःसारेण निःसत्वेन भुजभारेण बाहुभरेण वीरमात्मानं मन्यते सः ( आत्ममान इति खश्, अरुर्द्विषदिति मुम् ) । **बाणः** समरकलायां युद्धकौशले कुण्ठ मन्द ( कुण्ठो मन्दः क्रियासु य इत्यमरः ) यतो यस्मादत्रैवेति

पितुः पादाम्भोजप्रणतिरभसोत्सिक्तहृदयः
प्रयातः पातालं न कतिकतिवारानकरवम् ।
सहस्रे बाहूनां क्षितिवलयमासज्य सकलं
जगद्भारोद्वेलां फणफलकमालां फणिपतेः ॥ ४९ ॥

रावणः—अरे, चलितनयवृत्तिरसि । यदलीकविक्रमवर्णनयाऽस्य सत्यविक्रमस्य मे पुरतः स्वात्मानं विडम्बयसि ।

बाणः—कथं त्वमेव सत्यविक्रमः ।

रावणः—अथ किम् ।

दोष्णां न मे विदितवानसि वीरलक्ष्मी-
प्रासादविभ्रमवतीं पदवीं गरिष्ठाम् ।

---

बाहूनां सहस्र इत्यनेनान्वेति । **पितुरिति.** पितुर्बले. पादाम्भोजयोः पदकमलयोः प्रणतौ नमने रभसेन वेगेनोत्सिक्तमुत्कण्ठितं हृदयमन्तःकरणं यस्य तादृशः सन्पातालं रसातलं प्रयातः अहमित्यध्याहारः । अत्रैवास्मिन्नेव बाहूनां भुजानां सहस्रे सकलं समग्रं क्षितिवलयं भूमण्डलमासज्य संस्थाप्य फणिपतेः शेषस्य फणा एव फलकानि तेषां मालां परम्परां जगतो भुवनस्य भारे भरे उद्गता वेला रोगो यस्यास्तादृशीं ( वेला काले च सीमायामब्धेः कूलविकारयोः । अक्लिष्टमरणे रोगे ईश्वरस्य च भोजन इति मेदिनी ) कतिकति ( डति चेत्यनेन षट्संज्ञाया षड्भ्योलुगिति शसो लुक्, नित्यवीप्सयोरिति द्वित्वम् ) वारान् आवृत्तीः बह्वीषु वेलास्विति भावः । नाकरवं अपि त्वकरवमेवेति भावः । (कालाध्वनोरत्यन्तेति द्वितीया ) अत्युक्तिच्छेकवृत्त्यनुप्रासालङ्काराः । अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनमित्युक्तेः । शिखरिणी वृत्तम् ॥४९॥ **रावणः** चलिता भ्रष्टा नयस्य नीतेर्वृत्तिर्वर्तनं यस्य यद्यस्मात्सत्यस्तथ्यो विक्रमः कैलासचालनादिर्यस्य तस्य मे मम पुरतः पुरः अलीकस्यानृतस्य ( अलीकं त्वप्रियेऽनृत इत्यमरः ) विक्रमस्य क्षोणीधारणरूपस्य वर्णनयाख्यानेन स्वात्मानं स्वमित्यर्थः । अथवा सु इति पृथक्पदं तथा च सुतरामात्मानं विडम्बयस्युपहासयसि ( विडम्बधातोर्लट् ) । **रावणः** **दोष्णामिति.** मे दोष्णां भुजानां वीराणां शूराणां लक्ष्म्याः शोभायाः प्रासादेषु वासगृहेषु ये विभ्रमा विलासास्ते विद्यन्ते यस्यां तादृशीं गरिष्ठामतिमहतीं पदवीं प्रभावं न विदितवानसि नाज्ञासीः । ये भुजाः करपल्लवाङ्कः करपल्लवलक्षणो यः पर्यङ्को मञ्चस्तस्मिञ्छेते तच्छीले ( सुप्यजाताविति णिनिः ) चन्द्र-

---

१ गलद्भारोद्वेलामिति पाठः ।

ये चन्द्रशेखरगिरौ करपल्लवाङ्क-
पर्यङ्कशायिनि दधुः कलशप्रतिष्ठाम् ॥ ५० ॥

**बाणः**—अलमलीकवाग्विग्रहेण । तदिदं धनुरावयोस्तारतम्यं निरूपयिष्यति ।

**मञ्जीरकः**—अये बाणरावणौ, किमिदं नरवीरैकसमर्पणीयसीतापरिणयमनोरथेन विफलमायास्यते चेतःपदवी ।

**बाणः**—किमेतावता ।

त्रिपुरमथनचापारोपणोत्कण्ठिताधी-
र्मम न जनकपुत्रीपाणिपद्मग्रहाय ।
अपि तु बहुलबाहुव्यूहनिर्व्यूहमाला-
बलपरिमलहेलाताण्डवाडम्बराय ॥ ५१ ॥

---

शेखरगिरौ कैलासपर्वते कलशप्रतिष्ठां कलशगौरवं ( प्रतिष्ठा गौरवे स्थिताविति हैमः ) दधुः पुपुषुः ( डुधाञ् धारणपोषणयोरिति धातोर्लिट् ) लोकेऽपि मङ्गलकार्यारम्भे पीठे कलशप्रतिष्ठां कुर्वन्ति तथास्य भुजवीर्यपरीक्षणारम्भे बाहुपीठे कलश इव गिरिरशोभतेति भावः निदर्शनाछेकवृत्त्यनुप्रासालङ्काराः पदार्थवृत्तिमप्येके वदन्त्यन्यां निदर्शनामितिलक्षणात् । वसन्ततिलका वृत्तम् ॥५०॥ **बाणः** अलीकवाग्विग्रहेण अप्रियवाक्कलहेनालं फलं नास्तीत्यर्थः । **मञ्जीरकः** नरेषु एकः प्रधानश्चासौ वीरश्च नरवीरैकः रामचन्द्र इति गूढाभिप्रायः ( पूर्वापरप्रथमेति समासे वीरशब्दस्य पूर्वनिपातः ) तस्मै समर्पणीया देया या सीता तस्याः परिणये विवाहे, मनोरथेनेच्छया विफलं निष्फलं चेतःपदवी चेतोमार्गः आयास्यते कर्मणि लट् **बाणः** एतावता सीताया नरवीरैकसमर्पणीयत्वमात्रेण किं हीयत इति शेषः । तदर्थमस्मद्व्यवसायाभावादिति भावः । तदेव विशदयति **त्रिपुरेति**· त्रिपुरमथनस्य शङ्करस्य चापारोपणे कार्मुकसज्जीकरणे उत्कण्ठिता उत्का मम धीर्बुद्धिर्जनकपुत्रीपाणिपद्मग्रहाय सीताकरग्रहणाय न नास्त्यपि तु किन्तु बहुला बहवो ये बाहवो भुजास्तेषां व्यूहो गणः स एव निर्व्यूहमाला शेखरमाल्यं (निर्व्यूहो द्वारि निर्यासे शेखरे नागदन्तके इति हेमचन्द्रः ) तस्या बलमेव परिमलो संवर्षणजन्यजनमनोहरगंधो ( विमर्दोत्थे परिमलो गंधे जनमनोहरे इत्यमरः ) तस्य हेलाताण्डवस्य क्रीडानाट्यस्य आडम्बराय संरम्भाय ( आडम्बरस्तु संरम्भ इति हेमचन्द्रः ) स्वभुजबलपरीक्षामन्तरेण न किमपि सीतयास्माकं प्रयोजनमिति भावः । छेकवृत्त्यनु-

रावणः—

उन्मीलितेन शिखरेण हराचलस्य
प्रागेव मे भुजवनस्य कृता परीक्षा ।
एषा विदेहतनयाकुचकुम्भकेलि-
कौतूहलाद्गिरिशकार्मुककर्मदीक्षा ॥५२ ॥

( नेपथ्ये । )

असुरसुरनिशाचरोरगाणा-
मपि नरकिंनरसिद्धचारणानाम् ।
नमयति यदि कोऽपि चापमेत-
न्मम दुहितुः स करग्रहं तनोतु ॥ ५३ ॥

रावणः—

रे रे भुजाः कुरुत चन्द्रकलाकिरीट-
कोदण्डकर्षणयशोधवलां त्रिलोकीम् ।
अङ्गीकुरुध्वमचिराच्च विदेहपुत्री-
वक्षोजचन्दनरजःपरिधूसरत्वम् ॥ ५४ ॥

---

प्रासपरिसंख्यालङ्काराः। मालिनी वृत्तम् ॥ ५१ ॥ **रावणः उन्मीलितेनेति.** हरस्य शङ्करस्य योऽचलः कैलासस्तस्योन्मूलितेनोत्पाटितेन शिखरेण शृङ्गेण मे मम भुजवनस्य बाहुकाननस्य प्रागेव अत्रागमनात्पूर्वमेव परीक्षा कृता, विदेहतनयायाः सीतायाः कुचौ स्तनावेव कुम्भौ घटौ तयोः केलेः क्रीडायाः कौतूहलात्कुतुकादेषा गिरिशस्य मृडस्य कार्मुकस्य चापस्य कर्मणि आरोपणरूपे दीक्षा चित्तैकाग्र्यं मया तु सीताप्राप्त्यर्थमेव चाप आरोप्यते न बाहुबलपरीक्षार्थमिति भावः। परिसंख्यालङ्कारः। वसन्ततिलका वृत्तम् लक्षणमुक्तं प्राक् ॥ ५२ ॥ **नेपथ्ये.** अन्तरसन्धिश्चायम् । **असुरेति.** असुरा दैत्याः ( असुरा दैत्यदैतेयेत्यमरः । सुरा देवाः निशायां रात्रौ चरन्तीति निशाचरा राक्षसाः उरगाः सर्पास्तेषां नरा मनुजाः किन्नरा देवयोनिविशेषाः सिद्धा देवभेदाः चारणा देवविशेषाश्चेतिद्वन्द्वः तेषां मध्ये यदि कोपि एतत् प्रत्यक्षं चापं धनुः नमयति स मम दुहितुरात्मजायाः सीतायाः पाणिग्रहणं विवाहं तनोतु करोतु । वृत्त्यनुप्रासोऽलङ्कारः। पुष्पिताग्रा वृत्तम् ॥ ५३ ॥ **रावणः रे इति** रेरे भुजास्त्रिलोकीं भुवनत्रयं चन्द्रकला किरीटे मुकुटे यस्य सप्तमीविशेषणे बहुव्रीहाविति ज्ञापकाद्व्यधिकरणो बहुव्रीहिः। तस्य पशुपतेः कोदण्डं

( धनुरालोक्य । स्वगतम् । ) अये, दुर्विगाहमिदम् । तदलमनेन । ( प्रकाशम् । ) बाण, त्वमेव तावदग्रे धनुरारोपय । अस्माकमपि नूतनागतत्वेन मान्योऽसि ।

बाणः—तथास्तु । ( इति परिक्रामति । )

रावणः—( स्वगतम् । ) अरे हृदय, अलं कातरतया । अयं तावत्कतरः कुण्ठीकृतदशकण्ठे शितिकण्ठकार्मुके ।

अन्योऽपि कोऽपि यदि चापमिमं विकृष्य
सीताकरग्रहविधिं विदधीत धीरः ।
लङ्कां नयामि च गिरानुनयामि चैनां
द्रागानयामि च वशे जनकेन्द्रपुत्रीम् ॥ ५५ ॥

मञ्जीरकः—सखे, पश्य ।

बाणस्य बाहुशिखरैः परिपीड्यमानं
नेदं धनुश्चलति किंचिदपीन्दुमौलेः ।

---

शरासनं तस्य कर्षणेन यद्यशः कीर्तिस्तेन धवलाः श्वेतां कुरुत अचिरादल्पकालेन विदेहपुत्र्याः सीतायाः, पुत्रशब्दस्य ( शार्ङ्गरवादित्वाच्छार्ङ्गरवाद्यञो इति ङीन् ) वक्षोजयोः कुचयोश्चन्दनरजसा मलयजपांसुना परितो धूसरत्वमीषत्पाण्डुतां अङ्गीकुरुध्वं स्वीकुरुध्वम् तद्गुणवृत्त्यनुप्रासावलङ्कारौ तद्गुण· स्वगुणत्यागादन्यदीयगुणग्रह इति लक्षणात् । वसन्ततिलका वृत्तम् ॥ ५४ ॥ दुर्विगाहं दुर्धर्षम् । अनेन चापारोपणेन । कुण्ठीकृतो मन्दीकृतो दशकण्ठो रावणोऽहमित्यर्थ.। यस्मिन् तादृशे शितिकण्ठस्य हरस्य कार्मुके धनुषि **अन्योपीति.** अन्यः इतर. (एकस्त्वोन्येतरावपीत्यमरः) कोपि धीरो धैर्यशाली यदि पक्षान्तरे इमं चापं विकृष्याकृष्य सीताया जानक्याः करग्रहविधिं पाणिग्रहणकार्यं उपयममित्यर्थः विदधीत कुर्यात् । तदेत्यध्यहारोऽहमित्यपि एनां जनकेन्द्रपुत्रीं सीतां लङ्कां मन्नगरीं नयामि प्रापयामि अकथितं चेत्यनेन लङ्काया कर्मत्वं । गिरा वाण्याऽनुनयामि सान्त्वयामि ( प्रणतिः स्यादनुनयः प्रणिपातश्च सान्त्वनमित्यभिधानरत्नमाला ) द्राक् सपदि वशे च आनयामि स्वायत्तां करोमीति भावः। कारकदीपकमलङ्कारः क्रमिकैकगतानान्तु गुम्फः कारकदीपकमिति लक्षणात् । वसन्ततिलका वृत्तम् ॥ ५५ ॥ **मञ्जीरकः बाणस्येति.** कामातुरस्य मदनार्तस्य वचसां वाणीनां संविधानैः साधनैरभ्यर्थितं प्रार्थितं प्रकृत्या स्वभावेन चारु

कामातुरस्य वचसामिव संविधानै-
रभ्यर्थितं प्रकृतिचारु मनः सतीनाम् ॥ ५६ ॥

**रावणः**—( सविषादमात्मगतम् । ) कथमियं सीतानुनयप्रत्यूहपिशुनेव दुरुपश्रुतिः । ( प्रकाशम् । ) अये बाण, अपि नाम ते पलालभारनिःसारो भुजभारः ।

**बाणः**—कथं भुजमण्डलमिदमालोकयन्नपि कटुभाषितां न मुञ्चसि ।

**रावणः**—तत्किमनेन करिष्यसि ।

**बाणः**—यत्कृतं हैहयराजेन ।

**रावणः**—इदमसौ ते भुजवनं निजप्रतापानले निर्दहामि ।

**बाणः**—इदमहं त्वत्प्रतापानलमनेकरुचिरचापचुम्बितनिजबाहुबलाहकनिवहनिर्मुक्तनाराचधारासारैः शमयामि ।

**रावणः**—

रे बाण मुञ्च मयि बाणशतानि पञ्च
नन्वस्ति मे करतले करवालवल्ली ।

---

रुचिरं सतीनां साध्वीनां ( सती साध्वी पतिव्रतेत्यमरः ) मन इव इन्दुमौलेः शङ्करस्य इदं धनु. बाणस्य बलिपुत्रस्य बाहूनां भुजानां शिखरैः कोटिभिरग्रैरिति यावत् । परिपीडयमानं सत् किञ्चिदपि ईषदपि न चलति। उपमालङ्कारः उपमा यत्र सादृश्यलक्ष्मीरुल्लसति द्वयोरिति लक्षणात् । वसन्ततिलका वृत्तम् ॥५६॥ **रावणः** दुरुपश्रुतिरशुभसूचकवचनम् ( नक्तं निर्गत्य यत्किञ्चित् शुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा देवप्रश्नमुपश्रुतिमिति हारावली. ) **बाणः** यत्कृतं हैहयराजेन कार्तवीर्येण । कदाचिद्धैहयाधिपे नर्मदाजलक्रीडारते तत्र रावण· समागत्य तेन सह तुमुलं सङ्ग्राममकार्षीत् । तदा कार्तवीर्यो रावणं जित्वा तं गृहीत्वा स्वनगरीं प्रविष्टः इति वा. रा. उ. स. ३२ कथाऽत्रानुसन्धेया । उक्तञ्च—राक्षसांस्त्रासयामास कार्तवीर्यार्जुनस्तदा । रावणं गृह्य नगरं प्रविवेश सुहृद्वृत इति । **रावणः** असावहमिति शेषः। इदं निजप्रतापानले निजप्रताप एवानलस्तस्मिन्निर्दहामि । **बाणः** इममिति युक्तः पाठः। तव प्रताप एव पराक्रम एवानलोऽग्निस्तमनेकैर्बहुभी रुचिरचापैर्मनोहरकार्मुकैश्चुम्बिता निजबाहव एव बलाहका मेघास्तेषां निवहैर्वृन्दैः निर्मुक्तास्त्यक्ता. नाराचा एव धारासाराः धारासंपातास्तैः शमयामि ( मित्त्वाद् ध्रस्वत्वम् )। **रावणः** । **रे बाण इति.** रे बाण बाणासुर मयि पञ्च तत्संख्याकानि बाणशतानि पञ्चशतीमितबाणानित्यर्थः । तस्य सहस्रभुजत्वादेकैकस्य बाणस्य हस्तद्वयमिति

रे पञ्चबाण विवृणु त्वमपि स्वबाणा-
न्नन्वेति सा युवतिलोकललामवल्ली ॥ ५७ ॥

**नूपुरकः**—अये बाणलावणा, सअं जेव्व अप्पाणं वण्णन्ता ण ल-ज्जेथ ।

**रावणः**—धिङ् मूर्ख, कथमात्मैकश्लाघ्यो दशकण्ठः । ननु रे,

मन्दोदरीकुटिलकोमलकेशभार-
मन्दारदाममकरन्दरसं पिबन्तः ।
वीणानिनादमधुरध्वनिमुद्गिरन्तो
मद्विक्रमं मधुकरा अपि कीर्तयन्ति ॥ ५८ ॥

---

१. अये बाणरावणौ, स्वयमेवात्मानं वर्णयन्तौ न लज्जथः ।

---

पञ्चशतबाणा इति भावः । नन्ववधारणार्थः । मे मम करतले हस्ते करवालवल्ली खड्गवल्ली अस्त्येवेत्यर्थः । अनेन खड्गसहायस्य मे न तव बाणभीतिरिति भावः। रे पञ्चबाण मदन त्वमपि स्वस्य बाणान् अरविन्दादीन् । उक्तञ्च—अरविन्दमशोकञ्च चूतं च नवमल्लिका । नीलोत्पलञ्च पञ्चैते पञ्चबाणस्य सायका इति । विवृणु विकिर । सा युवतिलोकस्य तरुणीजनस्य ललामभूता वल्लीव लतेव सीता नन्वेति आगच्छत्येवेत्यर्थः । अनुप्रासालङ्कारः। वसन्ततिलका वृत्तम् ॥ ५७ ॥

**रावणः मन्दोदरीति.** मन्दोदर्यास्तन्नामकस्वपत्न्याः कुटिलानां वक्राणां कोमलकेशानां मृदुकचानां भारे समूहे मन्दारदाम्नां पारिजातकुसुममालानाम् ( मन्दारशब्दात्तस्य विकार इत्यणि, पुष्पमूलेषु बहुलमिति लुप् ) ( माला-स्रग्दाम माल्यं स्यादिति शारदीनाममालायाम् ) मकरन्दरसं पुष्परसद्रवं पिबन्तोऽत एव वीणाया वल्लक्या निनादो रवस्तमिव मधुरध्वनिं प्रियध्वान-मुद्गिरन्त उच्चारयन्तो मधुकरा भ्रमरा अपि किमुत मनुष्या इति भावः । उद्गिरन्त इत्यत्र निष्ठ्यूतोद्गीर्णवान्तादि गौणवृत्तिव्यपाश्रयम् । अतिसुन्दरम-न्यत्र ग्राम्यकक्षां विगाहत इति दण्डयुक्तत्वान्नाश्लीलत्वम् । मद्विक्रमम् मम पराक्र-मम् कीर्तयन्ति गायन्ति ( कॄत संशब्दन इति धातोर्णिजन्ताल्लट्, उपधा-याश्चेतीत्त्वम्, उपधायाञ्चेति दीर्घः ) काव्यार्थापत्त्यलङ्कारध्वनिः, छेकवृत्त्यनुप्रासौ कैमुत्येनार्थसंसिद्धिः काव्यार्थापत्तिरिष्यत इत्युक्तेः । वसन्ततिलका वृत्तम् ॥५८॥

**बाणः**—कथमयं सुरतरुकुसुमदामकमनीयकामिनीजनोपभोगसौभाग्यं विडम्बयति । तदिदानीम्

अमी मे दोर्दण्डास्तुलितहरशैलैकशिखरा-
स्तुरासाहं साहंकृतिकरतलन्यस्तकुलिशम् ।
पराभूय स्वैरं त्रिदशवनमुन्मूल्य सकलं
मम क्रीडोद्यानं सुरतरुमनोज्ञं विदधतु ॥ ५९ ॥

( इति निष्क्रान्तः । )

**रावणः**—कथमयं निर्गतः । अहं तु

अनादृत्य हठात्सीतां नान्यतो गन्तुमुत्सहे ।
न शृणोमि यदि क्रूरमाक्रन्दमनुजीविनः ॥ ६० ॥

**मञ्जीरकः**—वत्से जानकि, अधुना दैवैकरक्षणीयाऽसि ।

**रावणः**—( कर्णं दत्त्वा । ) अये, कस्यायमाक्रन्दः श्रूयते नभसि । ( निपुणं निरूप्य । ) नूनमनेन कस्यचिन्नाराचपीडितेन कठोरमाक्रन्दता गगनपथचारिणा मारीचेन भवितव्यम् । तदेनमाश्वासयामि तावत् ।

( इति निष्क्रान्तः )

---

**बाणः** सुरतरोः पारिजातस्य कुसुमदाम्ना पुष्पस्रजा कमनीयस्याभिलषणीयस्य कामिनीजनोपभोगस्य सौभाग्यं संपदं विडम्बयति विकत्थयति. **अमी इति.** तुलितमुपमितं हरशैलस्य कैलासस्यैकं केवलं शिखरं कूटं यैः । केवलं कैलासशिखरमेवास्य सदृशमिति भावः। अहंकृत्याऽवलेपेन सहितं यथा तथा करतले हस्ते न्यस्तं स्थापितं कुलिशं भिदुरं ( कुलिशं भिदुरं पविरित्यमरः ) येन तादृशं तुरं वेगवन्तं साहयत्यभिभवतीति तुराषाट् ( साहयतेः क्विप्, अन्येषामपीति पूर्वपदस्य दीर्घः ) तमिन्द्रं पराभूय पराजित्य सकलं समग्रं त्रिदशानां देवानां वनं नन्दनं स्वैरं स्वच्छन्दमुन्मूल्योत्पाट्य मम क्रीडोद्यानं सुरतरुभिर्मनोज्ञं रमणीयं विदधतु कुर्वन्तु. अनेन स्वगमनहेतुर्दर्शितः । प्रतीपयमकालङ्कारौ । शिखरिणी वृत्तम् ॥ ५९ ॥ **रावणः अनाहृत्येति.** हठाद्बलात्कारेण सीतां जानकीमनादृत्यागृहीत्वान्यतोऽन्यत्र ( सार्वविभक्तिकस्तसिः ) गन्तुं नोत्सहे । यद्यनुजीविनः स्वभृत्यस्य क्रूरमुग्रमाक्रन्दमाक्रोशं न शृणोमि तर्हीत्यध्याहारः । अनेन निर्गमनबीजमुपक्षिप्तम् । काव्यलिङ्गच्छेकवृत्त्यनुप्रासालङ्काराः । श्लोकश्छन्दः ॥ ६० ॥ **इति निष्क्रान्ताः सर्वे इति.** तेषामन्ते विनिर्गम इति **भरतोक्तेः** । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तित इति **दर्पणकारै**रुक्त-

नूपुरकः—[१]वंअस्स, दिट्ठिआ वग्घस्स विअ मुहादो कुरङ्गी विअ इमस्स हत्थादो उव्वरिदा जाणई ।

मञ्जीरकः—सखे, एवमेतत् । तदेहि । वृत्तान्तमिमं जनकराजस्य निवेदयावः ।

( इति निष्क्रान्ताः सर्वे । )

प्रथमोऽङ्कः ।

१ वयस्य, दिष्ट्या व्याघ्रस्येव मुखात्कुरङ्गीवास्य हस्तादुर्वरिता जानकी ।

त्वाच्चाङ्कान्ते सर्वेषां विनिर्गमः । **प्रथमोऽङ्क इति.** अङ्कलक्षणन्तु **दशरूपके**-प्रत्यक्षनेतृचरितो बिन्दुव्याप्तिपुरस्कृतः । अङ्को नानाप्रकारार्थसंविधानरसाश्रयः । **साहित्यदर्पणे**ऽपि प्रत्यक्षनेतृचरितो रसभावसमुज्ज्वलः । भवेदगूढशब्दार्थः क्षुद्र-चूर्णकसंयुतः । विच्छिन्नावान्तरैकार्थः किञ्चित्संलग्नबिन्दुकः । युक्तो न बहुभिः कार्यैर्बीजसंहृतिमान्न च । नानाविधानसंयुक्तो नातिप्रचुरपद्यवान् । आवश्यकानां कार्याणामविरोधाद्विनिर्मितः । नानैकदिननिर्वर्त्यकथया संप्रयोजितः । आसन्ननायकः पात्रैर्युतस्त्रिचतुरैस्तथा । दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । विवाहो भोजनं शापोत्सर्गौ मृत्यू रतं तथा । दन्तच्छेद्यं नखच्छेद्यमन्यद्व्रीडाकरञ्च यत् । शयनाधरपानादिनगराद्युपरोधनम् । स्नानानुलेपने चैभिर्वर्जितो नातिविस्तरः । देवीपरिजनादीनाममात्यवणिजामपि । प्रत्यक्षचित्रचरितैर्युक्तो भावरसोद्भवैः । अन्तनिष्क्रान्तनिखिलपात्रोऽङ्क इति कीर्तित इति ।

इति प्रथमोऽङ्कः ।

# द्वितीयोऽङ्कः ।

——ः*ः——

( ततः प्रविशति तापसः । )

**तापसः**— ( समन्तादवलोक्य ) अहो, अयमनेकशुकशावकानुगमनिकामहरिल्लतावितानमनोरमारामरमणीयसंनिवेशप्रदेशः । ( नेपथ्याभिमुखमवलोक्य । ) कथमयं भिक्षुः । भिक्षो, इत इतः ।

( प्रविश्य । )

**भिक्षुः**—अपि कुशलं तापसस्य ।

**तापसः**—क्षेममस्माकम् । युष्माकं च कुशलम् ।

**भिक्षुः**—इदानीं विशेषतो भवद्दर्शनात् ।

**तापसः**— ( पुनः समणयम् । ) ननु कीटवन्महीपर्यटनेन श्रान्तो भवान् । तदिह मिथिलायां पञ्चरात्रनिवासेन श्रमोऽपनेतव्यः । प्रसङ्गादयं च राजा जनको द्रष्टव्यः ।

**भिक्षुः**—किमस्माकं निरीहाणां राजदर्शनेन ।

**तापसः**—नूनमयं ब्रह्मविद्याविनोदकुशलः खलु सीरध्वजः । तेन द्रष्टुमुचित एव भवादृशाम् ।

**भिक्षुः**—अये, राजापि ब्रह्मविद्यावानिति सत्यमेतत्

---

**द्वितीयोऽङ्कः ।**

अत्र तावत्कविः ताटकावधं सुबाहुवधञ्च विवक्षुर्वधस्याङ्के दर्शयितुमशक्यत्वाद्विष्कम्भकेण तावत्प्रतिपादयति । उक्तञ्चाङ्कलक्षणप्रस्तावे **साहित्यदर्पणे** । दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । इत्याद्युक्त्वा स्नानानुलेपने चैभिर्वर्जितो नातिविस्तर इति । **तापसः** । अहो अयमित्यत्र ( ओदित्यनेन प्रगृह्यसंज्ञायां प्लुतप्रगृह्या इति प्रकृतिभावः ) अनेके ये शुकशावकाः कीरशिशवस्तेषामनुगमनेन निकाममत्यन्तं हरितां हरिद्वर्णानां लतानां वितानेन विस्तारेण मनोरमा य आरामास्तैः रमणीयो हृद्यः सन्निवेशप्रदेशो वसतिस्थानम् । **तापसः** । कीटवत्कीटा यथाऽविश्रान्तं भ्रमन्ति तथा । मिथिलायां जनकनगर्यां पञ्चरात्रनिवासेन, संन्यासिनां नगरे तदधिकवसतेर्निषेधात् । उक्तञ्च । एकरात्रं वसेद्ग्रामे नगरे पञ्चरात्रकमिति । **भिक्षुः** । निरीहाणां निरिच्छानाम् । **तापसः** । ब्रह्मविद्यया विनोदः कालयापनं तस्मिन् कुशलः,

**तापसः**—भिक्षो, सत्यमेतत् । देवस्य दश—( इत्यर्धोक्ते । ) देवस्य शितिकण्ठस्याज्ञा ।

**भिक्षुः**—( विहस्य । ) अलमपलापेन । विदितं मया । राक्षसः खलु भवान् ।

**तापसः**—तत्कथय विश्रब्धं को भवानिति ।

**भिक्षुः**—अहमपि भवादृश एव कोऽपि राक्षसः ।

**तापसः**—तदाकर्ण्यताम् । अहं हि सकलमन्त्रिमुकुटमाल्येन माल्यवता प्रहितस्ताटकावनम् । आकर्णितं हि तेन यत्किल कोऽपि कौशिको नाम मुनी राजानमयोध्यापतिमेत्य स्वमखरक्षणाय तस्य रामनामानं तनयं सानुजं याचितवान् । तेन चावश्यं माननीयो मुनिरिति निजनयनाभ्यामपि प्रियतमौ निजतनयौ तस्य समर्पितौ ।

**भिक्षुः**—ततस्ततः ।

**तापसः**—ततस्तेन मुनिना पारितोषिकं ताटङ्कयुगमर्पितं तस्य राज्ञः । उक्तं च—'राजन्, दिव्यमिदं ताटङ्कयुगम् ।

तदिदं वीरसूकर्णनिवेशोचितमित्यसौ ।
अन्तःस्फुरन्ती रत्नानां वर्णमालेव शंसति ॥ १ ॥

तेन च कौसल्याकर्णयोर्निवेशनीयम्' इति । अनुमतं च राज्ञा । राजकुमारद्वयानुगतेन निजाश्रमपदं प्रति गतं च मुनिना ।

**भिक्षुः**—ततस्ततः ।

---

सीरध्वजो जनकः । **तापसः** । देवस्य दशेति अस्य दशग्रीवानुचरत्वात्तन्नामोच्चारणस्यातिपरिचितत्वात्तदेव मुखान्निःसृतमिति भाव. । **भिक्षुः** । अपलापेन निह्नवेन । **तापसः** । **सकलानां** सर्वेषां मन्त्रिणां मुकुटमाल्यमिव । मुकुटमाल्यं यथा सर्वेषामलङ्काराणां मध्ये उच्चप्रदेशे तिष्ठति तथेति भावः। कौशिकः कुशिकस्य गोत्रापत्यं विश्वामित्र इत्यर्थः । **तापसः** । पारितोषिकं परितोषः प्रयोजनमस्येति ( प्रयोजनमिति ठञ् ) अथवा परितोषेण लभ्यमित्यर्थे ( तेन परिजय्यलभ्येति ठञ् ) ताटङ्कं कर्णभूषणम् । **तदिदमिति** । असौ अन्तर्मध्ये स्फुरन्ती दीप्यमाना वर्णमाला वर्णपरम्परा तदिदं ताटङ्कयुगं वीरं वीरान् वा सूते सा तस्याः कर्णयोर्निवेशस्योचितमिति शंसतीव । उत्प्रेक्षालङ्कारः ॥१॥ तेनेति हेतौ तृतीया । कौशल्या राममाता अनुमतमनुमोदितम् ( मनुधातोः क्तप्रत्यये

**तापसः**—तदिदमाकर्ण्य तत्ताटङ्कयुगं लङ्केश्वरजनन्या निकषाया एव कर्णोचितमिति विचिन्त्य तदाहरणाय पूर्वमेव ताटकां प्रति निजानुचर एकः प्रस्थापितः। अधुना च नूनं ताटकया तत्ताटङ्कयुगमात्तमिति विचार्य तदानयनाय ताटकां प्रत्यहं प्रहितः।

**भिक्षुः**—कथं पुनरिदं वृत्तान्तजातमाकर्णितं माल्यवता।

**तापसः**—

वार्ता च कौतुकवती विमला च विद्या
लोकोत्तरः परिमलश्च कुरङ्गनाभेः।
तैलस्य बिन्दुरिव वारिणि दुर्निवार-
मेतत्त्रय प्रसरति स्वयमेव भूमौ ॥ २ ॥

विशेषतश्च बहुतरप्रणिधिप्रणिधायी माल्यवान्।

**भिक्षुः**—तत्कथं मिथिलोपवने भवान्।

**तापसः**—आकर्णितं हि मया मिथिलामागतो लङ्केश्वर इति। अतस्तद्विलोकनाय प्रथममिहागतः। अधुना च ताटकावनं यास्यामि। तत्कथय तावद्भवान्पुनः कतरः।

**भिक्षुः**—अहमपि स एव यः प्रथमं ताटकां प्रति प्रहितः। मिथिलोपवनागमनकारणं समानमावयोः।

**तापसः**—( सहर्षम्।)तत्कथय तावत्। तत्किं सताटङ्कमधुना ताटकावनम्।

**भिक्षुः**—सताटकमिति तावत्पृच्छ।

---

अनुदात्तोपदेशेति नलोप )। **भिक्षु**.। वृत्तान्तस्य वार्ताया जातं सङ्घः ( जातं जात्योघजनिष्विति हैमः )। **तापसः**। **वार्तेति**। कौतुकं कुतूहलं विद्यते यस्यां तादृशी वार्ता वृत्तान्तः, च विमला निष्कल्मषा विद्या, च कुरङ्गनाभेः कस्तूर्याः लोकेषूत्तरः श्रेष्ठः परिमलो गन्ध एतत्त्रयं वारिण्युदके तैलस्य बिन्दुरिव कण इव भूमौ जगत्यां स्वयमेव प्रसरति। उपमादीपकालङ्कारौ। वसन्ततिलका वृत्तम् ॥ २ ॥ बहुतरा अतिबहवो ये प्रणिधयो दूतास्तान्प्रणिदधाति स्थापयति तच्छीलः तेन प्रणिधिद्वारा वार्ताकर्णनं संभवतीत्यभिप्रायः। **भिक्षुः** समानं लङ्केश्वरावलोकनरूपम्। **तापसः** सताटङ्कम् ताटकानीतताटङ्कसहितं किमिति प्रश्नः। **भिक्षुः** सताटकं ताटकासहितम् इति तावत्पृच्छ। **अनेन**

तापसः—क्व पुनः संप्रति ताटका ।

भिक्षुः—पुरी प्रविष्टा ।

तापसः—तत्किं दशरथस्य ।

भिक्षु---नहि नहि । अन्तकस्य ।

तापसः—केन पुनः प्रतिहारायितमन्तकपुरीप्रवेशे तस्याः ।

भिक्षु --रामबाणेनैव ।

तापसः--क एष रामः । ( विमृश्य । ) नूनं स एव यः खलु दशरथकुमारयोरग्रजः । तत्कथय क्व पुनरधुना ताटकातनयौ ।

भिक्षुः—सुबाहुस्तावत्ताटकामेवानुगतः । मारीचोऽपि शिशुक्रीडोचितरामनाराचपीडितो जीवन्मृत[1] इव दूरं क्षिप्तः ।

तापसः--तत्कथमिदानीं न कथितं केनापि लङ्केश्वरस्य ।

भिक्षुः---कथितमेव किलेदमाक्रन्दता मारीचेन ।

तापसः---तत्कथं कुपितो न लङ्केश्वरः ।

भिक्षु —सीताभिलाषशीतले लङ्केश्वरचेतसि नारूढ एव कोपपरितापः।

तापसः—क्व पुनरधुना रामलक्ष्मणौ ।

भिक्षुः—श्रुतं मया कौशिकानुपदं तदाश्रमान्मिथिलां प्रति प्रचलिताविति । ( विलोक्य । सत्रासम् । ) कथमिमौ तावित एवाभिवर्तेते । तदस्य निशाचरवैरिणो रामस्य पुरतः स्थातुमनुचितमावयोः ।

( इति निष्क्रान्तौ ।

**इति विष्कम्भकः ।**

---

ताटकास्थितिनिश्चये सताटङ्कप्रश्नः सैव नास्तीति सूचितम् । **तापसः** प्रतिहारायितम्, प्रतिहारेणेव प्रतिहार्या इव वा आचरितम्। (कर्तुः क्यङिति क्यङन्ताद्भावे क्तः ) । **भिक्षुः । सुबाहुरिति.** । सुबाहुरपि रामेण हत इति भावः । मारीचोऽपि तन्नामकस्ताटकाज्येष्ठतनयोऽपि शिशुक्रीडोचितो यो रामनाराचस्तेन पीडितो न तु महता खरेण वा शरेण विद्ध इति भाव. । जीवन्मृत इव दूरं समुद्रमध्ये क्षिप्तः । **विष्कम्भक इति** । अत्र ताटकादिवधस्य वृत्तस्य, रामलक्ष्मणयोर्विश्वामित्रेण सह मिथिलागमनस्य वर्तिष्यमाणस्य, प्रदर्शनाद्विष्कम्भकः । मध्यमपात्रप्रयुक्तत्वाच्छुद्धभेदः ।

---

१ जीवन्मुक्त इति पाठः ।

( ततः प्रविशतो रामलक्ष्मणौ । )

**राम**·—वत्स लक्ष्मण, पश्यपश्यारामरामणीयकम् ।

**लक्ष्मणः**—आर्य, निसर्गरमणीयोऽयमारामः । अधुना तु मधुमासावतारेण नितान्तरमणीयः ।

**रामः** ( सहर्षम् । )कथमवतीर्णैव मधुमासलक्ष्मीः । ( विमृश्य । ) एवमेतत् । तथाहि

इह मधुपवधूनां पीतमल्लीमधूनां
विलसति कमनीयः काकलीसंप्रदायः ।
इह नटति सलीलं मञ्जरी वञ्जुलस्य
प्रतिपदमुपदिष्टा दक्षिणेनानिलेन ॥ ३ ॥

अपि च ।

मलयशिखरादाकैलासं मनोभवशासना-
द्भुवनवलयं जेतु वाञ्छन्वसन्तसमीरणः ।
विहितवसतिं कैलासाग्रे भुजङ्गधरं हरं
मनसि विमृशन्भीतः शङ्के प्रयाति शनैः शनैः ॥ ४ ॥

---

**रामः** । आरामस्योपवनस्य रामणीयकं सौन्दर्यं ( योपधाद्गुरूपोत्तमादिति भावार्थे वुञ् ) **लक्ष्मणः** । आर्येत्यग्रजसम्बोधनम् । उक्तञ्च **दर्पणे** । वयस्येत्युत्तमैर्हंहो मध्यैरार्येति चाग्रज इति । निसर्गेण स्वभावेन रमणीयो मनोहरो मधुमासश्चैत्रमासः । **राम**· । **इहेति** । इह पीतं मल्लीनां तृणशून्यानां ( महाराष्ट्रभाषया मोगरा ) मधु पुष्परसो याभिस्तासां ( मधु मद्ये पुष्परसे इत्यमरः ) मधुपवधूना भ्रमरीणां कमनीयो मनोज्ञः काकलीसम्प्रदायः सूक्ष्मकलपरम्परा विलसति आविर्भवति; इह दाक्षिणेन दाक्षिणदिग्भवेनानिलेन वायुना प्रतिपदं प्रतिस्थानं ( पदं शब्दे च वाक्ये च व्यवसायप्रदेशयोरिति मेदिनी ) उपदिष्टा प्रेरिता वञ्जुलस्य वेतसस्य मञ्जरी लीलया सहितं यथा स्यात्तथा नटति । स्वभावोक्तिरलङ्कारः । स्वभावोक्तिः स्वभावस्य जात्यादिस्थस्य वर्णनमिति लक्षणात् । मालिनी वृत्तम् ॥ ३ ॥ **मलयेति** । मनोभवस्य मदनस्य शासनादाज्ञया मलयस्य तन्नामकपर्वतस्य शिखराच्छृङ्गादाकैलासं कैलासमभिव्याप्य भुवनवलयं जगन्मण्डलं जेतुमभिभवितुं वाञ्छन्निच्छन्वसन्तसमीरणः दाक्षिणानिलः, कैलासाग्रे कैलासशिखरे विहिता

---

१ विमृशन्नीत इति पाठः ।

**लक्ष्मणः**—आर्य, अहं त्वेवं तर्कयामि ।

पथि पथि लतालोलाक्षीभिः स्रवन्मधुसीकरं
कुसुमनिकरं वर्षन्तीभिः सहर्षमिवार्चितः ।
मधुकरवधूगीतासक्तं कुरङ्गकमास्थितः
प्रसरति वने मन्दंमन्दं वसन्तसमीरणः ॥ ५ ॥

**रामः**—वत्स, अलमनेन । तद्यावदयं भगवान्विश्वामित्रस्तत्रभवतो याज्ञवल्क्यस्य समागमसुखमनुभवति तावत्तदीयसायंतनदेवतार्चनोचितानि कुसुमान्यवचीयन्ताम् ।

---

कृता वसतिर्निवासो येन तादृशं भुजङ्गधरं हरं मनसि विमृशन्विचारयन् भीतः सञ्छनैश्शनैः मन्दंमन्दं प्रयाति गच्छतीति मन्ये । अत्र वायुमन्दगमनस्य भीतेरहेतुत्वेऽपि हेतुत्वकल्पनाद्धेतूत्प्रेक्षालङ्कारः । तथा भुजङ्गधरमिति विशेषणं सर्पस्य वायुभक्षकत्वाभिप्रायेण दत्तमिति परिकरालङ्कारोऽपि. । हरिणी वृत्तम् ॥४॥ **लक्ष्मणः । पथीति.** स्रवन्तो गलन्तो मधुनः पुष्परसस्य शीकरा अम्बुकणा यस्य तादृशं पुष्पनिकरं पुष्पसमूहं वर्षन्तीभिः लता एव लोलाक्ष्यस्त्रियस्ताभिः पथिपथि (वीप्सायां द्वित्वम्) सहर्षं यथा तथार्चित इव पूजित इव वसन्तसमीरणः, मधुकरवधूनां भ्रमरीणां गीते गाने आसक्तं कुरङ्गकं मृगं, कुरङ्गानां गानलुब्धत्वं तु सुप्रसिद्धमेव । आस्थित उपविष्टः, वायोः कुरङ्गवाहनत्वात् । उक्तञ्च भविष्योत्तरे **वेङ्कटेशमाहात्म्ये** दशमाध्याये । एणं समारुह्य स भारतीशः सुगन्धमादाय ययौ गिरीन्द्रमिति । अत एव वने कानने मन्दंमन्दं प्रसरति सञ्चरते, एवमहं तर्कयामीति पूर्ववाक्येनान्वयः । उत्प्रेक्षालङ्कारः । हरिणी वृत्तम् ॥ ५ ॥ **रामः** । वत्सेति लक्ष्मणसम्बोधनम् । उक्तञ्च **दर्पणे** । वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योनुजश्च वक्तव्य इति । अनेन वसन्तवर्णनेनालम्. यावदित्यवधौ तत्रभवतः पूज्यस्य (तत्रभवान्भगवानितिशब्दो वृद्धैः प्रयुज्यते पूज्य

**लक्ष्मणः**—बाढम्। ( इति लताविटपान्तरितः कुसुमावचयं नाटयति। )

**रामः**—(विलोक्य।) कथमिदमितश्चण्डिकायतनम्।(अञ्जलिं बद्ध्वा।) मातः,

करुणतरङ्गतरङ्गिणि विकसन्नयनामृतोर्मिशीकरिणि।
तरुणतुहिनकरचूडामणिरमणि त्वां नमस्यामि॥ ६॥

( पुनरन्यतो विलोक्य। ) अये, इयमसौ मदकलकलहंसोत्तंसितसितसरोजराजिराजिता सरसी सरसीकरोति मे चेतः। ( पुनः सकौतुकम्। ) अये, कथमयं नलिनीवनविहारिणीं सहचरीमपि विहाय कलहंसपोतश्चूतविटपान्तरालमनुसरति। ( कर्णं दत्त्वा। ) अये, क एष मदकलकरिकनकशृङ्खलामणिरणितानुकारी मनोहारी कोऽपि कलकलः समुल्लसति। ( विमृश्य। ) नूनं राजहंससिञ्जितहारि मञ्जीरगुञ्जितमेतत्। तदवश्यमिह सलीलचलच्चरणरणन्मणिनूपुरया पुराङ्गनया कयाचन, चण्डिकायतनमागच्छन्त्या भवितव्यम्। तदलमस्माकमितोऽवलोकनेन परस्त्रीति शङ्कापि सकोचाय रघूणाम्।

---

इत्यभिधानरत्नमालायाम्। **लक्ष्मणः**। बाढमित्यङ्गीकारार्थम् ( भृशप्रतिज्ञयोर्बाढमित्यमरः। **रामः**। **करुणेति.** करुणाः कृपा एव तरङ्गा ऊर्मयस्तेषां तरङ्गिणि नदि अक्षीणकृपात्वादिति भावः, विकसद्भ्यां नयनाभ्याममृतोर्मीणां सुधावीचीनां शीकरा. कणा यस्यां तत्सम्बुद्धिः, त्वत्करुणावलोकनं सुधावृष्टिसदृशमिति भावः। तरुणोऽचिरोदितस्तुहिनकरश्चन्द्रः स एव चूडामणिः शिरोरत्नं यस्य तस्य शङ्करस्य रमणि प्रेयसि, त्वां नमस्यामि नमस्करोमि, परिकरच्छेकवृत्त्यनुप्रासालङ्काराः। आर्या छन्दः। यस्याःप्रथमे पादे द्वादश मात्रास्तथा तृतीयेऽपि। अष्टादश द्वितीये पञ्चदश चतुर्थके सार्येति श्रुतबोधे॥ ६॥ **अये इति.** मदकलैर्मदाव्यक्तध्वनिभिः कलहंसैः कादम्बैरुत्तंसितया भूषितया सितसरोजराज्या पुण्डरीकश्रेण्या राजिता शोभिता सरसी मे मम चेतश्चित्तं सरसीकरोति आर्द्रीकरोति। **पुनरिति.** नलिनीवने कमलिनीवने विहारिणीं क्रीडमानां सहचरीं प्रियामपि विहाय कलहंसपोतः कादम्बशिशुः चूतस्याम्रवृक्षस्य यो विटपः शाखाविस्तारस्तस्यान्तरालं मध्यमनुसरति। **कर्णं दत्त्वेति**। मदकलस्य मदोत्कटस्य करिणो गजस्य शृङ्खलाया निगडस्य मणीनां रणितानुकारी शब्दानुकारी मनांसि हरति तच्छील.। **विमृश्येति.** राजहंसानां शिञ्जितं कूजितं तदिव हारि हृद्यं मञ्जीरस्य नूपुरस्य गुञ्जितं रवः लीलया सहितं चलन्तौ यौ चरणौ ताभ्यां रणन्तौ मणिनूपुरौ यस्या-

( नेपथ्ये । )

भार्तृदारिके, इत इतः ।

**रामः**—कथमियं राजकुमारिका । तदालोकयामि तावत् । ( विलोक्य । सहर्षकौतुकम् । )

केयं श्यामोपलविरचितोल्लेखहेमैकरेखा-
लग्नैरङ्गैः कनककदलीकन्दलीगर्भगौरैः ।
हारिद्राम्बुद्रवसहचरं कान्तिपूरं वहद्भिः
कामक्रीडाभवनवलभीदीपिकेवाविरस्ति ॥ ७ ॥

( ततः प्रविशति सीता सखी च । )

**सीता**—हला, पेक्ख पेक्ख । अज्ज इममुज्जाणं वसन्तसहअरेण सअं जेव्व मम्महेणालंकिदं विअ अतिमेत्तं रमणिज्जं पडिहादि ।

**सखी**—अनवद्याङ्गि, एवमेतत् ।

**रामः**—अये, सर्वानवद्याङ्गीति वक्तव्यम् । नन्वस्याः-

---

१ हला, पश्य पश्य । अद्यैतदुद्यान वसन्तसहचरेण स्वयमेव मन्मथेनालंकृतमिवातिमात्र रमणीय प्रतिभाति ।

---

स्तया पुराङ्गनया नगरस्त्रिया, रघूणां रघुवंशोद्भवानाम् । **नेपथ्ये । भर्तृदारिके इति.** वाच्या प्रकृतिभी राज्ञः कुमारी भर्तृदारिकेति **साहित्यदर्पणे । रामः ! केयमिति** । श्यामोपले निकषे विरचितः कृतः उल्लेखो घर्षणं यस्यास्तादृशी हेम्नः सुवर्णस्य रेखेव, अत्र रेखाशब्दस्तत्सदृशे लाक्षणिकः, कनककदल्याः सुवर्णकदल्याः कन्दलीगर्भ इव नवाङ्कुरगर्भ इव गौरैः पीतवर्णैः ( गौरोरुणे सिते पीत इत्यमरः ) हरिद्रायाः इदं हारिद्रं तच्च तदम्बु च तस्य द्रवसहचरं द्रवसदृशं कान्तिपूरं तेजःसङ्घं वहद्भिः लग्नैः सक्तैरङ्गैरुपलक्षिता, कामस्य मदनस्य यत्क्रीडाभवनं विलासमन्दिरं तस्य वलभ्याश्चन्द्रशालाया दीपिकेव हस्तदीप इव, ( दीपिका हस्तदीपः स्यादिति वैजयन्ती ), अथवा कामक्रीडाभवनवलभ्या दीपिका प्रकाशिका रतिरिति यावत् । सेव, अथवा कामक्रीडाभवनवलभीति भिन्नं पदं, कामस्य क्रीडाभवनवलभीति विग्रहः । यौवनारम्भेण कामसंचरणयोग्येति भावः, एतादृशी केयं दीपिकेवाविरस्तीति सम्बन्ध । उपमानुप्रासालङ्कारौ । मन्दाक्रान्ता वृत्तम् ॥ ७ ॥ **रामः । बन्धूकेति.** अस्या अधर ओष्ठः बन्धूकस्य बन्धुजीवकपुष्पस्य बन्धुः मित्रम्, समानवर्णत्वाद्बन्धुत्वमिति भावः । चक्षुर्नयनं सितकेतकपुष्पस्याभेवाभा

बन्धूकबन्धुरधरः सितकेतकाभं
चक्षुर्मधूककलिकामधुरः कपोलः।
दन्तावली विजितदाडिमबीजराजि-
रास्यं पुनर्विकचपङ्कजदत्तदास्यम् ॥ ८ ॥

( पुनर्निर्वर्ण्य। ) अहो, मुग्धाया अप्यस्याः प्रकृतिकमनीयपदार्थपरिशीलनौचित्यचातुरी। तथाहि। इयं हि

पदाभ्यामुन्निद्रामधरयति शोणाम्बुजरुचिं
कराभ्यामादत्ते नवकिसलयानामरुणताम्।
प्रवालस्य च्छायां दशनवसनाग्रेण पिबति
स्मितज्योत्स्नापूरैरुपहसति कान्तिं हिमरुचेः ॥ ९ ॥

**सखी**—भर्तृदारिके, इदं तच्चण्डिकायतनम्।

**सीता**—( अञ्जलिं बद्ध्वा। ) देवि[1], ससहरमौलिदेहाद्धधारिणि, तिहुअणघरसुआसिणि, णमो णमो दे।

**सखी**—समुचितैव प्रणामपरिपाटी।

**सीता**—( सप्रणयकोपम्। ) अलमलीअजप्पिदेण[2]।

---

१. देवि, शशधरमौलिदेहार्धधारिणि, त्रिभुवनगृहसुवासिनि, नमो नमस्ते।

२. अलमलीकजल्पितेन।

---

यस्य तादृशम्, कपोलो गण्डो मधूकस्य गुडपुष्पस्य कलिकेव कोरक इव मधुरः, दन्तावलिर्दन्तपङ्क्तिर्विजिता पराभुता दाडिमबीजानां पङ्क्तिर्यया तादृशी, आस्यं पुनर्विकचेभ्यः फुल्लेभ्यः पङ्कजेभ्यः दत्तं दास्यं येन तादृशं, अत्र बन्धूकबन्धुरधरो विजितदाडिमबीजराजिर्दन्तावलिरित्यनेन पाणिग्रहीतुरधिकसुखदत्वं सूचितम्। उक्तञ्च **वराहमिहिरेण**। बन्धुजीवकुसुमोपमोऽधरो मांसलो रुचिरविम्बरूपधृक्। कुन्दकुड्मलनिभाः समा द्विजा योषितां पतिसुखामितार्थदा इति॰ उपमाप्रतीपानुप्रासालङ्काराः। वसन्ततिलका वृत्तम् ॥ ८ ॥ **मुग्धाया इति**। तल्लक्षणं **साहित्यदर्पणे**—प्रथमावतीर्णयौवनमदनविकारा रतौ वामा। कथिता मृदुश्च माने समधिकलज्जावती मुग्धेति। प्रकृत्या स्वभावेन कमनीयपदार्थानां सुन्दरवस्तूनां परिशीलनस्याभ्यासस्यौचित्ये उचितताया चातुरी चातुर्यम्। **पदाभ्यामिति**॰ इयं सीता हि यस्मात्पदाभ्यां चरणाभ्यामुन्निद्रां विकसितां शोणाम्बुजरुचिं रक्तकमलकान्तिमधरयति नीचीकरोति। कराभ्यां पाणिभ्यां नवकिसलयानां नूतनपल्लवानामरुणतामादत्ते स्वीकरोति. दशनवसनस्योष्ठस्याग्रेण प्रवालस्य विद्रुमस्य छायां कान्तिं पिबति.

**सखी**—( अञ्जलिं बद्ध्वा। )

कान्तमिन्दुमणिदामकोमले
कोमलेन्दुमुकुटाङ्कशायिनि।
इन्दुचारुमचिरेण विन्दता-
मिन्दुसुन्दरमुखी सखी मम॥ १०॥

**रामः**—अये, कथमस्याः परिणयमनोरथप्रणयी सखीजनः। ( विमृश्य। ) उचितमेतत्। वयःसंधौ खल्वियं वर्तते। तथाहि।

अपक्रान्ते बाल्ये तरुणिमनि चागन्तुमनसि
प्रयाते मुग्धत्वे चतुरिमणि चाश्लेषरसिके।
न केनापि स्पृष्टं यदिह वयसा मर्म परमं
तदेतत्पञ्चेषोर्जयति वपुरिन्दीवरदृशः॥ ११॥

---

तदपेक्षया रक्तत्वादिति भावः। स्मितस्य मन्दहासस्य ज्योत्स्नापूरैः कान्तिप्रवाहैर्हिमरुचेश्चन्द्रस्य कान्तिमुपहसति। लोकेऽपि पदाभ्यामधरीकरणं, हस्ताभ्यामादानं, ओष्ठाग्रेण पानं, स्मितेनोपहसनं सुप्रसिद्धमेव, तदनुसारेणेयं कवेर्वाक्यरचना बोध्या। अत्र पदाभ्यामुन्निद्रामितिश्लोकपादनास्याः पाणिग्रहीतुर्भूपतित्वं सूचितम्। उक्तञ्च **वराहमिहिराचार्यैः**। स्निग्धोन्नताग्रतनुताम्रनखौ कुमार्याः पादौ समोपचितचारुनिगूढगुल्फौ। श्लिष्टाङ्गुली कमलकान्तितलौ च यस्यास्तामुद्वहेद्यदि भुवोऽधिपतित्वमिच्छेदिति। निदर्शनाप्रतीपालङ्कारौ। शिखरिणी वृत्तम्॥ ९॥ **सखी। कान्तमिन्द्विति**। इन्दुमणेश्चन्द्रकान्तमणेर्दामेव मालेव कोमले इति पार्वतीसम्बोधनं, कोमलेन्दुमुकुटस्य शङ्करस्याङ्कशायिनि उत्सङ्गशयनशीले हे पार्वति, इन्दुरिव सुन्दरं मुखं यस्यास्तादृशी मम सखी सीतेति भावः। इन्दुरिव चारुं रुचिरं कान्तं पतिं विन्दतां लभताम्। उपमायमकवृत्त्यनुप्रासालङ्काराः। रथोद्धता वृत्तम्। रान्नराविह रथोद्धता लगाविति लक्षणात्॥ १०॥ **रामः** परिणयस्य विवाहस्य मनोरथे प्रणयी प्रेमवान्. वयःसन्धौ बाल्यतारुण्ययोः सन्धौ। **अपक्रान्त इति**। बाल्येऽपक्रान्ते गते, तरुणिमनि तारुण्ये ( वर्णदृढादिभ्य इतीमनिच्) आगन्तुं मनो यस्य तादृशे, आगन्तुं प्रवृत्त इत्यर्थः। मुग्धत्वे प्रयाते गते बाल्यत्यागादिति भावः, चतुरिमणि चातुर्ये चाश्लेषरसिके सम्बन्धलालसे, इह अस्मिन्वयःसन्धौ यत्केनाऽपि वयसा बाल्यतारुण्यादिना न स्पृष्टं तदेतत्पञ्चेषोर्मदनस्य परमं मर्म जीवस्थानं ( जीवस्थानं भवेन्मर्मेति हलायुधः ),

**सखी**—अयि देवि, सत्वरं मे पूरय मनोरथम्। यावदियं न दुर्मनायते सखी।

**सीता**—( सप्रणयकोपम्। ) किंति[1] दुम्मणायिस्सम्।

**लक्ष्मणः**—अयि राजहंसकन्यके, किमिति दुर्मनायसे। अयं ते चूतविटपान्तरितः कान्तः।

**सीता**—हला[2], कस्स इमो करिकलहकण्ठणिग्घोसमहुरो कण्ठसद्दो सुणिअदि। ता णिरूवेह्म।

**राम**—( सविषादम्। ) कथमियमन्तरितैव लतया ( लतां प्रति। )

स्तनविजितस्तबकश्रीरधराधरितप्रवालनवलक्ष्मीः।
अयि लतिके तिरयन्ती तरलदृशं नावलम्बसे लज्जाम् ॥१२॥

---

१. किमिति दुर्मनायिष्ये।

२. हला, कस्यायं करिकलभकण्ठनिर्घोषमधुरः कण्ठशब्दः श्रूयते। तन्नि-रूपयामः।

---

इन्दीवरदृशः सीतायाः वपुर्जयति अत्युत्कर्षेण वर्तते। रूपकयथासंख्यालङ्कारौ यथासंख्यं क्रमेणैव क्रमिकाणां समन्वय इति लक्षणात्। शिखरिणी वृत्तम् ॥ ११ ॥ **सखी**। दुर्मना इव आचरसि दुर्मनायसे ( कर्तुः क्यङिति क्यङ् ) **लक्ष्मणः**। राजहंसकन्यके हंसकुमारि चूतविटपेन सहकारशाखाविस्तारेणान्तरितः व्यवहितः कान्तः प्रियः। अत्र राजहंस इवेति समासे राजहंसशब्देन जनकस्तस्य कन्यके सीति, कान्तो राम इत्यप्यर्थो व्यज्यते। इदं पताकास्थानम्। उक्तञ्च **दशरूपके**। प्रस्तुतागन्तुभावस्य वस्तुनोऽन्योक्तिसूचकम्। पताकास्थानकं तुल्यसंविधानविशेषणमिति। **सीता**। करिकलभस्य करिशावकस्य। अत्र कलभशब्दस्य करिशावकवाचकत्वेऽपि करिशब्दसमभिव्याहारे शावकरूपार्थबोधकत्वम्। विशिष्टवाचकानां शब्दानां सति पृथग्विशेषणवाचकपदसमभिव्याहारे विशेष्यमात्रपरत्वमिति न्यायात्। कण्ठनिर्घोष इव मधुरः। **रामः**। **स्तनेति**. अयि लतिके लते ( अल्पार्थे कन्) स्तनाभ्यां विजिता स्तबकश्रीर्गुच्छशोभा यस्याः, अधरेणौष्ठेनाधरिता नीचीकृता प्रवालस्य पल्लवस्य नवलक्ष्मीर्नूतनसम्पद्यस्यास्तादृशी त्वं तरले चञ्चले दृशौ यस्यास्तां सीतां तिरयन्ती छादयन्ती सती, लज्जां ह्रियं नावलम्बसे नाश्रयसीति प्रश्नः।

( पुनः सहर्षम् । )

श्यामच्छवीनामियमन्तराले
प्रादुर्भवन्ती कदलीदलानाम् ।
कलेव चान्द्रीनवनीरदानां
चकोरवन्मां मुदितं करोति ॥ १३ ॥

( पुनः कदलीं प्रति । )

हे बालहेमलतिके ध्रुवमीहसे त्व-
मूरुश्रियं कलयितुं तरलायताक्ष्याः ।
एनां विलम्बय विलासवतीं चिरं हि
स्त्रीणां कलाः परिचिताः स्थिरतां प्रयान्ति ॥ १४ ॥

सीता—हला, को इमो कणअवण्णो सिहण्डिपिच्छमण्डिदकण्णो[1] मुद्धत्तणविमुक्कलोअणविआरो कुमारो दीसदि । इमं पेक्खन्तीए मह णिअवच्छम्मि विअ वच्छत्तणपच्छालिअं हिअअं वट्टदि ।

---

१ हला, कोऽयं कनकवर्णः शिखण्डिपिच्छमण्डितकर्णो मुग्धत्वविमुक्तलोचनविकारः कुमारो दृश्यते । इमं पश्यन्त्या मम निजवत्स इव वात्सल्यप्रक्षालितं हृदयं वर्तते ।

---

प्रतीपानुप्रासालङ्कारौ. आर्या वृत्तम् ॥१२॥ श्यामच्छवीनामिति. श्यामा कृष्णा छविः कान्तिर्येषा तेषां नवनीरदानां नूतनमेघानामन्तराले प्रादुर्भवन्ती चान्द्री चन्द्रसंबन्धिनी कलेव कदलीदलानां मोचापर्णानामन्तराले प्रादुर्भवन्तीयं चकोरवत् स्थितमित्यध्याहारः । तेन वतेर्नासङ्गतिः । मां मुदितं त्दृष्टं करोति । चान्द्री कला यथा चकोरं आनन्दयति तथेयमपि मामिति भावः । उपमालङ्कारः । उपजातिर्वृत्तम् । अनन्तरोदीरितलक्ष्मभाजौ पादौ यदीयावुपजातयस्ता इति लक्षणात् ॥ १३ ॥ हे बालेति । हे बालहेमलतिके इदं कदलीसम्बोधनम् । त्व तरले चञ्चले आयते विशाले च अक्षिणी यस्या. । ( बहुव्रीहौ सक्थ्यक्ष्णोरिति षच् ) ऊरुश्रियं सक्थिशोभां कलयितुं स्वीकर्तुं ध्रुव निश्चयेनेहसे चेष्टसे तर्हि एनां विलासवतीं सीता विलम्बय प्रतिबन्धय । हि यतः स्त्रीणां चिरं बहुकालं परिचिता अभ्यस्ताः कलाः स्थिरतां प्रयान्ति गच्छन्ति । काव्यलिङ्गालङ्कारः । वसन्ततिलका वृत्तम् ॥ १४ ॥ सीता. कनकवर्णः स्वर्णकान्तिः शिखण्डस्य मयूरस्य पिच्छैर्बर्हैर्मण्डितः कर्णः श्रवणं यस्य मुग्धत्वेन बाल्यादिति भाव. । विमुक्ता अनुदितेति भावः ।

---

१. कण्णपूर इति पाठः ।

**लक्ष्मणः**—अये, केयमस्यां सुमित्रायामिव मे सुचिरप्रवृत्ता चित्तवृत्तिः।

**सीता**—हला, इमं कुमारं पुलोअन्तीए मह वच्छा उम्मिला चित्तमारुहदि।

**सखी**—(विहस्य।) नूनमयं कस्यचिद्वत्सशब्दलालनीयो भविष्यति। यं विलोकयन्त्या मे त्वमपि चित्तमारोक्ष्यसि। तत्पृच्छामि तावदेनम्। (परिक्रम्य।) अये राजकुमार, कः खलु भवान्। यस्त्वमेक एव मुग्धतयापरिशीलितास्वपि वनभूमिषु विहरसि।

**लक्ष्मणः**—धिङ् मूर्खे, कथं मामग्रजेन परिसरवर्तिना रामचन्द्रेण नाथवन्तमप्येकाकिनमपदिशसि।

**सखी**—(सहर्षम्।) कुसुमितस्तदधुना मे मनोरथद्रुमः।

**सीता**—हला, किमेत्थ अह्माणम्। ता एहि। णिअघरं जेव्व वज्जह्म। (किंचित्परिक्रम्य पुनर्व्यावृत्य।) हला, एक्कं विसुमरिदह्मि। णं सो सहआरपादवो अवलोअणीओ जस्स वासन्दीलदाए सह संगमं अहिलसन्ति मह अम्बाओ। (इत्युभे परिक्रामतः।)

**रामः**—(सहर्षम्।)

> मन्मनः कुमुदानन्दशरत्पार्वणशर्वरी।
> अहो इयमितो नूनं पुनरप्यभिवर्तते॥ १४॥

---

१. हला, इमं कुमारं विलोकयन्त्या मम वत्सोर्मिला चित्तमारोहति।

२. हला किमत्रास्माकम्। तदेहि। निजगृहमेव व्रजामः। हला, एकं विस्मृतास्मि। ननु स सहकारपादपोऽवलोकनीयो यस्य वासन्त्या लतया सहसंगममभिलषन्ति ममाम्बाः।

---

लोचनविकारा येन वात्सल्यप्रक्षालितं सस्नेहमिति भावः। **लक्ष्मणः** सुमित्रा लक्ष्मणमाता सुचिरप्रवृत्ता बहुकालमासक्ता। **सीता.** इमं कुमारं लक्ष्मणं ऊर्मिला सीताभागिनी। **सखी.** अपरिशीलितास्वनभ्यस्तासु। **लक्ष्मणः** परिसरवर्तिना पर्यन्तचारिणा। **रामः। मन्मन इति.** अहो इत्याश्चर्ये मम मन एव कुमुदं कैरवं तस्यानन्दे शरदस्तन्नामकऋतोः पर्वणि पौर्णमास्यां भवा पार्वणी सा चासौ शर्वरी रात्रिस्तादृशीयं सीता इतः अत्र पुनरपि अभिवर्तते आगच्छति।

---

१. सुचरितपवित्रितेति पाठः। २. चित्तवृत्तिमारोक्ष्यसीति पाठः।

( निर्वर्ण्य। )

वहत्यस्या दृष्टिर्विकचनवनीलोत्पलतुला-
मखण्डस्याभिख्यां वदनमिदमिन्दोः कलयति[1]।
कुचौ किंचिन्मीलत्कमलतुलनां कन्दलयत[2]-
स्तमःशोभां चित्रं[3] चिकुरनिकुरम्बं हि कुरुते ॥ १६ ॥

**सखी**—एष सहकारपादपः, इयं च वासन्ती लता। ( इति तदन्तिकमनुसरतः। )

**रामः**—कथमिमे मे परिसरमनुसरतः। तत्किंचिदपसरामि तावत्।

**सीता**—( सहकारशाखां करे धृत्वा। सकौतुकम्। ) हला, पेक्ख पेक्ख। इमेहिं नहसिहाविलिहिदेहिं कोमलदलेहिं संभावीअदि जं किर इअं चूदलदा केणावि विदद्धेण णिअहत्थेण संभाविदेत्ति। अहवा णिअचावलदासङ्किदेण सअं मम्महेणेव्वेति।

१ हला, पश्य पश्य। एतैर्नखशिखाविलिखितैः। कोमलदलैः संभाव्यते यत्किलेयं चूतलता केनापि विदग्धेन निजहस्तेन संभावितेति। अथवा निजचापलताशङ्कितेन स्वयं मन्मथेनैवेति।

रूपकप्रहर्षणालङ्कारौ। श्लोकश्छन्दः ॥१५॥ **वहतीति.** अस्या जानक्या दृष्टिः विकचस्य फुल्लस्य नवनीलोत्पलस्येन्दीवरस्य तुलां सादृश्यं वहति धत्ते, वदनं मुखं अखण्डस्य पूर्णस्येन्दोरभिख्यां शोभां कलयत्यङ्गीकरोति, कुचौ किञ्चिदीषन्मीलतः सङ्कुचतः कमलस्य तुलनां सादृश्यम्। ( अतुलोपमाभ्यां तृतीयान्यतरस्यामिति निपातनादङन्तस्य तुलाशब्दस्य सिद्धौ तस्मात्प्रातिपदिकाद्धात्वर्थेति णिचि ण्यासश्रन्थेति युच् ) कन्दलयतोङ्कुरयतः। ( कन्दलस्तु नवाङ्कुर इति धरणिः ) उपपन्नमेवैतत्। चन्द्रोदये चन्द्रसूर्यविकासिनोः कमलयोरुन्मीलनमीलनसंभवात्। परन्तु हि यस्मात् चिकुरनिकुरम्बं केशसमूहः तमःशोभां तिमिरकान्तिं कुरुते अत इदं चित्रम्। चन्द्रोदये तमःशोभाया असंभवादिति भावः। काव्यलिङ्गोपमानिदर्शनाछेकवृत्त्यनुप्रासालङ्काराः। शिखरिणी वृत्तम् ॥१६॥ **सीता.** हलेति सखीसम्बोधनम्। उक्तञ्च दर्पणे। हलेति सदृशीति। नखशिखाविलिखितैर्नखाग्ररेखितैः कोमलदलैः मृदुपत्रैः संभाव्यते कल्प्यते, विदग्धेन चतुरेण निजहस्तेन स्वकीयकरेणावलम्ब्येति शेषः। सम्भाविता आदृता। निजायाश्चापलतायाः शङ्का सञ्जाता अस्य तेन। इमां मच्चापलतां कोप्यपहरेदिति शङ्कया तां रेखाङ्कितां चकारेति भावः।

१. कलयस्विति पाठः। २. कन्दलयतामिति पाठः। ३. चित्रामिति पाठः।

**रामः**—इत्थं संभावयति भवती। मम पुनरन्यथा वितर्कः।

मत्वा चापं शशिमुखि निजं मुष्टिना पुष्पधन्वा
तन्वीमेनां तव तनुलतां मध्यदेशे बभार।
यस्मादत्र त्रिभुवनवशीकारमुद्रानुकारा-
स्तिस्रो भान्ति त्रिवलिकपटादङ्गुलीसंधिरेखाः ॥ १७ ॥

**सखी**—भर्तृदारिके, इयं वासन्ती लता। इदं च पश्य।

वासन्तीरसबिन्दुं सुन्दरमिन्दिन्दिरा इह पिबन्ति[1]।
चिरमन्दिरमरविन्दं मन्दंमन्दं परिहरन्ति ॥ १८ ॥

(सीता तदेव पठति।)

**रामः**—किमिदानीं[2] लतान्तरवर्णनया। नन्वियमेव

निर्मुक्तशैशवदशाशिशिरा नवीन-
संप्राप्तयौवनवसन्तमनोरमश्रीः।
उन्मीलितस्तननवस्तबका निकाम-
मेणीदृशस्तनुलता तनुते मुदं नः ॥ १९ ॥

---

लोकेपि स्ववस्तूनामपहारशङ्कया तदुपरि स्वनामादिचिह्नानि कुर्वन्तीति प्रसिद्धिः। चूतस्य मदनसायकत्वेपि चापत्वमपि कविसमयसिद्धं, यथा पुष्पधन्वेति कुसुमेषुरिति च। **रामः। मत्वेति.** हे शशिमुखि पुष्पं कुसुमं धनुर्यस्य (धनुषश्चेति अनङ्) स मदनः तवैनां तन्वीं कृशां तनुलतां निजं स्वकीयं चापं धनुर्मत्वा मध्यदेशे वलग्नप्रदेशे बभार दधार। तत्र प्रमाणन्दर्शयति। यस्मादत्र मध्यप्रदेशे त्रिवलीकपटात् वलित्रयमिषात् त्रिभुवनस्य वशीकारः स्वायत्तीकरणं तस्य मुद्रा चिह्नं तामनुकुर्वन्ति तथा तिस्रोङ्गुलीनां सन्धिरेखा भान्ति। अपह्नुतिरलङ्कारः। मन्दाक्रान्ता वृत्तम् ॥ १७ ॥ **सखी। वासन्तीति.** वासन्त्या माधव्या सुन्दरं रसबिन्दुमिहास्मिन्प्रदेशे इन्दिन्दिरा भ्रमराः पिबन्ति चिरं बहुकालं मन्दिरं आवासस्थानं अरविन्दं कमलं मन्दंमन्दं शनैःशनैः परिहरन्ति त्यजन्ति। स्वभावोक्तिवृत्त्यनुप्रासालङ्कारौ। आर्या वृत्तम्॥१८॥**रामः। निर्मुक्तेति.** निर्मुक्तः शैशवं बाल्यमेव शिशिरस्तन्नामक ऋतुर्यया, नवीनं नूतनं संप्राप्तं यौवनमेव वसन्तस्तन्नामा ऋतुस्तेन मनोरमा मनोहरा श्रीर्यस्याः, उन्मीलितौ प्रादुर्भवन्तौ स्तनौ पयोधरावेव नवस्तबकौ नूतनगुच्छौ यस्याः। एतादृश्येणीदृशः मृगनेत्रायाः सीतायास्तनुलता, नोऽस्माकं निकाममत्यन्तं

---

१ चरन्तीति पाठः। २ आः किमिदानीमिति पाठः।

**सखी**—भर्तृदारिके, पश्य । इयमसौ वासन्ती लता स्वयमेव सहकारपोतमालिङ्गितुं पुरःसरति ।

**सीता**—( सप्रणयकोपम् । ) [१]अये अलीअजप्पिणि, दाणिं तुह परिसरं परिहरिअ अण्णदो गमिस्सम् ।

**रामः**—

अमलमृणालकाण्डकमनीयकपोलरु[१]चे-
स्तरलसलीलनीलनलिनप्रतिफुल्लदृशः ।
विकसदशोकशोणकरकान्तिभृतः सुतनो-
र्मदलुलितानि हन्त ललितानि हरन्ति मनः ॥ २० ॥

**सीता**—( विलोक्य सकौतुकम् । ) [२]अम्मो,

विसट्टपेसलुप्पलप्पलासपुञ्ज[२]सामलो
महेससोम्मसेहरप्फुरन्तसोमकोमलो ।

१. अये अलीकजल्पिनि, इदानीं तव परिसर परिहृत्यान्यत्र गमिष्यामि ।
२ अहो,

विकसितपेशलोत्पलोत्पलाशपुञ्जश्यामलो
महेशसौम्यशेखरस्फुरत्सोमकोमलः ॥

मुदं हर्षं, तनुते विस्तारयति । रूपकच्छेकवृत्त्यनुप्रासालङ्कारा· । वसन्ततिलका वृत्तम् ॥ १९ ॥ **रामः** । **अमलेति.** अमलस्य मृणालकाण्डस्य बिसकाण्डस्येव कमनीया कपोलरुचिर्गण्डकान्तिर्यस्याः, तरले चञ्चले सलीले लीलासहिते नीलनलिने इन्दीवरे इव प्रतिफुल्ले दृशौ यस्या·, विकसद्विकचं यदशोकपुष्पं (तस्य विकार इति विहितस्याणः पुष्पमूलेषु बहुलमिति लुप्) तस्येव शोणा रक्ता करकान्तिर्हस्तशोभा तां बिभर्ति तस्याः, सुतनोः चार्वङ्ग्याः मदेन लुलितानि चञ्चलानि. (प्रेङ्खोलितं तरलितं लुलितं प्रेङ्खितं धुतमिति हेमचन्द्रः) ललितानि शृङ्गारचेष्टितानि । शृङ्गारचेष्टितं ललितमिति **साहित्यदर्पणे** । मनश्चेतो हरन्ति, हन्तेति हर्षे । उपमावृत्त्यनुप्रासावलङ्कारौ । नर्कुटकं वृत्तम् । यदि भवतो नजौ भजजला गुरु नर्कुटकमिति लक्षणात् ॥ २० ॥ **सीता.** अम्मो इति आश्चर्ये । **विसट्टेति.** विकसितं विकचं पेशलं सुन्दरं यदुत्पलं कुवलयं तस्योत्पलाशस्य उद्गतपत्रस्य पुञ्ज इव काण्ड इव श्यामलः श्यामवर्ण·, अत्र पुञ्जश्यामल इति पाठः

१. कपोलरुच इति पाठः । २. पुञ्जेति पाठः ।

[1]लदाघरम्मि को इमो अणङ्गरूअखण्डणो
विलोअणाण देइ मे सुहं सिहण्डमण्डणो ॥ २१ ॥

सखी—भर्तृदारिके, कथय कथं लतालोकेनाद्विरतासि ।

( सीतानाकर्णितकेन तदेव पञ्चमस्वरेण पठति । )

सखी—( उपसृत्य । ) कथमियमन्यचित्तेव लक्ष्यते । क्व पुनश्चित्तमस्याः । ( रामं दृष्ट्वा । साकूतम् । ) अये, इदमस्याश्चित्तगन्धगजबन्धनालानम् । ( पुनः सीतां हस्ते धृत्वा । ) भर्तृदारिके, प्रणयमधुरोऽपि सखीजनः किमवधीर्यते । अथवोचितमिदम् । अधुना हि तवायं हृदयमधिवसति ।

सीता—( स्वगतम् । ) [2]कहं अवगदह्मि इमाए । ( इति लज्जां नाटयति । )

सखी—( स्वगतम् । ) कथमियं लज्जते । तदन्यतो नयामि ।

---

१. लतागृहे कोऽयमनङ्गरूपखण्डनो
विलोचनयोर्ददाति मे सुखं शिखण्डमण्डन· ॥

२. कथमवगतास्म्यनया ।

---

सार्धीयान् । महेशस्य शङ्करस्य सौम्यो मनोज्ञः ( सौम्यः सोमात्मजेऽनुग्रे मनोज्ञे सोमदैवत इति हेमचन्द्रः ) यः शेखर· शिरोभूषणं तादृशश्चासौ स्फुरत्सोमश्चेति विशेषणोभयपदः कर्मधारयः । स इव कोमलः, अनङ्गस्य मदनस्य रूपं सौन्दर्यं खण्ड्यतेऽनेनेति (करणाधिकरणयोश्चेति ल्युट् ) तादृशः, शिखण्डः काकपक्षो मण्डनं भूषणं यस्य, स्वयंवरकाले रामस्य काकपक्षधरत्वात् । तथा च **कालिदासः** "काकपक्षधरमेत्य याचित इति" । वा. **रामायणेऽपि** "काकपक्षधरं वीरं ज्येष्ठं मे दातुमर्हसीति बा. का. १९ सर्गे" । मे लोचनयोः सुख ददात्यय कः । उपमाछेकवृत्त्यनुप्रासालङ्काराः । पञ्चचामरं वृत्तम् । जरौ जरौ जगाविदं वदन्ति पञ्चचामरमिति लक्षणात् ॥ २१ ॥ **सखी. रामं दृष्ट्वेति.** इदं रामरूपप्रेक्षणम् चित्तमेव गन्धगजः तस्य बन्धने आलानं बन्धस्तम्भः, प्रणयेन प्रश्रयेण मधुरः प्रियः किमवधीर्यते कुतस्तिरस्क्रियते । अयं राम इति सख्यभिप्रायः । हृदयमधिवसति । ( उपान्वध्याङ्वस इति कर्मत्वम् ) । **सीता.** तुभ्यं कोपिष्यामि ( क्रुधद्रुहेति संप्रदानत्वम् ) ।

---

१. लोकनकौतुकादिति पाठः । २. पञ्चमस्वर मिति पाठः । ३. चित्तगजेति पाठः ।

( प्रकाशम् । ) कथमद्यापि त्वदयं न मुञ्चति ते प्रणयकोपः ।

**सीता**—( स्वगतम् । ) कोवमुद्दिसिअ इमाए भणिदं ण उण इमम् ।
( प्रकाशम् । ) हला, कहं तुह कुविस्सं । केवलमण्णचित्तदाए ण संभाविदासि ।

**सखी**—क्व तर्हि दत्तचित्तासि ।

**सीता**—आरामम्मि ।

**सखी**—( विहस्य । ) अहो ते चातुर्यं यत आकारप्रकटनेनैवाकारगुप्तिं कृतवत्यसि ।

( सीता सलज्जमधोमुखी तिष्ठति । )

**रामः**—

उत्तरङ्गय कुरङ्गलोचने
लोचने कमलगर्वमोचने ।
अस्तु सुन्दरि कलिन्दनन्दिनी-
वीचिडम्बरगभीरमम्बरम् ॥ २२ ॥

**सखी**—( सप्रणयस्मितम् । ) भर्तृदारिके, अलमालिजने अपि त्वदयापलापेन । ननु विदितं मया ।

अत्र ते सखि शिखण्डमण्डने
पुण्डरीकरमणीयलोचने ।

१. कोपमुद्दिश्यानया भणितं न पुनरिमम् । हला, कथं तुभ्यं कोपिष्यामि । केवलमन्यचित्ततया न संभावितासि । २, आरामे ।

**सखी.** अहो इत्याश्चर्ये, आकारस्य आ इति वर्णस्य प्रकटनेनाविष्करणेन रामशब्दस्य प्राक्संयोजनेनेति यावत्, आकारगुप्तिं रामावलोकनरूपहृद्गतभावस्य गोपनं कृतवत्यसि अकार्षीः । **रामः उत्तरङ्गयेति** । हे कुरङ्गलोचने मृगनेत्रे, कमलानां गर्वमोचने गर्वापहारके लोचने नेत्रे उत्तरङ्गय ऊर्ध्वं सञ्चारय· हे सुन्दरि अम्बरमाकाशं कलिन्दनन्दिनीवीचीनां यमुनातरङ्गाणां डम्बरेणाडम्बरेण गभीरं गम्भीरमस्तु· । नेत्रकृष्णकान्तिप्रसारणेनेति भाव । उपमाप्रतीपतद्गुणलाटच्छेकवृत्त्यनुप्रासालङ्काराः । रथोद्धता वृत्तम् ॥ २२ ॥
**सखी । अत्रेति.** हे सखि शिखण्ड· काकपक्षः मण्डनं यस्य तस्मिन्, पुण्ड-

१· आरामेति पाठः ।२. हरिणगर्वेति पाठः । ३. कामनीयेति पाठः ।

श्यामतामरसदामकोमले
रामनामनि मनो मनोभवे ॥ २३ ॥

**सीता**—हला, पेक्ख पेक्ख।[1]

मअणवहूणेउररवरमणिज्जं किंपि किंपि कूजन्तो[2]।
माअन्दमुउलमहुरसमहुरमुहो महुअरो भमइ ॥ २४ ॥

(पुनः स्वगतम्।)

अइ पिबह लोअणाइं पिअजणवअणारविन्दमअरन्दम्।
अइ तरलाइं विआरह पुण कह तुह्मे कह इमो अ ॥ २५ ॥

---

१ हला, पश्य पश्य।
मदनवधूनूपुररवरमणीयं किमपि किमपि कूजन्।
माकन्दमुकुलमधुरसमधुरमुखो मधुकरो भ्रमति ॥ २४ ॥
अयि पिबत लोचने प्रियजनवदनारविन्दमकरन्दम्।
अयि तरले विचारयत पुनः क युवां काय च ॥ २५ ॥

---

रीके सिताम्भोजे इव रमणीये लोचने यस्य, श्यामतामरसानां कृष्णकमलानां दाम्नीव कोमले सुकुमारे अत्र अस्मिन् राम इति नाम यस्य तस्मिन्मनोभवे मदने ते मनोऽस्तीति शेषः। उपमारूपकलाटवृत्त्यनुमासालङ्काराः। रथोद्धता वृत्तम् ॥ २३ ॥ **सीता**। **मदनेति**· मदनवध्वा रतेर्नूपुरयोर्मञ्जीरयो रव इव रमणीयं यथा तथा किमपि किमपि, अव्यक्तमिति यावत्। कूजन्, माकन्दमुकुलस्य सहकारकलिकायाः ( माकन्दः सहकारोऽस्त्रीति मेदिनी ) मधुरसेन मकरन्देन मधुरं मुखं यस्य सः, मधुकरो भ्रमति·। अत्र मधुकरप्रेक्षणव्याजेन रामदर्शनरूपेष्टसाधनात्पर्यायोक्तमलङ्कारः। पर्यायोक्तं तदप्याहुर्यद्व्याजेनेष्टसाधनमिति लक्षणात् ॥ २४ ॥ **अयीति**. अयि लोचने प्रियजनस्येष्टजनस्य वदनमेवारविन्दं तस्य मकरन्दं पिबतम्। अयि तरले चञ्चले इत्यपि नयनसम्बोधनं विचारयतं विचारं कुरुतं, पुनः अस्मिन्नवसरे भ्रष्टे अयं रामः क युवां च क। दुर्लभवस्तूनामाकस्मिकं कचिदेव दर्शनं भवति न सर्वदेति भावः। रूपकवृत्त्यनुमासावलङ्कारौ। आर्या

---

१. णुउरेत्ति पाठः २ कूअन्तो इति पाठः।

( इति रामं नयनाञ्चलेन सलीलमालोकते । )

**राम**·—( निर्वर्ण्य । )

सर्वस्वं नवयौवनस्य भवनं भोगस्य भाग्यं दृशां
सौभाग्यं मदविभ्रमस्य जगतः सारं फलं जन्मनः ।
साकूतं कुसुमायुधस्य हृदयं रामस्य तत्त्वं रतेः
शृङ्गारस्य रहस्यमुत्पलदृशस्तत्किंचिदालोकितम् ॥ २६ ॥

( सीता स्वगतं पुनस्तामेव गाथां पठति । )

**सखी**—अयि भार्तृदारिके, पश्य ।

दलदमलकोमलोत्पलपलाशशङ्काकुलोऽयमलिपोतः ।
तव लोचनयोरनयोः परिसरमनुवेलमनुसरति ॥ २७ ॥

---

वृत्तम् ॥ २५ ॥ **राम**· । **सर्वस्वमिति**· तस्याः किञ्चिदालोकितं कटाक्षवीक्षणं नवयौवनस्य प्रत्यग्रतारुण्यस्य सर्वं स्वं धनं यस्मिन्नेतादृशं भवनं गृहम् । दृशां दृष्टीनां भोगस्य सुखस्य ( भोगः सुखे धने चेति मेदिनी ) भाग्यं सुदैवं, जगतो भुवनस्य लक्षणया तत्स्थजनस्य मदविभ्रमस्य तारुण्यमदचेष्टितस्य सौभाग्यं परमैश्वर्यं, जन्मनो जननस्य सारं मुख्यं फलं, कुसुमायुधस्य मारस्य साकूतं साभिप्रायं हृदयं मानसं, रामस्य रतेः प्रीतेः ( रतिः स्त्री स्मरदारेषु रागे सुरतगुह्ययोरिति मेदिनी ) तत्त्वं, उत्पलदृश· कमलनेत्रायाः शृङ्गारस्य सम्भोगाद्यात्मकस्य रहस्यं गुह्यं, रहस्यं गुह्यमुच्यत इति हलायुधः ) । अथवा उत्पलदृश· तत् किञ्चिदालोकितं कटाक्षवीक्षणं नवयौवनस्य सर्वस्वं, भोगस्य भवन, दृशा भाग्यं, इति रीत्या सर्वं योजनीयम् । साकूतमित्यत्र संपत्त्यर्थेऽव्ययीभावः । अभिप्रायसंपदिति भावः । तथा च । प्रक्रमभङ्गो न शङ्कनीयः। मालारूपकमलङ्कारः । माला तु पूर्ववदिति लक्षणात् । शार्दूलविक्रीडितं छन्दः ॥ २६ ॥ **सीता**. गाथां आर्याम् । आर्यायां एव पिङ्गलग्रन्थे गाथेत्युक्तेः । **सखी**. **दलदमलेति**. दलती स्फुटिते अमले स्वच्छे ये उत्पले कुवलये तयोः पलाशानां दलानां शङ्कया संशयेनाकुलोऽयमलिपोतः भ्रमरशिशुः,तवानयोर्लोचनयोर्नेत्रयोः परिसरमासन्नदेशमनुवेलं,वेलां वेलामिति वीप्सायामव्ययीभावः। अनुसरति अनुगच्छति। भ्रान्तिमदलङ्कारःभ्रान्तिमानन्यसंवित्तत्तुल्यदर्शन इति तल्लक्षणम् । आर्या वृत्तम् २७

---

१. अवलोकनेति इति पाठः । २ आकूतमिति पाठः । ३ रागस्येति पाठः ।

**सीता**—( सहर्षमात्मगतम् ) [1]अपि लोअणाइं बद्धसप्पदाइ णं सुहो-पसुदीयम् ।

**रामः** ( समत्याशम् । )

अमृतमयपयोधिक्षीरकल्लोललोलैः
स्नपयति तरलाक्षी यत्र मां नेत्रपातैः ।
अपि भवतु सदायं सन्मुहूर्तः ।

( विमृश्य । सविषादम् )

कुतो वा
मधुरविधुरमिश्राः सृष्टयो हा विधातुः ॥ २८ ॥

१. अपि लोचने बद्धषट्पदे ननु सुखोपश्रुतिरियम् ।

आर्या वृत्तम् ॥ २७ ॥ **सीता.** लोचने नयने बद्धः सम्बद्धः षट्पदो यस्मिंस्तादृशे सत्यपि इयं सुखोपश्रुतिः शुभसूचक वाक्यम् । ( नक्तं निर्गत्य यत्किञ्चिच्छुभाशुभकरं वचः । श्रूयते तद्विदुर्धीरा दैवप्रश्नमुपश्रुतिमिति हारावली ) । मम लोचने भ्रमरपीडिते सत्यपि न क्षतिः । परन्तु रामप्राप्तिमभिलषन्त्या मम सखीवाक्यं शुभोदर्कबोधकमिति भावः । अथवा बद्धषट्पदलोचनविषये उक्तमपि सुखकारिकोपश्रुतिरित्यर्थः । किञ्च रामावलोकनासक्ततया षट्पदानुसरणमजानन्त्याः सखीवचनबोधिताया अस्या उक्तिरियम् । अपिः प्रश्नार्थकः । तथा च लोचने बद्धषट्पदे किमिति आत्मगतः प्रश्नः, शेषं पूर्ववत् । **रामः । अमृतेति.** अमृतमया अमृतप्रचुरास्ते च ते पयोधेः क्षीरसागरस्य क्षीरकल्लोला दुग्धोर्मयस्त इव लोलाश्चञ्चलाश्चेति विशेषणोभयपदः कर्मधारयः । तैर्नेत्रपातैः कटाक्षप्रेक्षणैस्तरलायताक्षी सीता, यत्र यस्मिन्मुहूर्ते मा स्नपयति, अयं सन्मुहूर्तः सदा सर्वदापि भवतु, भवेत्किम् प्रार्थनाया लोट् । विमृश्य विचार्य सविषादं सखेदम् । वा अथवा, कुतः सदा अयं सन्मुहूर्तः कुतो भवेत् इति भावः । तदेव प्रतिपादयति । विधातुर्ब्रह्मणः सृष्टयः निर्मितयो मधुरविधुराभ्यां सुखदुःखाभ्यां मिश्राः संपृक्ताः । हा इति खेदे । अनेन चेटीप्रवेशः सीताया गृहगमनञ्च सूचितम् । आक्षेपालङ्कारः। आक्षेपः स्वयमुक्त-

१. अयीति पाठः । २. बद्धवि अह्वाणं इति पाठः । ३. अपि भवतीति पाठः।

(प्रविश्य । )

चेटी—[1]भट्टदारिए, भट्टिणीहिं आण्णत्ह्मि । जं किल वत्सा जानइ झंडिइ घरमाणीअ विचित्ताहरणेहिं मण्डीअदु । जेण तीए साणन्दं वअणारविदं पुलोवेह्म ।

सीता—[2]हण्डे, कहं सिणेहमुद्धाओ मह अम्बाओ ।

चेटिका—[3]भट्टदारिए, सिणेहमुद्धा वि मुद्धाओ तुह अम्बाओ ।

सीता—[4]कहं उण मुद्धाओ मह अम्बाओ ।

चेटिका—[5]जा तुमं णिसग्गलावण्णचन्दलेहां णेवच्छलच्छीलञ्छणेणालंकिदुमिच्छन्ति । तहा अ ।

---

१. भर्तृदारिके, भट्टिनीभिराज्ञप्ताऽस्मि । यत्किल वत्सा जानकी झटिति गृहमानीय विचित्राभरणैर्मण्ड्यताम् । येन तस्याः सानन्दं वदनारविन्दं विलोकयामः ।

२. हण्डे, कथं स्नेहमुग्धा ममाम्बाः ।

३ भर्तृदारिके, स्नेहमुग्धा अपि मुग्धास्तवाम्बा. ।

४. कथं पुनर्मुग्धा ममाम्बाः ।

५. यास्त्वां निसर्गलावण्यचन्द्रलेखां नेपथ्यलक्ष्मीलाञ्छनेनालंकर्तुमिच्छन्ति । तथा च ।

---

स्य प्रतिषेधो विचारणादिति लक्षणात् । मालिनी वृत्तम् ॥२८॥ **सीता.** स्नेहेन मुग्धा मूढाः । **चेटिका.** आदौ स्नेहमुग्धाअपि मुग्धास्तवाम्बा इति चेटिकयोक्ते कथं मुग्धा इति सीतया पृष्टे मुग्धत्वं समर्थयति । **यास्त्वामिति** । या मातरः निसर्गतः स्वभावतः लावण्यं सौन्दर्यं "मुक्ताफलेषु छायायास्तलरत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमुदाहृतम् इत्युक्तलक्षणम्" । तेन चन्द्रलेखां इन्दुकलां त्वा, नेपथ्यस्य वेषाद्यलङ्कारस्य लक्ष्मीः संपत्तिः शोभा वा सैव लाञ्छनं कलङ्कस्तेनालंकर्तुं भूषयितुमिच्छन्ति । तथा च । कलङ्केनालङ्करणमेवाम्बानां मुग्धत्व-

---

१. किरेति पा० । २. झत्तीति पा० । ३. पुलोअह्मेति पा० । ४. कह णमुद्धाओ जातुमनिति पा० ।

अइ तुह मुहलेहा चन्दबिम्बे सणेहा
दसणकिरणलच्छी अच्छजोह्लासरिच्छी।
कुवलयदलदोणीकन्दराए वहन्ती
तरलबहलमिठ्ठी दुद्धधारे व्व दिठ्ठी ॥ २९ ॥

तां[2] आअच्छ। गच्छह्म निअंघरं जेव्व।

( इति निष्क्रान्ताः स्त्रियः )

**रामः**—( सविषादम् ) कथं नयनपथमतिक्रान्तैव कान्ता।

( पुनः समत्याशम्। )

अप्याविरस्तु भूयोऽपि मम लोचनयोरियम्।
दिवसेऽन्तर्हिता नक्तं चन्द्रिकेव चकोरयोः ॥ ३० ॥

---

१. अयि तव मुखलेखा चन्द्रबिम्बे सस्नेहा
दशनकिरणलक्ष्मीरच्छज्योत्स्नासदृक्षा।
कुवलयदलद्रोणीकन्दरायां वहन्ती
तरलबहलमिष्टा दुग्धधारेव दृष्टिः ॥

२. तदागच्छ। गच्छामो निजगृहमेव।

---

प्रयोजकमिति भाव.। सीताया निसर्गलावण्यमेव प्रतिपादयति—। **अइ तुहेति.** अयि सीते तव मुखलेखा चन्द्रबिम्बे इन्दुमण्डले सस्नेहा प्रीतियुक्ता तत्सदृशीति यावत्, दशनकिरणलक्ष्मीः दन्तमयूखशोभा अच्छज्योत्स्नासदृक्षा निर्मलचान्द्रिकातुल्या, दृष्टिः कुवलयदलानां कमलपत्राणां द्रोणी नौ तस्या· कन्दरायां गुहायां अन्तरिति भावः, वहन्ती प्रवहन्ती तरला चञ्चला च सा बहलमिष्टाऽतिमधुरा च ( मिष्ट· स्वादुश्च मधुर इति शारदीनाममालायाम् ) एतादृशी दुग्धधारेव क्षीरसम्पात इव वर्तत इति शेषः। उपमावृत्त्यनुप्रासालङ्कारौ। मालिनी वृत्तम् ॥ २९ ॥ **राम। अप्याविरिति.** दिवसेऽहन्यन्तर्हिता तिरोहिता चन्द्रिका कौमुदी नक्तं रात्रौ चकोरयोरिव मम लोचनयोरियमपि जानक्यपि भूयोपि पुनरपि आविरस्तु प्रादुर्भवेत्किम्। ( आशंसायां लोट् ) उपमालंकारः। अत्राशंसा नाम नाट्यालङ्कारः। आशंसनं स्यादाशंसेति तल्ल-

---

१. णिअ भवणमेवेति पा०।

**लक्ष्मणः**—आर्य, इयमाविरस्ति ।

**रामः**—( सहर्षम् । ) कथं पुनः प्रामा प्रेयसी । ( विलोक्य । ) न तावन्नूनं किमप्यन्यदभिसंधाय तदिदमुक्तं[1] वत्सेन । ( उच्चैः । ) वत्स, केयमाविरस्ति ।

**लक्ष्मणः**—

मुग्धस्य केलिविजितस्मरचापयष्टे-
रातन्वती रुचिमतीव सुधाकरस्य ।
रागोद्धुरा स्फुटमुदञ्चिततारकश्रीः
संध्याविरस्ति ननु कापि पतिंवरेव ॥ ३१ ॥

**रामः**—वत्स, एवमेतत् । तथा हि ।

कृत्वा प्रबुद्धकमलामखिलां त्रिलोकी-
मम्भोनिधेर्विशति गर्भमसाविदानीम् ।
अन्तःप्रसुप्तहरिनाभिसरोजबोध-
कौतूहलीव भगवानरविन्दबन्धुः ॥ ३२ ॥

---

क्षणात् । श्लोकश्छन्दः ॥ ३० ॥ **लक्ष्मणः** इयं संध्येति लक्ष्मणाभिप्रायः । इदं पताकास्थानं, तल्लक्षणं **साहित्यदर्पणे** । यत्रार्थे चिन्तितेऽन्यस्मिंस्तल्लिङ्गोऽन्यः प्रयुज्यते । आगन्तुकेन भावेन पताकास्थानकन्तु तदिति । **रामः** । **सहर्षमिति.** इयमाविरस्तीति वाक्येन सीताविर्भावज्ञानाद्धर्षः । अभिसन्धाय अभिप्रेत्य । **लक्ष्मणः** । **मुग्धस्येति** । केलिना क्रीडया विजिता स्मरचापयष्टिः मदनधनुर्येन, अनेन कलोदयः सूचितः । तादृशस्य सुधाकरस्य चन्द्रस्य अतीवात्यन्तं रुचिं शोभामातन्वती विस्तारयन्ती, रागेण रक्तिम्ना उद्धुरा उत्कटा स्फुटं व्यक्तमुदञ्चिता व्यक्तीकृता तारकश्रीर्नक्षत्रशोभा यया एतादृशी, पतिंवरेव स्वयंवरेव काऽपि सन्ध्याविरस्ति इति सम्बध्यते । पतिंवरापक्षे तु, मुग्धस्य सुन्दरस्य, केलये विजितस्मरस्य शङ्करस्य चापयष्टिः धनुर्यस्य, इतरेषां दुष्करमपि हरचापारोपणं यस्य क्रीडातुल्यं भवतीति भावः । तादृशस्य वसुधा करे यस्य तस्य भूपतेरित्यर्थः, अग्रे इत्यध्याहारः, रुचिमती कान्तिबुद्धी आतन्वती विस्तारयन्ती, रागोद्धुरा प्रीत्यतिशयवती, स्फुटा मुद् यस्याः, अञ्चिता भूषिता तारकश्रीः कनीनिकासम्पद्यस्यास्तादृशी ॥ ३१ ॥ **रामः** । **कृत्वेति.** असौ भगवानरविन्दानां कमलानां बन्धुर्मित्रं सूर्यः, अखिलां

---

१, उक्तमिदमिति पा० ।

**लक्ष्मणः**—आर्य, दृश्यतामयमीषन्मुकुलितराग इव गगनाभोगः ।

**रामः**—एवमेतत् । इदानीं हि

प्राचीमालम्बमाने घनतिमिरचये बान्धवे बन्धकीनां
संप्राप्ते च प्रतीचीं शशिकरनिकरे वैरिणि स्वैरिणीनाम् ।
अर्धश्यामोपलार्धस्फटिकमिव दिशामन्तरालं विधत्ते
कालिन्दीजह्नुकन्यामिलदमलजलस्यन्दसंदोहमैत्रीम् ॥ ३३ ॥

( पुनः सहर्षमङ्गुल्या दर्शयन् । )

एतत्कोककुटुम्बिनीजनमनःशल्यं चकोराङ्गना-
चञ्चूकोटिकपाटयोर्घटितयोरुद्घाटिनी कुञ्चिका ।

---

समग्रा त्रिलोकीं त्रिभुवनं प्रबुद्धानि विकचानि कमलानि वारिजानि यस्या तादृशीं कृत्वा, इदानीमधुना अन्तः समुद्रमध्ये प्रसुप्तस्य हरेर्विष्णोर्यन्नाभिसरोजं नाभिकमलं तस्य प्रबोधे विकासे कौतूहलीवाम्भोनिधेः समुद्रस्य गर्भं मध्यं विशति प्रविशति । हेतूत्प्रेक्षालङ्कारः । वसन्ततिलका वृत्तम् ॥ ३२ ॥ **लक्ष्मणः** ईषत्किञ्चिन्मुकुलितः सङ्कुचित रागो रक्तिमा यस्य । **रामः** । **प्राचीमिति.** बन्धकीनां कुलटानां बान्धवे मित्रे, घनाना सान्द्राणा तिमिराणा तमसां चये समूहे, प्राचीं पूर्वदिशमालम्बमाने आश्रियमाणे, च स्वैरिणीनां असतीनां वैरिणि शत्रौ, शशिकरनिकरे इन्दुकिरणसमूहे, प्रतीचीं पश्चिमाशां सम्प्राप्ते, अर्धं श्यामोपलो यस्मिन् तदर्धश्यामोपलं अर्धं स्फटिको यस्मिंस्तदर्धस्फटिकं पश्चाद्विशेषणोभयपदः कर्मधारयः । तादृशमिव दिशामन्तरालं अन्तरं, कालिन्दी यमुना जह्नुकन्या गङ्गा उक्तञ्च । वा० रा० बा० कां० ४३ सर्गे "ततो हि यजमानस्य जह्नोरद्भुतकर्मणः । गङ्गा संप्लावयामास यज्ञवाटं महात्मनः । तस्या वलेपनं ज्ञात्वा क्रुद्धो जह्नुश्च राघव । अपिबत्तु जलं सर्वं गङ्गायाः परमाद्भुतम् । ततो देवाः सगन्धर्वा ऋषयश्च सुविस्मिताः । पूजयन्ति महात्मानं जह्नुं पुरुषसत्तमम् । गङ्गाञ्चापि नयन्ति स्म दुहितृत्वे महात्मनः । ततस्तुष्टो महातेजाः श्रोत्राभ्यामसृजत्प्रभुः । तस्माज्जह्नुसुता गङ्गा प्रोच्यते जान्हवीति चेति । तयोर्मिलितानि मिश्रितानि यान्यमलजलानि तेषां स्यन्दसन्दोहानां प्रवाहवृन्दानां मैत्रीं सख्यं, सादृश्यमिति यावत् । विधत्ते । उपमाछेकानुप्रासावलङ्कारौ । स्रग्धरा वृत्तम् ॥ ३३ ॥ **एतदिति.** कोककुटुम्बिन्यश्चक्रवाकस्त्रियस्ता एव जनास्तेषां मनःशल्यं मनोभेदकमिति

दग्धस्यापि नवाङ्कुरः स्मरतरोरार्द्रागसां प्रेयसी-
मानोद्दामगजाङ्कुशो विजयते मुग्धं सुधांशोर्वपुः ॥ ३४ ॥

**लक्ष्मणः**—

कल्लोलक्षिप्तपङ्कत्रिपुरहरशिरःस्वःस्रवन्तीमृणालं
कर्पूरक्षोदजालं कुसुमशरवधूसीधुभृङ्गारनालम् ।
एतद्दुग्धाब्धिबन्धोर्गगनकमलिनीपत्रपानीयबिन्दो-
रन्तस्तोषं न केषां किसलयति जगन्मण्डनं खण्डमिन्दोः ॥ ३५ ॥

**रामः**—वत्स, अलमतिप्रसङ्गेन । तदेहि । सायतनत्रिदशार्चनोचित-कुसुमोपायनेन भगवन्तं गाधिनन्दनमुपास्महे ।

( इति निष्क्रान्ताः सर्वे । )

**इति द्वितीयोऽङ्कः ।**

---

भावः । चकोराङ्गनानां चकोरस्त्रीणां घटितयोः सम्मीलितयोश्चञ्चूकोटी त्रोटय-ग्रे एव कपाटे अरेरे तयोरुद्घाटिनी विभाजिका कुञ्चिका कूर्चिका । चन्द्रोदये कौमुदीप्राशनार्थं चकोराणां विवृतमुखत्वादिति भावः, दग्धस्यापि स्मरतरोर्नवाङ्कुरः नूतनोद्भेदः, आर्द्रं नूतन आगोऽपराधो येषां तेषां प्रेयसीनां कामिनीनां मानः ईर्ष्याकृतः कोपः(स्त्रीणामीर्ष्याकृतः कोपः मानोऽन्यासङ्गिनि प्रिये इति लक्षणात्) स एवोद्दामगजः मत्तवारणः तस्याङ्कुशः सृणिः, मुग्धं सुधांशोर्वपुः विजयते सर्वोत्कर्षेण वर्तते । मालारूपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३४ ॥ **लक्ष्मणः ।** **कल्लोलेति.** कल्लोलैर्महातरङ्गैः क्षिप्तो दूरीकृतः पङ्कः कर्दमो यस्य तच्च तत् त्रिपुरहरस्य शंकरस्य शिरसि मस्तके या स्वःस्रवन्ती स्वर्धुनी तस्या मृणालं, कर्पूरक्षोदस्य कर्पूरचूर्णस्य जालं राशिः, कुसुमशरवध्वाः रतेर्यः सीधुभृङ्गारः मधुपात्रविशेषः तस्य नालं नलिका, जगतां मण्डनं भूषणं, दुग्धाब्धेः क्षीरसमुद्रस्य बन्धोर्मित्रस्य, गगनं व्योमैव कमलिनीपत्रं तस्मिन्पानीयबिन्दोर्जलकणस्येन्दोरेतत्खण्डं शकलं, केषाम् अन्तर्मनसि तोषं हर्षं न किसलयति । तनुते । अपि तु सर्वेषां तनुते इत्यर्थः मालारूपकच्छेकवृत्त्यनुप्रासालङ्काराः । स्रग्धरा वृत्तम् ॥ ३५ ॥ **रामः** सायन्तनस्य सायंकालभवस्य त्रिदशार्चनस्य देवपूजनस्योचितानां योग्याना कुसुमानां पुष्पाणामुपायनेनोपहारेण गाधिनन्दनम् विश्वामित्रम् ।

**इति द्वितीयोऽङ्कः ।**

---

१. पङ्कमिति पा० । २. बन्धमिति पा० । ३. मालमिति पा० ।

# तृतीयोऽङ्कः ।

( ततः प्रविशति वामनकः । )

**वामनकः**— ( आत्मानं विलोक्य । सविस्मयम् ) अहो[1] अङ्गाणं मे तुङ्गत्तणम् । अवि णाम ईरिसेहिं अङ्गेहिं एत्थ संचरन्तेण मए दुआरसिहरं भञ्जीअदि । ता खुज्जो भविअ संचरिस्सम् । ( तथा करोति । )

( प्रविश्य । )

**कुब्जकः**—वअस्स[2] वामणअ, दाणिं सअलगुणसंजुत्तो सि तुमं ।

**वामनकः**—कहं[3] विअ ।

**कुब्जकः**—पढमं[4] जेव्व वामणो दाणिं उण खुज्जत्तणं पत्तो ।

**वामनकः**—( सक्रोधम् । ) अए[5] मुरुख, कहं अत्तणो खुज्जत्तणं परम्मि आरोवेसि । णं तुमं जेव्व खुज्जओ । मए उण दुआरसिहर-भङ्गसङ्किदेण अप्पम्मि खुज्जत्तणमारोविदम् ।

**कुब्जकः**— ( विहस्य । ) कहं[6] विअत्थिमेत्तएण तुह अङ्गेण दुआ-रसिहरं भञ्जिस्सदि । ( पुनः सक्रोधम् । ) अरे अलीअवाआल, केण तुह कहिदं अहं खुज्जओ त्ति ।

---

१ अहो अङ्गानां मे तुङ्गत्वम् । अपि नामेदृशैरङ्गैरत्र संचरता मया द्वारशिखरं भज्यते । तत्कुब्जो भूत्वा संचरिष्यामि ।

२. वयस्य वामनक, इदानीं सकलगुणसंयुक्तोऽसि त्वम् ।

३ कथमिव ।

४. प्रथममेव वामन इदानीं पुनः कुब्जत्वं प्राप्तः ।

५. अये मूर्ख, कथमात्मनः कुब्जत्वं परस्मिन्नारोपयसि । ननु त्वमेव कुब्जकः । मया पुनर्द्वारशिखरभङ्गशङ्कितेनात्मनि कुब्जत्वमारोपितम् ।

६. कथं वितस्तिमात्रेण तवाङ्गेन द्वारशिखरं भङ्क्ष्यते । अरे अलीकवाचाल, केन तव कथितमहं कुब्जक इति ।

---

## तृतीयोऽङ्कः ।

कविरिदानीमङ्कान्तरमारभमाणस्तदर्थसूचनार्थं प्रवेशकं प्रस्तौति । **ततः प्रविशतीति. वामनकः** तुङ्गत्वमुच्चत्वम् । **कुब्जकः** प्रथममेव प्रागेव वामनो ह्रस्वः, कुब्जत्वं न्युब्जत्वम् । **वामनकः** द्वारशिखरस्य भङ्गे नाशे शङ्कितेन सञ्जातशङ्केन आरोपितं न तु स्वाभाविकमिति भावः । **कुब्जकः** वितस्तिरेव वितस्तिमात्रम् । ( मयूरव्यंसकादित्वात्समासः, न तु मात्रच्प्रत्ययः

**वामनकः**— [1]णं इमिणा जेव्व दरिअवुसहककुदसरिसेण पुट्ठट्ठिदेण मंसत्थवएण उव्वाहिएण ।

**कुब्जकः**—( विहस्य । ) [2]अए मदिसुण्ण, कहं ईमो मंसत्थवओ त्ति उण सोहग्गलच्छीए उवहाणगेण्डुओ ।

**वामनकः**—( साशङ्कम् । ) [3]अरे, सणिअं जप्प । अह्मारिसाणं अन्तेउरचारिणं सोहग्गवुत्तन्तमाअण्णिअ भट्टा कुविस्सदि ।

**कुब्जकः**—[4]अलं भीरुत्तणेण । दाणिं धाणघरम्मि वट्टदि भट्टा ।

**वामनकः**—[5]णं हु ण हु । अज्ज किर कस्सावि पाहुणस्स महेसिणो आगमणं पडिवालअन्तो बाहिरमण्डवे वट्टदि ।

**कुब्जकः**—[6]हा हद ह्म ।

**वामनकः**— [7]किंति ।

**कुब्जकः**— [8]णं पढमं जेव्व एक्केण महेसिणा जण्णवक्केण उवदिट्ठो

१ नन्वनेनैव दृप्तवृषभककुदसदृशेन पृष्ठस्थितेन मांसस्तबकेनोद्वाहितेन ।

२. अये मतिशून्य, कथमयं मांसस्तबकोऽपि पुनः सौभाग्यलक्ष्म्या उपधानगेन्दुकः ।

३. अरे, शनैर्जल्प । अस्मादृशानामन्तःपुरचारिणां सौभाग्यवृत्तान्तमाकर्ण्य भर्ता कोपिष्यति ।

४ अलं भीरुत्वेन । इदानीं ध्यानगृहे वर्तते भर्ता ।

५ न खलु न खलु । अद्य किल कस्यापि प्राघूर्णिकस्य महर्षेरागमनं परिपालयन्बाह्यमण्डपे वर्तते ।

६. हा हताः स्मः ।

७. किमिति ।

८. ननु प्रथममेवैकेन महर्षिणा याज्ञवल्क्येनोपदिष्टोऽयं राजा अक्षिमीलनैः

तस्य प्रमाणे ल इति लुकि श्रवणाप्रसङ्गात् ) तेन द्वादशाङ्गुलिपरिमितेनैव, अलीकश्चासौ वाचालश्चेति विशेषणोभयपदः कर्मधारयः, अनृतबहुभाषीत्यर्थः । अथ वा अलीकेति वाचालेति च पदद्वयम्, अलीकेत्यस्याप्रियेत्यर्थः । ( अलीकं त्वप्रियेऽनृत इत्यमरः ) **वामनकः** दृप्तस्य मत्तस्य वृषभस्य बलीवर्दस्य ककुदसदृशेनांसकूटतुल्येन ( अंसकूटस्तु ककुदमिति हलायुधः ) **कुब्जकः** उपधानगेन्दुकः शय्योपकरणम् । **वामनकः** । प्राघूर्णिकस्य गृहागतस्य । **कुब्जकः** । अक्षिमीलनैः योगसमाधिनेत्यर्थः, क्षपणकः बौद्धसंन्यासी, कर्पटपेटकैर्जीर्णवस्त्रपेटाभिरिव । तस्य दिगम्बरत्वेन वस्त्रप्रयोजना-

१. कीयद्भ्य इति पा० । २. ईरिसो इति पा० ।

इमो राआ अच्छिमीलणेहिं रत्तिओ गमेदि । दाणि उण इमिणा उवदिट्ठो अन्तेउरं जेव्व परिहरिस्सदि । तदो किं इमो अह्मेहिं खवणो व्व कप्पडपेडएहिं करिस्सदि ।

**वामनकः**—सच्चं[1] एदं । जइ इमो महेसी अह्माणं रण्णो उवदेसत्थं आअदो भवे । इमो उण हरधनुद्दंसणत्थम् ।

**कुब्जकः**— किं[2] इमस्स महेसिणो होमग्गिधूमसामलिअलोअणस्स हरचावदंसणेण । ता तक्केमि खत्तिअबह्मणो इमो त्ति ।

**वामनकः**— ( विहस्य । ) कहं[3] तणु व्व मदीवि तुह वङ्कुणी जंएव्वं तक्केसि । सच्चं खत्तिअबह्मणो इमो त्ति ।

**कुब्जकः**— तां[4] को वि अणत्थो संभाविआदि जं किर चिरतव-

---

रात्रीर्गमयति । इदानीं पुनरनेनोपदिष्टोन्तःपुरमेव परिहरिष्यति । ततः किमयमस्माभिः क्षपणक इव कर्पटपेटकैः करिष्यति ।

१. सत्यमेतत् । यद्ययं महर्षिरस्माकं राज्ञ उपदेशार्थमागतो भवेत् । अयं पुनर्हरधनुर्दर्शनार्थम् ।

२. किमस्य महर्षेर्होमाग्निधूमश्यामलितलोचनस्य हरचापदर्शनेन । तत्तर्कयामि क्षत्रियब्राह्मणोऽयमिति ।

३. कथ तनुरिव मतिरपि ते वक्रा यदेव तर्कयसि । सत्यं क्षत्रियब्राह्मणोऽयमिति ।

४. तत्कोप्यनर्थः संभाव्यते यत्किल चिरतपस्याकर्षितोऽथ तीव्रं प्रेक्ष-

---

भावात् । उक्तश्चान्यत्र । नग्नक्षपणके देशे रजकः किङ्करिष्यतीति । **वामनकः** । यद्ययं महर्षिर्विश्वामित्र उपदेशार्थमागतो भवेत्तदा सत्यमेतदिति सम्बन्धः । पुनरित्यवधारणे । **कुब्जकः** तत्तस्मात् हरचापारोपणोत्कण्ठयेति भावः । तर्कयाम्यूहयामि क्षत्रियब्राह्मणोऽयमिति । तथा च चापारोपणं कृत्वा सीतां परिणेष्यतीत्यभिप्रायः । **वामनकः** यद्यस्माद्धेतोरेवं पूर्वोक्ताभिप्रायेण क्षत्रियब्राह्मणोऽयमिति तर्कयसि, तस्मात्कथं ते तनुरिव मतिरपि बुद्धिरपि वक्रा । क्षत्रियब्राह्मणोऽयमिति सत्यं, सीतां परिणेष्यतीत्यभिप्रायस्तु मृषेति भावः । **कुब्जकः**। तत् यद्ययं क्षत्रियब्राह्मण इति सत्यं ममाभिप्रायो मृषेति तवाशयः, तर्हि कोप्यनर्थः सीतापरिणयाद्भिन्नोन्य इत्यर्थः, अनर्थस्वरूपं प्रपञ्चयति । **यत्किलेति** । चिरतपस्यया चिरकालतपश्चरणेन कर्षितः क्लेशि-

स्साकरिसिदो इमो तिव्वं पेक्खमाणो खत्तिअबह्मणो रुजुमदिणो अह्माणं राएसिणो रज्जं गहीदुं आअदो त्ति ।

**वामनकः**—संन्तं पावम् । ईरिसं मा जप्प । अअं हि चिरतवस्सापरितोसिदस्स बह्मणो वाआए खत्तिअत्तणं परिहरिअ बह्मणत्तणं पत्तो ।

**कुब्जकः**—कंहं तणु व्व मदीवि तुह वामणी जं एरिसअलीअलोअवुत्तन्ते वि पत्तिआअदि । जइ कस्सवि वाआए खत्तिओ बह्मणो होइ ता मह वाआए तुमं वि बह्मणो होसि ।

**वामनकः**—अंरे बालिस, कहं तुह गोमुहस्स भअवदो चउम्मुहस्सवि णत्थि अन्तरम् ।

**कुब्जकः**— जइँ इमो सुद्धबह्मणो ता किं इमस्स चावचिन्ताए ।

---

माणः क्षत्रियब्राह्मण ऋजुमतेरस्माकं राजर्षे राज्यं ग्रहीतुमागत इति ।

१. शान्तं पापम् । ईदृशं मा जल्प । अयं हि चिरतपस्यापरितोषितस्य ब्रह्मणो वाचा क्षत्रियत्वं परिहृत्य ब्राह्मणत्वं प्राप्तः ।

२. कथं तनुरिव मतिरपि तव वामनी यदीदृशालीकलोकवृत्तान्तेपि प्रत्याय्यते । यदि कस्यापि वाचा क्षत्रियो ब्राह्मणो भवति तर्हि मम वाचा त्वमपि ब्राह्मणो भवसि ।

३. अरे बालिश, कथं तव गोमुखस्य भगवतश्चतुर्मुखस्यापि नास्त्यन्तरम् ।

४. यद्ययं शुद्धब्राह्मणस्तत्किमस्य चापचिन्तया ।

---

तोऽयं विश्वामित्रः, ऋजुमतेः सरलाशयस्य । **वामनकः** शान्तं पापमनिर्देश्य इति **भरतः** । ईदृशममङ्गलं मा जल्पमा वद । चिरतपस्यया परितोषितस्य सन्तुष्टस्य ब्रह्मणश्चतुर्मुखस्य वाचा वचनेन क्षत्रियत्वं परिहृत्य त्यक्त्वा ब्राह्मणत्वं प्राप्तः । इयं कथा **वा. रा.** बा. कां. ६५ सर्गे द्रष्टव्या । **कुब्जकः** अलीकलोकवृत्तान्तेऽपि अनृतजनवार्तायामपि. प्रत्याय्यते विश्वास्यते । **वामनकः** बालिश मूर्ख. गोमुखमिव मुखं यस्य तस्य तव भगवतश्चतुर्मुखस्यापि, अपिः समुच्चये । **कुब्जकः** चापचिन्तया धनुर्विचारेण ।

---

१. मूहंस.

**वामनकः**—[1]अत्थि कारणं । तस्स पासम्मि तदो जेव्व गहिअचावविज्जा दोणि खत्तिअकुमारा वट्टन्ति । ताणं दंसइस्सदि चावं ति ।

**कुब्जकः**—[2]ता सुद्धासओ इमो ।

**वामनकः**—[3]अह इं ।

**कुब्जकः**—[4]ता कहेहि दाव इमस्सिं अलीअदूसणारावेण णं मह पावं उप्पण्णं ण वेत्ति ।

**वामनकः**—[5]पाव ति किं भणीअदि । णं महापावं उप्पण्णम् ।

**कुब्जकः**—[6]अरे मुरुख, ण आणासि धम्मस्स तत्तम् । संबन्धिअणे परिहासवणाइं ण हु पावकारणाइं ।

**वामनकः**—[7]कहं उण इमो तुह संबन्धिअणो ।

**कुब्जकः**—[8]अरे, ण अणासि । अस्स वि दोणि कुमारा, अह्माणं वि दोणि कुमारीओ । ता तक्केमि संबन्धिअणो हविस्सदि त्ति ।

**वामनकः**—( विहस्य । ) [9]कहं अह्माणं एरिसं पुण्णम् ।

---

१. अस्ति कारणम् । तस्य पार्श्वे तत एव गृहीतचापविद्यौ द्वौ क्षत्रियकुमारौ वर्तेते । ताभ्यां दर्शयिष्यति चापमिति ।

२ तच्छुद्धाशयोऽयम् ।

३. अथ किम् ।

४ तत्कथय तावदस्मिन्नलीकदूषणारोपेण ननु मम पापमुत्पन्न न वेति ।

५. पापमिति किं भण्यते । ननु महापापमुत्पन्नम् ।

६. अरे मूर्ख, न जानासि धर्मस्य तत्त्वम् । सबन्धिजने परिहासवचनानि न खलु पापकारणानि ।

७. कथं पुनरय तव सबन्धिजनः ।

८. अरे, न जानासि । अस्यापि द्वौ कुमारौ, अस्माकमपि द्वे कुमार्यौ । तत्तर्कयामि संबन्धिजनो भविष्यतीति ।

९ कथमस्माकमीदृशं पुण्यम् ।

---

**वामनकः** पार्श्वे समीपे, पार्श्वमन्तिके इति हैमः। **कुब्जकः** अस्मिन् महर्षौ, अलीकमनृतं यद्दूषणं राज्यहरणादिकं तस्यारोपणेन । **वामनकः** महच्च तत् पातकं च । **कुब्जकः** धर्मस्य तत्त्वं स्वरूपम् । परिहासवचनानि परिहासेषु प्रयुक्तान्यनृतवचनानि, न खलु पापकारणानि पापाय न भवन्तीत्यर्थः । उक्तञ्च **श्रीमद्भागवते,** स्त्रीषु नर्मविवाहे च वृत्त्यर्थे प्रा-

( नेपथ्ये । )

ताटङ्किना झटिति ताडितताटकेन
रामेण पद्मरमणीयविलोचनेन ।
क्रीडाशिखण्डकधरेण सलक्ष्मणेन
साकं मुनिः कुशिकसूनुरितोऽयमेति ॥ १ ॥

**वामनकः**—( सहर्षविस्मयम् । ) अहो, जा किर सअललोअभीसणा-रक्खसी ताडएत्ति सुणीअदि सा इमिणा जइ ताडिदा ता इमस्सिं हरचावारोवणं वि सभावीअदि । ता एहि । इमं कण्णसुहारहं भट्टिणीणं समप्पह्म ।

( इति निष्क्रान्तौ । )

**इति प्रवेशकः ।**

---

१. अहो, या खलु सकललोकभीषणा राक्षसी ताटकेति श्रूयते साऽनेन यदि ताडिता तदस्मिन्हरचापारोपणमपि संभाव्यते । तदेहि । इमं कर्णसुधारस भट्टिनीभ्यः समर्पयामः ।

---

णसंकटे । गोब्राह्मणार्थे हिंसायां नानृतं स्याज्जुगुप्सितमिति । **ताटङ्किनेति.** अयं दृश्यमानः मुनिः कुंशिकसूनुर्विश्वामित्रः नप्त्रादीनामपि पुत्रत्वव्यवहारेणायं प्रयोगः । विश्वामित्रस्य गाधिसुतत्वात् । उक्तञ्च **वा. रा** बा. कां. ३४ सर्गे । कस्यचित्त्वथ कालस्य कुशनाभस्य धीमतः । जज्ञे परमधर्मिष्ठो गाधिरित्येव नामतः । स पिता मम काकुत्स्थ गाधिः परम धार्मिक इति । ताटङ्कः कर्णभूषणमस्यास्ति तेन, झटिति द्राक्, ताडिता नाशिता ताटका तन्नाम्नी राक्षसी येन, पद्मे इव रमणीये विलोचने यस्य तेन, क्रीडा च शिखण्डकश्च तयोर्धरेण, अथ वा क्रीडार्थं शिखण्डकधरेण, लक्ष्मणेन सहितेन, रामेण सह, इतोऽत्रैत्यागच्छति । अथ वा झटितीत्यस्यैतीत्यत्रान्वयः। अत्र ताडितताटकेनेत्यनेन रामस्यातिशौर्यं तेन धनुरारोपणसामर्थ्यं, क्रीडा-शिखण्डकधरेणेत्यनेन कैशोरं तेन सीतायाः समानवरावाप्तिः, मुनिरित्यनेन निग्रहानुग्रहसमर्थविश्वामित्रानुग्रहस्तेन च निर्विघ्नतया रामस्य धनुरारोपणेन सीताप्राप्तिरित्यर्थशक्तिमूलकवस्तुध्वनिः । एतेन विश्वामित्रादीनां प्रवेशः सूचितः । वसन्ततिलका वृत्तम् ॥ १ ॥ **प्रवेशक इति.** तल्लक्षणं **सुधाकरे** । यन्नीचैः केवलैः पात्रैर्भाविभूतार्थसूचनम् । अङ्कयोरुभयोर्मध्ये स विज्ञेयः प्रवेशक इति. । तथा **दर्पणेऽपि** । प्रवेशकोऽनुदात्तोक्त्या नीचपा-

( ततः प्रविशति रामलक्ष्मणानुगतो विश्वामित्रः । )

**विश्वामित्रः**—( अङ्गुल्या दर्शयन् । ) वत्स रामभद्र,

एतत्तर्कय चक्रवाकहृदयाश्वासाय तारागण-
ग्रासाय स्फुरदिन्दुमण्डलपरीहासाय भासांनिधिः ।
दिक्कान्ताकुचकुम्भकुङ्कुमरसन्यासाय पङ्केरुहो-
ल्लासाय स्फुटवैरिकैरववनत्रासाय विद्योतते ॥ २ ॥

**रामः**—(अञ्जलिं बद्ध्वा

लालयन्तमरविन्दवनानि
क्षालयन्तमभितो भुवनानि ।
पालयन्तमथ कोककुलानि
ज्योतिषां पतिमहं महयामि ॥ ३ ॥

**विश्वामित्रः**—(स्वगतम् । ) अपि नाम मयोपनीयमानं वत्सरामभद्रमचिरादेव जनकस्तनूजया संभावयिष्यति ।

**लक्ष्मणः**—आर्य, पश्य ।

---

त्रप्रयोजितः। अङ्कद्वयान्तर्विज्ञेयः शेषं विष्कंभके यथेति। **विश्वामित्रः**।**एतदि-ति** । भासां तेजसां निधिः आधारः सूर्य इति यावत् । चक्रवाकानां हृदयाश्वासाय चेतःसमाधानाय, तारागणानां नक्षत्रसमूहानां ग्रासाय भक्षणाय, स्फुरतो दीप्यमानस्येन्दुमण्डलस्य चन्द्रबिम्बस्य परीहासायोपहासाय, ( उपसर्गस्य घञ्यमनुष्य इति परेर्दीर्घः ) दिश एव कान्ताः सुन्दर्यस्तासां कुचा एव कुम्भास्तेषु कुङ्कुमस्य काश्मीरजस्य न्यासाय स्थापनाय, पङ्केरुहोल्लासाय कमलविकसनाय, स्फुटानां फुल्लानांवैरि कैरववनानां त्रासायोद्वेगाय, विद्योतते एतत्तर्कय । हेतूत्प्रेक्षायमकालंकारौ । शार्दूलविक्रीडितं छन्दः ॥ २ ॥ **रामः**। **लालयन्तमिति.** अरविन्दवनानि कमलवनानि लालयन्तं प्रीणयन्तं,अभितः सर्वतः भुवनानि क्षालयन्तम् अथेति समुच्चये।कोककुलानि चक्रवाकवृन्दानि पालयन्तं, ज्योतिषां तेजसां पतिं स्वामिनं सूर्यमहं महयामि पूजयामि । समुच्चययमकालङ्कारौ । स्वागता वृत्तम् ॥ ३ ॥ **विश्वामित्रः** वत्स रामभद्र । शिष्यस्य वत्सशब्देन व्यवहार्यत्वात् । उक्तञ्च **दर्पणे** । वत्स पुत्रक तातेति नाम्ना गोत्रेण वा सुतः । शिष्योऽनुजश्च वक्तव्य इति । **लक्ष्मणः** । **यावदिति** प्रभातसमयः उषःकालः, लोकानां भ्वादीनां त्रय्याः त्रितयस्य माणिक्यं रत्नविशेषं रविबिम्बं, नीरनिधेः समुद्रात्प्रोद्धृत्य बहिर्निष्कास्य अम्बरं

यावन्नीरनिधेः प्रभातसमयः प्रोद्धृत्य लोकत्रयी-
माणिक्यं रविबिम्बमम्बरवणिग्वीथीपथे न्यस्यति ।
तावत्कर्तुमिवास्य मूल्यमुचितं पद्माकरेण स्वयं
लक्ष्मीर्लब्धविकाशपङ्कजकरन्यस्ता पुरः स्थाप्यते ॥ ४ ॥

**विश्वामित्रः**—(सहर्षमात्मगतम् ।) अये वत्स, लक्ष्मणेनैव दत्त-मुत्तरम् । देवताधिष्ठितानि हि मुग्धवचनानि भवन्ति ।

**रामः**—(मुनिं प्रति ।) भगवन्, कथमियं बहुनरकरितुरङ्गमतरङ्गितापि राजधानी तपोवनभूमिरिव प्रशान्तपावनी विभाव्यते ।

**विश्वामित्रः**—क इह विस्मयः । नन्विह जनकः प्रतिवसति यस्यायं भगवान्याज्ञवल्क्यो गुरुः ।

**रामः**—सोऽयं भगवानस्य गुरुर्यः किल योगीश्वर इति ख्यायते ।

**विश्वामित्रः**—वत्स, स एवायं

पादोपसेवनाद्भानोः प्रबोधमुपलभ्य यः ।
अभूद्योगीश्वरख्यातेः सद्म पद्ममिव श्रियः ॥ ५ ॥

तदेहि । राजभवनमुपसर्पामः । (इति निष्क्रान्तः ।)

---

व्योमैव वणिग्वीथीपथः आपणमार्गः (ऋक्पूरब्धूःपथामिति अप्रत्ययः) तस्मिन्, यावत् यदवधिपर्यन्तं न्यस्यति स्थापयति, तावदेव तदवधिसमय एव पद्माकरेण कासारेण पद्मा लक्ष्मीः करे यस्य तेन धनवता च स्वयं स्वेन अस्य माणिक्यस्य उचितं मूल्यं कर्तुं लब्धः विकासः यैः तादृशानि पङ्कजान्येव करा हस्तास्तेषु न्यस्ता लक्ष्मीः शोभा सम्पत्तिश्च पुरः अग्रे स्थाप्यत इव।रत्नमूल्यकरणं सम्पत्तिमन्तरेण न सम्भवतीति तथा कृतमिति भावः । अनेन विश्वामित्रेण नीतस्य रामस्य जनकेन सीतासमर्पणं सूच्यते । उत्प्रेक्षारूपकालंकारौ । शार्दूलविक्रीडितं वृत्तम्॥४॥ **विश्वामित्रः** मुग्धानाम् अज्ञानां बालानामिति यावत् । वचनानि देवताधिष्ठितानि देवताश्रितानि । एतेन स्वचिन्तितवस्तुनो लक्ष्मणोक्तिरूपश्रुतिरजनीति भावः ।**रामः**। मुनिं प्रति विश्वामित्रं प्रति वदतीति शेषः । बहु यन्नरकरितुरङ्गमं मनुष्यदन्तितुरङ्गं तेन तरङ्गितापि व्याप्तापि राजधानी तपोवनस्याश्रमस्य भूमिरिव प्रशान्ता चासौ पावनी चेति विशेषणोभयपदः कर्मधारयः। **विश्वामित्रः** । यः किल योगीश्वर इति ख्यायते स एवेत्यर्थः । **पादेति** यः याज्ञवल्क्यः भानोः पादानां किरणानां चरणयोश्च उपसेवनात् संपर्कात् शुश्रूषणाच्च प्रबोधं विकासं ज्ञानं च

( नेपथ्ये )

पयोभिः सिच्यन्तां बहलविलसत्कुङ्कुमरसैः
प्रसूनैः कीर्यन्तां परिमलमिलल्लोलमधुपैः ।
चतुष्कैः पूर्यन्तामविरललसन्मौक्तिकगणै-
र्मुदा पौरस्त्रीभिर्नगरपथरथ्याङ्गणभुवः ॥ ६ ॥

**विश्वामित्रः**— नूनमस्मदभ्यागमनसानन्दस्य शतानन्दस्य वाक्यपरिस्पन्दः । ( विलोक्य । ) अहो अस्य रभसातिशयो यदयं कृतमपि नगरपरिष्कारं पुनरादिशति ।

( प्रविश्य । )

**शतानन्दः**—भगवन्, अभिवादये ।

**विश्वामित्रः**— सौम्य, आयुष्मान्भूयाः ।

**शतानन्दः**— भगवन्, अयमसौ जनको राजा भगवन्तं प्रतीक्षते ।

**विश्वामित्रः**—( विलोक्य । ) अये, स एष जनकः

अङ्गैरङ्गीकृता यत्र षड्भिः सप्तभिरष्टभिः ।
त्रयी च राज्यलक्ष्मीश्च योगविद्या च दीव्यति ॥ ७ ॥

---

उपलभ्य प्राप्य श्रियो लक्ष्म्याः पद्ममिव योगीश्वर इति ख्यातेः प्रसिद्धेः सद्म गृहमित्यर्थः । अभूत् । श्लेषच्छेकानुप्रासौ । श्लोकश्छन्दः ॥५॥ **पयोभिरिति.** पुरे भवाः पौर्यः ताश्च ताः स्त्रियश्च ताभिः, नगरपथाः पुरपद्धतयः, रथ्या ग्रामाभ्यन्तरमार्गाः, अङ्गणभुवः चत्वरप्रदेशाः यथाक्रमम् नगरपथाः बहलं यथा तथा विलसन्कुङ्कुमस्य काश्मीरजन्मनो रसो द्रवो येषु तैः पयोभिः सिच्यन्ताम् । रथ्याः परिमलेन मनोहरगन्धेन मिलन्तः प्राप्नुवन्तो लोलाः सतृष्णा मधुपा भृङ्गा येषु तैः प्रसूनैः कुसुमैः प्रकीर्यन्तां आस्तीर्यन्ताम् । अङ्गणभुवश्च अविरलाः सान्द्राः लसन्तः शोभायमानाः मौक्तिकगणा मुक्ताचया येषु तादृशैः चतुष्कैः मङ्गलस्वस्तिकैः पूर्यन्तां यथासंख्यवृत्त्यनुप्रासालङ्कारौ । शिखरिणी वृत्तम् ॥६॥ **विश्वामित्रः** शतानन्दस्य तन्नामधेयगौतमपुत्रस्य वाचः वचनस्य परिस्पन्दः परिपाटी, रभसातिशयो हर्षातिशयः, नगरस्य परिष्कारं मण्डनम् । अनेन शतानन्दप्रवेशः सूचितः । **विश्वामित्रः । अङ्गैरिति:** यत्र जनके षड्भिः सप्तभिरष्टभिर्यथाक्रमेण, शिक्षा-

( ततः प्रविशति जनकः । )

**जनकः**— ( कृताञ्जलिर्भूत्वा )

यः काञ्चनमिवात्मानं निक्षिप्याग्नौ तपोमये ।
वर्णोत्कर्षं गतः सोऽयं विश्वामित्रो मुनीश्वरः ॥ ८ ॥

( उपसृत्य । ) भगवन्, अयं ते समीहितसंपल्लतासमुद्गमारामः प्रणामः ।

**विश्वामित्रः**—राजर्षे, वसुंधरासुनासीर सीरध्वजाप्रतिहतमनोरथो भूयाः ।

( इति यथोचितमुपविशन्ति । )

**जनकः**— भगवन्, अधुना सुनासीरसाधारणत्वमधःकरणं मे ।

**विश्वामित्रः**—कथमिव ।

**जनकः**— संप्रति तदीयामपि पदवीमतीत्य वर्ते ।

---

कल्पव्याकरणनिरुक्तच्छन्दोज्यौतिषैरिति षड्भिरङ्गैः । तदुक्तं, शिक्षा कल्पो व्याकरणं निरुक्तं ज्यौतिषं तथा। छन्दश्चेति षडङ्गानि वेदस्याहुर्मनीषिण इति। त्रयी ऋक्सामयजूंषीत्यर्थः । ( वेदास्त्रयस्त्रयीत्यमरः ) स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलैः सप्तभिरंगैः राज्यलक्ष्मीश्च, ( स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानि च । राज्याङ्गानीत्यमरः ) यमनियमासनप्राणायामप्रत्याहारध्यानधारणासमाधिभिरष्टभिरङ्गैर्योगविद्या योगशास्त्रं चेत्यर्थः । उभयत्र चशब्दः समुच्चयार्थकः । दीव्यति क्रीडति । परस्परविरोधेऽपि तिस्रो मिलित्वैवास्मिन्निवसन्ति इति भावः ।स एष जनक इति पूर्वेण सम्बन्धः । अनेन जनकप्रवेशोऽपि सूचितः । यथासंख्यच्छेकानुप्रासौ । श्लोकश्छन्दः ॥७ ॥ **जनकः। य इति.** तपोमये प्रचुरतपोरूपे ( तत्प्रकृतवचने मयडिति मयट् ) अग्नौ काञ्चनं सुवर्णमिवात्मानं निक्षिप्य वर्णेषु विप्रादिषु उत्कर्षमुत्तमत्वं । काञ्चनपक्षे वर्णस्य पीतवर्णस्य उत्कर्षं पुटशोधितसुवर्णस्याऽपूर्वपीतवर्णतेति प्रसिद्धमेव। गतः सोयं मुनीश्वरः ऋषिश्रेष्ठः विश्वामित्रः। उपमालंकारः । श्लोकश्छन्दः ॥ ८ ॥ समीहितसंपत् अभीप्सितावाप्तिः सैव लता तस्या उद्गमे प्ररोहे आराम उपवनं आश्रय इत्यर्थः । तादृशोऽयं प्रणामः । **विश्वामित्रः** । वसुन्धरायाः सुनासीर इन्द्र अधिपते । सीरध्वज जनक, अप्रतिहतः परिपूर्णः मनोरथः यस्य तादृशो भूयाः। **जनकः** सुनासीरसाधारणत्वं इन्द्रसाम्यं अधःकरणं न्यूनतासम्पादकमित्यर्थः। **जनकः** तदीयामपि इन्द्रसम्बन्धिनीमपि ( त्यदादीनि चेति वृद्धसंज्ञायां वृद्धाच्छ इत्यनेन च्छः) पदवीं स्थानं

गाधिनन्दन न नन्दनजन्मा
तादृशः स हरिचन्दनशाखी ।
यादृशो मम भवत्पदपद्म-
द्वन्द्ववन्दनविधिः सुखहेतुः ॥ ९ ॥

**विश्वामित्रः**—अहो ते प्रणयातिशयो यः सहजप्रमोदसुधाम्बुधिनिमग्नोऽप्यस्मत्समागमजन्मनः सुखशीकरान्बहु मन्यसे ।

**जनकः**—भगवन्, अस्मद्विधानां राज्यरागोपरक्तचेतश्चन्द्रमसां कुतस्त्योऽयं सहजानन्दचन्द्रिकोद्भिदः ।

**विश्वामित्रः**—मैवं भोः,
ज्याघातः कार्मुकस्य श्रयति करतलं कण्ठमोंकारनाद-
स्तेजो भाति प्रतापाभिधमवनितले ज्योतिरात्मीयमन्तः ।
राज्यं सिंहासनश्रीः शममपि परमं वक्ति पद्मासनश्री-
र्येषां ते यूयमेते निमिकुलकुमुदानन्दचन्द्रा नरेन्द्राः ॥ १० ॥

---

अतीत्य अतिक्रम्य वर्ते । **गाधीति.** गाधिनन्दन विश्वामित्र मम भवतः पदपद्मयोर्द्वन्द्वस्य वन्दनविधिः नमस्करणविधिः यादृशः यावानिति भावः। सुखस्य हेतुः साधनं जात इति शेषः । नन्दने स्वर्वने जन्म यस्य सः, हरिचन्दनशाखी देवतरुः तादृशः सुखहेतुर्न । अत्युक्तिरलङ्कारः । स्वागता वृत्तम् ॥९॥ **विश्वामित्रः** सहजप्रमोदः स्वाभाविकानन्द एव सुधाम्बुधिः तस्मिन्निमग्नोपि अस्मत्समागमात्सङ्गाज्जन्म येषां तान्सुखशीकरान् प्रमोदकणान् बहु यथा तथा मन्यसे । **जनकः** अस्मद्विधानां अस्मादृशां राज्यरागेण राज्यानुरागेण राज्यक्लेशेन वा ( रागस्तु मात्सर्ये लोहितादिषु । क्लेशादावनुरागे चेति मेदिनी ) उपरक्तो ग्रस्तः चेतश्चित्तमेव चन्द्रमा येषां तेषां सहजानन्द एव चन्द्रिका तस्या उद्भिदः उद्गमः । कुतो भव आगतो वा कुतस्त्यः (अव्ययात्त्यप्)। **ज्याघात इति** । कार्मुकस्य ज्याघातः गुणताडनं येषामिति सर्वत्र द्वितीयान्तेन सह सम्बध्यते, करतलं श्रयति । ओंकारस्य प्रणवस्य नादः शब्दः कण्ठं श्रयतीति सम्बध्यते । प्रताप इत्यभिधा नाम यस्य तत् तेजः । तेजोलक्षणं **साहित्यदर्पणे** । अधिक्षेपापमानादेः प्रयुक्तस्य परेण यत् । प्राणात्ययेऽप्यसहनं तत्तेजः समुदाहृतमिति । अवनितले भूतले भाति प्रकाशते । आत्मन ईश्वरस्य इदं आत्मीयं वृद्धाच्छ इति च्छः। अन्तः मनसि भाति । सिंहासनस्य भद्रासनस्य श्रीः शोभा राज्यं वक्ति । पद्मासनस्य तन्नामकयोगशास्त्रप्रसिद्धासनस्य, तल्लक्षणन्तु **हठयोगे** । वामोरूपरि दक्षिणं च चरणं संस्थाप्य वामं

---

१. सुखेतिपा० ।

**शतानन्दः**—सत्यमेतत्। एते हि

वाराङ्गनाकरतरङ्गितचामरोर्मि-
श्वेतातपत्रशतपत्त्रिणि राजहंसाः।
क्रीडन्ति राज्यसरसि स्वरसं च धीरा
योगीन्द्रचन्द्रसुगमे पथि संचरन्ति॥ ११॥

**लक्ष्मणः**—(अपवार्य।) आर्य, राजानोऽप्यमी ब्रह्मविद्याचतुरा इति चित्रीयते मे चेतः।

**रामः**—वत्स, किमिह चित्रम्। ननु

छत्रच्छाया तिरयति न यद्यन्न च स्प्रष्टुमीष्टे
दृप्यद्गन्धद्विपमदमषीपङ्कनामा कलङ्कः।
लीलालोलः शमयति न यच्चामराणां समीरः
स्फीतं ज्योतिः किमपि तदमी भूभुजः शीलयन्ति॥ १२॥

---

तथा दक्षोरूपरि पश्चिमेन विधिना धृत्वा कराभ्यां दृढम्। अङ्गुष्ठौ हृदये निधाय चिबुकं नासाग्रमालोकयेदे तद्व्याधिविनाशकारि यमिनां पद्मासनं प्रोच्यत इति। श्रीः परमं उत्कृष्टं शममपि इन्द्रियनिग्रहमपि वक्ति कथयति। त एते निमिस्तन्नामकस्य राज्ञः कुलकुमुदानां वंशकमलानां आनन्दे हर्षे विकासे च चन्द्रा नरेन्द्रा राजानो यूयम् न तु साधारणा इत्यर्थः॥ १०॥ **शतानन्दः** एते इत्यस्य राजहंसा इत्यनेन सम्बन्धः। हि इति हेत्वर्थकम्। **वाराङ्गनेति**. एते धीराः धैर्यवन्तो राजान एव हंसाः, वाराङ्गनानां वेश्यानां करैः हस्तैस्तरङ्गितानि कम्पितानि चामराण्येवोर्मयः तरङ्गाः ताश्च श्वेतातपत्राण्येव शतपत्राणि कमलानि चेति द्वन्द्वः। ते विद्यन्ते यस्मिन्. (अत इनिठनाविती निः) राज्यमेव सरः तस्मिन्, स्वरस स्वच्छन्दं यथा तथा क्रीडन्ति विहरन्ति। च परं योगीन्द्रो याज्ञवल्क्यः स एव चन्द्रः तेन सुगमे सुज्ञेये "गत्यर्थानां ज्ञानार्थकत्वात्" पथि मार्गे नीतिमार्गे इत्यर्थः। **सञ्चरन्ति**। हंसास्तु चन्द्रस्य सुगमे गमनार्हे पथि गगनमार्गे सञ्चरन्ति। अथ वा राजानः हंसा इव चामराण्यूर्मय इव इति सर्वत्र उपमितसमासः। उपमारूपकयोः सन्देहसङ्करः। वसन्ततिलका वृत्तम्॥ ११॥ **लक्ष्मणः** चित्रीयते विस्मयते (नमोवरिव इति क्यच्) **रामः**। **छत्रच्छायेति** छत्राणां छाया यत् ज्योतिः न तिरयति नाच्छादयति; (तिरश्शब्दात्तत्करोतीति णिच्) अनेन सूर्यरूपतेजसो व्यतिरेक उक्तः। छत्रच्छाया तत् तिरयति, इदं तु नेत्याधिक्यमस्य, यत् दृप्यतो माद्यतः गन्धद्विपस्य 'यस्य गन्धं समाघ्राय पलायन्तेऽन्यदन्तिनः। तं गन्धगजमित्याहुर्गजशास्त्रविशारदा इत्युक्तलक्षणस्य यो मदः स एव मषीपङ्कः कज्जल-

**विश्वामित्रः**—आङ्गिरसोचितमात्थ राजहंसा इति। सकलकुवलयोत्तंसा राजहंसा अमी।

**जनकः**—भगवन्, इदमस्मत्प्राचीनेषु शोभते न तु मयि कतिपयग्राटिकास्वामिनि।

**विश्वामित्रः**— मैवं भोः,

अवनिमवनिपालाः सङ्घशः पालयन्ता-
मवनिपतियशस्तु त्वां विना नापरस्य।
जनक कनकगौरीं यत्प्रसूता तनूजां
जगति दुहितृमन्तं भूर्भवन्तं वितेने ॥ १३ ॥

**जनकः**—भगवन्, नूतनशतभुवननिर्माणनिपुणस्य भगवतः कियतीयमभिनववचनचातुरी नाम। स खलु भवान्यस्य

शलाकीकृत्य स्वां दृशमसमकोपारुणरुचि
सुरश्रेणीचित्रं गगनतलभित्तौ रचयतः।

---

पङ्कतन्नाम यस्य तादृशः कलङ्कः लाञ्छनं स्प्रष्टु संबद्धुं नेष्टे न समर्थः। अनेन चन्द्रमसो व्यतिरेकः। यत् लीलया क्रीडया लोलः चञ्चलः चामराणां समीरो वायुः न शमयति न निर्वापयति। अनेन दीपाद्व्यतिरेकः। तत्तादृशं किमपि अनिर्वचनीयं स्फीतं सर्वव्यापीत्यर्थः, ज्योतिः तेजः चिद्रूपमित्यर्थः। अमी भूभुजः निमिवंशस्था राजानः शीलयन्ति अभ्यस्यन्ति। विशेषोक्तिरलङ्कारः "विशेषोक्तिरखण्डेषु कारणेषु फला वचः इति काव्यप्रकाशे"। मन्दाक्रान्ता वृत्तम् ॥ १२ ॥ **विश्वामित्रः** सकलस्य कुवलयस्य भूवलयस्य उत्तंसाः शिरोभूषणानि। हंसपक्षे कुवलयानां कमलानां उत्तंसा भूषणानीत्यर्थः। **जनकः** प्राचीनेषु पूर्वजेषु कतिपयाः कियन्त्यः या ग्रामटिका अल्पग्रामाः (ग्रामशब्दादल्पार्थे टिकच्)। **काव्यप्रकाशे** स. उ. स्वर्गग्रामटिकाविलुण्ठनवृथोच्छूनैः इति। **विश्वामित्रः** एवं पूर्वोक्तं मा वदेति शेषः। **अवनिमिति** हे जनक अवनिपालाः राजानः सङ्घैः सङ्घैः सङ्घशः (संख्यैकवचनाच्चेति शस् प्रत्ययः) अवनिं पृथ्वीं पालयन्तां रक्षन्तु नाम (आमन्त्रणे लोट्) तु परन्तु अवनिपतियशः त्वां विना अपरस्य न, यत् यस्मात् कनकमिव गौरीं तनूजां कन्यां प्रसूता भूः जगति भुवने भवन्तं दुहितृमन्तं कन्यावन्तं वितेने चकार। नान्यस्येति भावः। काव्यलिङ्गपरिसंख्यालङ्कारौ। मालिनी वृत्तम्॥ १३॥ **जनकः। शलाकीकृत्येति.** स्वां स्वीयां असमोऽसदृशो यः कोपः क्रोधस्तेन अरुणा ताम्रा रुचिर्यस्यास्तां दृशं शलाकीकृत्य तूलिकाकृत्य, चित्रलेखना-

सुधांशोर्भानोश्च प्रथमरचितं बिम्बयुगलं
सुधालाक्षासान्द्रद्रवभरितपात्रद्वयमभूत् ॥ १४ ॥

**शतानन्दः**— राजर्षे, सत्यमात्थ। किमुच्यतेऽसौ भगवान्।

त्रिशङ्कोः स्वर्लोकादवनितलपातं रचयितुं
सुनासीरे कोपाद्विकसितपदाब्जे विकसितः।
यदीयोऽसौ नव्यत्रिदशनगरारम्भरभसः
सुरस्तोमे भक्त्या मुकुलितकराब्जे मुकुलितः ॥ १५ ॥

**लक्ष्मणः**—( अपवार्य। ) आर्य, कथमेवंविधं भगवतः प्रतापितभुवनत्रयं तपाभिधानं तेजः।

**रामः**—अपि न विदितं ते राजर्षेरिदम्।

रोषाभिभूतपुरुहूतपदाभिभूतं
दृष्ट्वा त्रिशङ्कुमथ कोपविपाटलश्रीः।
आकुड्मलीकृतकराम्बुजराजिरम्या
संध्येव दृष्टिरमरैर्यदुपासितास्य ॥ १६ ॥

---

य तूलिकाया आवश्यकत्वात्। गगनतलमेव भित्तिस्तस्यां सुराणां देवानां श्रेण्येव चित्रं आलेख्यं रचयतो निर्मितवतो यस्य तव प्रथमं सृष्टेः पूर्वं रचितं ब्रह्मणैवेत्यर्थः, न तु स्वेन। **वा. रा.** बा. का. ६० सर्गे विश्वामित्रकृताया नक्षत्रसृष्टेरेव वर्णनात्। सुधांशोश्चन्द्रस्य भानोश्च बिम्बयुगलं क्रमेण सुधालाक्षयोश्चूर्णजतुनोः सान्द्रद्रवेण घनरसेन भरित पूर्णं पात्रयोर्द्वयम् अभूत्, स खलु भवानिति पूर्वेणान्वयः। साङ्गरूपकमलंकारः। शिखरिणी वृत्तम् ॥ १४ ॥ **शतानन्दः** । त्रिशङ्कोरिति. सुनासीरे इन्द्रे स्वर्लोकान्नाकलोकात् त्रिशङ्कोस्तन्नामधेयस्य राज्ञः अवनितले भूतले पातं भ्रंशं रचयितु कर्तुं विकसित फुल्लं पदाब्जं चरणकमलं यस्य तादृशे अधःपातयितुं पादप्रहारोद्यत इति भावः। विकसितो विकासं प्राप्तो यदीयो विश्वामित्रसम्बन्धी नव्यो यस्त्रिदशनगरारम्भः स्वर्लोकसृष्टिप्रारम्भः तस्मिन् यो रभसो वेगः स सुरस्तोमे देवगणे भक्त्या श्रद्धया मुकुलिते संकुचिते कराब्जे करकमले यस्य तस्मिन् सति मुकुलितः संकुचितः। अक्रमातिशयोक्तिरलङ्कारः। अक्रमातिशयोक्तिः स्यात् सहत्वे हेतुकार्ययोरित्युक्तेः। शिखरिणी वृत्तम् ॥ १५ ॥ **रामः** अपिः प्रश्नार्थः। **रोषेति.** रोषेण अभिभूतस्य पराभूतस्य पुरुहूतस्येन्द्रस्य पदेन अभिभूतं त्रिशङ्कुं दृष्ट्वा अथानन्तरं कोपेन विपाटला ताम्रा श्रीः शो-

**विश्वामित्रः**—राजर्षे, अपि तावद्रत्नगर्भागर्भसंभवं कन्यारत्नमलंकुरुते त्वाम् ।

**जनकः**—भगवन्, भवत्प्रसादादधुना जामातृत्वमप्यलंकरिष्यते । ( राममवलोक्य । सकौतुकम् । ) भगवन्,

सकलजनविलोकनोत्सवाना-
मयमयनं कतरः पुरः कुमारः ।
हरितमणिमयूखहारिणो यः
कलयति कल्पतरोः प्ररोहलीलाम् ॥ १७ ॥

**शतानन्दः**—भगवन्, अयं च कतरो यः खल्वस्यैव

नीलनीरजदलोज्ज्वलकान्ते-
रन्तिके स्फुरति काञ्चनगौरः ।
लोचनस्य सुदृशः श्रवणाग्रे
संनिविष्ट इव चम्पकगुच्छः ॥ १८ ॥

---

भा यस्याः ।सन्ध्यापक्षे कोपस्येव विपाटला श्रीर्यस्याः, कोपस्य रक्तत्वं कविसमयसिद्धम् । तथा च दर्पणे । रक्तौ च क्रोधरागौ इति । आकुड्मलीकृता या कराम्बुजराजिः अनुनयार्थमिति भावः । अन्यत्र आकुड्मलीकृताः कराः किरणाः सन्ध्योपासनार्थं हस्ताश्च कमलानि च तेषां राज्या रम्या । अस्य विश्वामित्रस्य दृष्टिः । अमरैः यदुपासिता स्तुता इदम् ते न विदितमिति पूर्ववाक्येन संबन्धः। उपमाश्लेषकाव्यलिङ्गालंकाराः।वसन्ततिलका वृत्तम्॥ १६॥ **विश्वामित्रः** रत्नानि गर्भे यस्यास्तस्या गर्भादन्तःप्रदेशात् संभवो यस्य तत् कन्यारत्नं कन्यैव रत्नं । रत्नगर्भाद्रत्नस्यैवोत्पत्तिर्युक्तेति भावः । अथवा कन्यासु रत्नं श्रेष्ठः (रत्नं स्वजातिश्रेष्ठेऽपीत्यमरः) **जनकः** । **सकलेति.** यः सकलानां समग्राणां जनानां विलोकनं प्रेक्षणमेव उत्सवास्तेषमाअयनं आश्रयः हरितानां हरिद्वर्णानां मणीनां मयूखेन कान्त्या हारिणो हृद्यस्य कल्पतरोः प्ररोहस्य लीलां क्रीडां कलयति स्वीकरोति एतादृशः पुरोऽग्रे अयं कुमारो बालः कतरः द्वयोर्मध्ये क इति प्रश्नः ( कियत्तदोर्निर्धारणे द्वयोरिति डतरच् ) निदर्शनालङ्कारः । पुष्पिताग्रा वृत्तम् ॥ १७ ॥ **शतानन्दः** लक्ष्मणमुद्दिश्य पृच्छति अयं चेत्यादिना । **नीलेति.** यः खलु नीलनीरजदलस्य इन्दीवरपत्रस्येव उज्ज्वला कान्तिर्यस्य तस्यास्यैव अन्तिके निकटे सुदृशः वामाक्ष्याः लोचनस्यान्तिके श्रवणाग्रे कर्णाग्रे सन्निविष्टः स्था-

**विश्वामित्रः**—नाम्ना तावद्रामलक्ष्मणावेतौ ।

**जनकः**—अहो कर्णामृतम् ।

**शतानन्दः**—( निर्वर्ण्य । ) भगवन्,

एतयोरहमुदाररूपयो-
रुल्लसत्सहजसौहृदश्रियोः ।
कामपि स्वजनतां विभावये
कौस्तुभामृतमयूखयोरिव ॥ १९ ॥

**जनकः**—

एतयोः प्रकृतिरम्यरूपयो-
रुल्लसत्सहजसौहृदश्रियोः
आन्तरः स्फुरति कोऽपि संनिधिः
प्रत्यगात्मपरमात्मनोरिव ॥ २० ॥

**विश्वामित्रः**— अयि योगीश्वरशिष्य, ईदृशेषु गभीरेष्वभिनवोदन्तपीयूषवेशन्तेषु भवत एव मनो निमज्जति । स्वजनभावे पुनरनयोर्वयमपि साक्षिणः ।

---

पितः चम्पकस्य हेमपुष्पकस्य गुच्छ इव कांचनमिव सुवर्णमिव गौरः स्फुरति अयं कतरः । उपमालङ्कारः । स्वागता वृत्तम् ॥१८॥ **शतानन्दः । एतयोरिति.** अहं उदारमुत्कृष्टं रूपं ययोः । रूपलक्षणन्तु । अङ्गान्यभूषितान्येव प्रक्षेप्याद्यैर्विभूषणैः । येन भूषितवद्भान्ति तद्रूपमिह कथ्यते इति । उल्लसन्ती शोभमाना सहजसौहृदस्य स्वाभाविकसख्यस्य श्रीः सम्पत्तिर्ययोः तयोः, कौस्तुभः तन्नाममणिः स चामृतमयूखश्चन्द्रश्चेति द्वन्द्वः । तयोरिव एतयोरपि कामपि स्वजनतां आप्तत्वम् विभावये चिन्तयामि । वर्णभेदेपि अन्यधर्मसाम्यात् मित्रत्वाच्च आप्तत्वं भवेदिति तर्कयामीति भावः ॥ उपमालङ्कारः । रथोद्धता वृत्तम् ॥ १९॥ **जनकः । एतयोरिति** । पूर्वपद्ये श्लोकार्धस्यार्थ उक्त एव । प्रत्यगात्मा जीवः,परमात्मा ईशः, तयोरिव एतयोरपि कुमारयोः आन्तरः अन्तरे भवः, अन्तर्यामीत्यर्थः, कोपि सन्निधिः सामीप्यं स्फुरति । उपमालंकारः । रथोद्धता वृत्तम्॥२०॥**विश्वामित्रः** योगीश्वरशिष्य याज्ञवल्क्यच्छात्र॥ अनेन पूर्णज्ञानित्वं सूचितम्।ईदृशेषु एतादृशेषु गभीरेषु अतिगूढेषु अभिनवोदन्ता नूतनवृत्तान्ता एव पीयूषवेशन्ताः अमृतसरांसि तेषु भवताम् एव मनो निमज्जति मग्नं भवति। पुनश्शब्दोऽप्रथमार्थे । अनयोः स्वजनभावे बान्धवत्वे

जनकः—तत्किं भ्रातरावेतौ।

विश्वामित्रः—अथ किम्।

जनकः—

तनुश्रिया निर्जितचम्पकोत्पलौ
सुवर्णनीलोत्पलकोशकोमलौ।
अहो दृशामुत्सवदानदक्षिणौ
सुलक्षणौ लक्ष्मणलक्ष्मणाग्रजौ ॥ २१ ॥

भगवन्, किमेतत्।

यथाहं निःसीमोत्सवसुभगभोगे भवकथा-
पथातीते चेतःप्रणयिनि रमे पुंसि परमे।
तथैवास्मिन्बाले दलदमलनीलोत्पलदलो-
दरश्यामे रामे नयनपदवीमागतवति ॥ २२ ॥

---

वयमपि साक्षिणः साक्षाद्द्रष्टारः ( साक्षाद्द्रष्टरीतीनिः ) तथा च अकथितोऽपि आकारादिभिर्भवन्मन एवानयोः स्वजनभावे निश्चिनोत्येव अपि च वयमपि तत्र साक्षाद्द्रष्टारः नत्वपूर्वबोधयितार इति भावः। **जनकः। तनुश्रियेति**। तनुश्रियाङ्गकान्त्या निर्जिते पराभूते चम्पकं उत्पलं च याभ्यामिति द्वन्द्वगर्भितो बहुव्रीहिः। क्रमेण चम्पककान्तिर्लक्ष्मणः नीलोत्पलकान्ती राम इति भावः। सुवर्णस्य नीलोत्पलस्य च यौ कोशौ कुड्मलौ ताविव कोमलौ दृशां नेत्राणामुत्सवदान आनन्ददाने दक्षिणौ उदारौ, शोभनानि लक्षणानि चिह्नानि ययोरेतादृशौ, लक्ष्मणलक्ष्मणाग्रजौ लक्ष्मणरामौ वर्तेते, अहो आश्चर्ये। उपमाप्रतीपावलङ्कारौ। वंशस्थं वृत्तम्। जतौ तु वंशस्थमुदीरितं जरौ इत्युक्तेः ॥२१॥ **यथेति**. अहं सीमाया निष्क्रान्ताः निःसीमा अपाराः उत्सवाः सुभगानि उत्कृष्टसम्पत्तयश्च भोगाः सुखानि च यस्मिन्, भवस्य संसारस्य कथाया वार्तायाः यः पन्थास्तमतीतेऽतिक्रान्ते, ( ऋक्पूरब्धूःपथामित्यनेनाप्रत्ययः ) अतीत इत्यत्र इणो गत्यर्थत्वात्कर्तरि क्तः, चेतसो यः प्रणयः प्रेमा अस्मिन्नस्ति तादृशे परमे पुंसि भगवति यथा रमे तथैव दलतां स्फुटताममलनीलोत्पलानां विमलेन्दीवराणाम् दलोदरमिव पत्रोदरमिव श्यामस्तस्मिन् अस्मिन् बाले रामे नयनयोः पदवीं सरणिमागतवति सति रमे किमेतदिति आश्चर्यप्रश्नः। उपमालङ्कारः। शिखरिणी वृत्तम्॥२२॥

**विश्वामित्रः**—( स्वगतम् । ) उचितमेतत् । न खलु सकललोकलो-चनानन्दकरः शीतकरः । शंकरशिरःशयालोः कलानिधेरपरं तत्त्वम् । ( प्रकाशम् । ) राजर्षे, स एष सौन्दर्यातिशयस्य महिमा ।

**जनकः**—कः पुनराभ्यां पुत्रवतां मौलिमाणिक्यमारोपितः ।

**विश्वामित्रः**—

किं शीतांशुमरीचयः किमु सुरस्रोतस्विनीवीचयः
किं वा केतकसूचयः किमथ वा चन्द्रोपलानां चयः ।
इत्थं जातकुतूहलाभिरभितः सानन्दमालोकिताः
कान्ताभिस्त्रिदिवौकसां दिशि दिशि क्रीडन्ति यत्कीर्तयः ॥ २३ ॥

---

**विश्वामित्रः** उचितमेतज्जनकानुभूतम् योग्यमित्यर्थः । सकललोकानां लोचनानन्दकरः नयनानन्दकरः शीतकरः चन्द्रः शंकरशिरःशयालोः रुद्रमूर्धवास्तव्यस्य कलानाम् षोडशकलानां निधेः आश्रयस्य चन्द्रस्य न खलु अपरं तत्त्वम् । अन्यस्वरूपं न भवतीत्यर्थः ( तत्त्वं परात्मनि वाद्यभेदे स्वरूपे चेति हैमः ) यथा हरशिरश्चन्द्रकलापूर्णचन्द्रयोर्भेदो नास्ति तथा परमपुरुषरामयोर्भेदो नास्ति इति भावः । अथ वा आनन्दकरो न खलु भवति अपि तु भवत्येवेति काकुः । शंकरशिरःशयालोः कलानिधेस्तु अपरं तत्त्व अन्यदेव स्वरूपम् न तु सर्वेषामानन्दकरः । ज्ञातुरेव विशेषानन्दकरः "पूर्णेन्दुः किं तथा वंद्यो निष्कलङ्को यथा कृशः इत्युक्तेः" तथा परमपुरुषे सर्वेषामेव मनो रमते रामे तु गूढत्वादल्पज्ञस्य न मनो रमते, जनकस्य तु पूर्णज्ञत्वाद्रमत इति भावेन उचितमेतदित्युक्तम् । **जनकः** आभ्यां रामलक्ष्मणाभ्याम् कः पुरुषः पुत्रवतां प्रशस्तपुत्रिणाम् ( प्राशस्त्ये मतुप् ) मौलिमाणिक्य शिरोमणिमारोपितः ( रुहः पोऽन्यतरस्यामित्यनेन हस्य पः ) अनयोर्धन्यः पिता क इति प्रश्नः । **विश्वामित्रः** द्वाभ्यां युग्ममिति प्रोक्तं त्रिभिः श्लोकैर्विशेषकमित्युक्तेर्विशेषकेण दशरथं स्तौति **किमिति.** यस्य कीर्तयः शीतांशोश्चन्द्रस्य मरीचयः किरणाः किम्, सुराणाम् स्रोतस्विन्या भागीरथ्या वीचय ऊर्मयः किमु । अथ वा केतकानां सूचयस्त्रिपत्रकाणि ( त्रिपत्रकः सूचिरिति वैजयन्ती) अथवा चन्द्रोपलानां चन्द्रकान्तदृषदाम् चयो गणः किम्, इत्थं जातं कुतूहलं कौतुकं यासां ताभिः त्रिदिवौकसां देवानां कान्ताभिः सानन्दं यथा स्यात्तथा आलोकिताः सत्यः दिशि दिशि क्रीडन्ति विलसन्ति।सन्देहालङ्कारः।शार्दूलविक्रीडितं वृत्तम्॥२३॥

**रामः**— वत्स, नूनमयं सकलगुणावदातस्तातः प्रस्तूयते ।

**लक्ष्मणः**—अपि नाम भूयोऽपि प्रस्तोष्यते ।

**विश्वामित्रः**—अपि च ।

यस्योद्यद्भुजदण्डचण्डिमवलत्कोदण्डलीलायितै-
 र्निष्पीते दनुजेन्द्रचन्द्रवदनाभ्रूवल्लरीविभ्रमे ।
लक्ष्मीमस्रविपाटलक्षतमयीमालम्बते केवलं
 पौलोमीकरजाङ्कुरव्यतिकरादाखण्डलीयं वपुः ॥ २४ ॥

अपि च ।

तस्य पद्मवनबान्धववंशो-
 त्तंसमांसलमहामणिमौलेः
कायकान्तिपरिभूतमनोजौ
 ताविमौ दशरथस्य कुमारौ ॥ २५ ॥

---

**रामः** सकलगुणैः शौर्यादिभिरवदातः शुद्धः तातो दशरथः । **विश्वामित्रः** । **यस्येति** । यस्य राज्ञः उद्यतोर्युद्धार्थमूर्ध्वीकृतयोर्भुजदण्डयोश्चण्डिम्ना औग्र्येण वलतः संचलतः कोदण्डस्य लीला इवआचरितानि लीलायितानि तैः ( कर्तुः क्यङ् सलोपश्चेति क्यङ् ) दनुजेन्द्राणां दानवाधिपतीनां याश्चन्द्रवदनाः कामिन्यस्तासांभ्रुव एव वल्लर्यो लतास्तासां विभ्रमे विलासे निष्पीते तासां पतिषु हतेष्विति भावः। आखण्डलस्य मघोन इदमाखण्डलीयम् ( वृद्धाच्छ इति च्छः ) वपुरङ्ग केवलं तन्मात्रं यथा स्यात्तथा पौलोम्याः शच्याः करजाङ्कुराणां नखाङ्कुराणां व्यतिकरात्संबन्धादस्रेण रक्तेन विपाटलानि रक्तानि यानि क्षतानि व्रणानि तानि प्रचुराणि यस्याम् ( तत्प्रकृतवचने मयडिति मयट् ) लक्ष्मीं शोभामालम्बते धत्ते । पर्यायोक्तिपरिसंख्यालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥२४॥ अपि च किंच । **तस्येति** । पद्मवनानां बान्धवस्यार्कस्य यो वंशोत्तंसः वंशभूषणं स चासौ मांसलः पुष्टः कान्त्येत्यर्थः । ( सिध्मादित्वाल्लच् ) महामणीनां बृहद्रत्नानां मौलिः किरीटं तस्य दशरथस्य तन्नाम्नोऽयोध्याधिपतेः कायकान्त्या परिभूतो जितः मनोजः कामः याभ्यां मन्मथादपि सुकुमारतराविति भावः । तौ प्रसिद्धौ कुमारौ बालकौ रामलक्ष्मणौ इमौ पुरोदृश्यमानौ । रूपकप्रतीपालङ्कारौ । स्वागता वृत्तम् ॥ २५ ॥

जनकः—

यद्बाहू वहतः पराक्रमहृतप्रत्यर्थिसीमन्तिनी-
चक्षुःकज्जलकालिकामिव धनुर्मौर्वीकिणश्यामिकाम् ।
यद्दोर्दुर्मदकर्मकार्मुकगुणप्रोत्तालकोलाहलै-
र्वैरिस्त्रीकलमेखलाकलकलाः पीता इवास्तं गताः ॥ २६ ॥

अपि च ।

यस्येन्द्रारिजयश्रिया सह झटित्याकृष्य मौर्वीलतां
साकं भूवलयेन चापवलयं दोर्मण्डले बिभ्रति ।
पौलोमीकुचकुम्भसीमनि रहः पश्यन्नखाङ्कं नवं
धत्ते चेतसि केवलं न तु करे कोदण्डमाखण्डलः ॥ २७ ॥

---

जनकः विशेषकेण दशरथमेव वर्णयति । विशेषकलक्षणन्तु अस्मिन्नेवाङ्के त्रयोविंशतितमे पद्ये प्रकाशितम् । यद्बाहू इति । यस्य राज्ञः बाहू भुजौ पराक्रमहृतां विक्रमस्वीकृतां प्रत्यर्थिनां द्वेषिणां सीमन्तिन्यः स्त्रियस्तासां चक्षुषां कज्जलस्य अञ्जनस्य कालिकां कालिमानमिव धनुषो मौर्व्याः ज्यायाः किणस्य संघर्षजचिह्नस्य श्यामिकां श्यामवर्णं वहतो धत्तः, यस्य दोष्णोर्बाह्वोर्दुर्मदमुद्दंडं कर्म बाणसन्धानादि यस्मिंस्तस्य कार्मुकगुणस्य सिञ्जिन्याः प्रोत्तालैरत्युत्कटैः कोलाहलैः कलकलध्वनिभिः ( उत्ताल उत्कटे श्रेष्ठे विकराले प्लवङ्गम इति मेदिनी ) वैरिस्त्रीणां रिपुपत्नीनां कलाः मधुरास्फुटाः ये मेखलाकलकलाः काञ्चीरवाः ते पीता इव प्राशिता इव अस्तमदर्शनं गताः । उत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥ यस्येति । यस्य दोर्मण्डले भुजमण्डले इन्द्रारीणामसुरादीनां जयस्य श्रिया शोभया सह मौर्वीलतां झटिति आकृष्य भूवलयेन मेदिनीमण्डलेन साकं सह चापं वलयमिव कर्षणात्कङ्कणाकृतिरिति भावः । बिभ्रति धरति सति आखण्डलः पाकशासनः रहः एकान्ते पौलोम्याः इन्द्राण्याः कुचौ कुम्भौ इवेत्युपमितसमासः । तयोः सीमनि प्रान्ते ( विभाषा ङिश्योरिति विकल्पाल्लोपाभावः ) नखाङ्कं कररुहचिह्नं पश्यन् विलोकमानः सन् मनसि चित्ते कोदण्डं धनुर्धत्ते धरति । सदृशावस्तुदर्शनात्स्मरतीति भावः । न तु करे धत्ते । अमुनैव सर्वशत्रुसंहारश्चापधारणे न किमपि प्रयोजनमभवत्तस्येति भावः । सहोक्तीपरिसंख्यालंकारौ । सहोक्तिः सहभावश्चेद्भासते जन-

तपनकुलशिरःकिरीटकोटि-
स्फुरदरुणोत्पलकुड्मलस्य तस्य ।
दशरथनृपतेरिमौ मृगाङ्क-
प्रतिमसुरेखमुखाम्बुजौ तनूजौ ॥ २८ ॥

**विश्वामित्रः**—अथ किम् ।

**जनकः**—अहो धन्यता दशरथस्य, यस्य द्वे अपि तनयावलोकनशीतले दृशौ ।

**शतानन्दः**—दिशौ च ।

**विश्वामित्रः**—ननु दिश इति वक्तव्यम्।

**शतानन्दः**—तत्किमन्यावपि कुमारौ दशरथस्याङ्कं भूषयतः ।

**विश्वामित्रः**—अथ किम् । यौ खलु भरतशत्रुघ्नौ प्रतिबिम्बाविव रामलक्ष्मणयोः ।

**शतानन्दः**—नूनममी ऋष्यशृङ्गचरुभागानां विलासाः ।

**जनकः**—दशरथभागधेयानां च ।

**विश्वामित्रः**—एवमेतत् । अवधिः खलु भाग्यवतां राजा दशरथः ।

**जनकः**—महात्मवतां च ।

---

रञ्जन इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ २७ ॥ **तपनेति** । तपनकुलस्य भास्वद्वंशस्य किरीटकोटिषु मुकुटाग्रेषु स्फुरतो दीप्यमानस्य अरुणोत्पलकुड्मलस्य रक्तोत्पलमुकुलसदृशस्य । एतेन सूर्यवंश्याग्रगण्यत्वमुक्तम्। तस्य दशरथनृपतेः मृगाङ्कप्रतिमे चन्द्रतुल्ये सुरेखे शोभनाभोगे (रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपीति हेमचन्द्र) मुखाम्बुजे ययोः तौ तनुजावात्मजौ किमिति प्रश्नः ।उपमालङ्कारः पुष्पिताग्रा वृत्तम् ॥ २८ ॥ **शतानन्दः** ऋष्यशृङ्गचरुभागानां तत्कारितयज्ञलब्धपायसभागानां विलासाः क्रीडाः तद्भक्षणजनिता इति भावः । उक्तं च **रामायणे** बालकाण्डे वाल्मीकीये षोडशसर्गे । ततस्तु ताः प्राश्यतमुत्तमस्त्रियो महीपतेरुत्तमपायसं पृथक् । हुताशनादित्यसमानतेजसो चिरेण गर्भान्प्रतिपेदिरे तदेति ॥ **जनकः** महात्मवतां महाधृतिमतां बुद्धिमतां महायत्नवतां वा अवधिरिति पूर्वेण संबन्धः । ( आत्मा यत्नो धृतिर्बुद्धिः स्वभावो ब्रह्मवर्ष्म चेत्यमरः )

**विश्वामित्रः**—तत्किमस्माभिरुच्यताम् । भवतो महिम्नि भवन्तावेव साक्षिणौ ।

**जनकः**—कतरोऽहं दशरथस्य महिमाभोगमनुभवितुं कासार इव सागरस्य ।

**विश्वामित्रः**—शोभन्त एव विनयमधुराणामधरीकृतात्ममहिमानः कामं सत्यविधुरा अपि वाचः । अथवा समुचितमेवैतत् । यतः

जज्ञिवान्दशरथः स हि राजा
रामपिन्दुमिव सुन्दरगात्रम् ।
लोकलोचनविगाहनशीलां
त्वं पुनः कुमुदिनीमिव सीताम् ॥ २९ ॥

**लक्ष्मणः**—( अपवार्य । ) आर्य, इन्दुकुमुदिनीदृष्टान्तेन किमपि संविधानं सूचितं भगवता ।

**रामः**—( सप्रणयकोपम् ) अलमलीकालापितया ।

**जनकः**— ( स्वगतम् । ) कथमनया भङ्ग्या किमपि सूचितं मुनि-

---

**विश्वामित्रः** किमस्माभिरुच्यतां अस्माभिः किं वक्तव्यमित्यर्थः । भवन्ताविव युवामेव। **जनकः** । महिम्नः माहात्म्यस्य आभोगं परिपूर्णतां अनुभवितुं सागरस्य कासार इव सर इव सरसोल्पवारित्वात्स यथा वारिधेः साम्यानर्हस्तथाहं दशरथस्येति भावः । **विश्वामित्रः** विनयेन नम्रतया ( विनयः शिक्षाप्रणत्योरिति हैमः ) मधुराणां प्रियाणां भवादृशामित्यर्थः सत्येन विधुरा हीना मृषोक्ता अपि अधरीकृतः तुच्छीकृतः आत्ममहिमा स्वमहत्त्वं यासु ताः वाचः काममतिशयेनेत्यर्थः। अथवेति पक्षान्तरे ।एतद्दशरथाधिक्यवर्णनं समुचितं युक्तमेव।यतः यस्मात्। **जज्ञिवानिति.** स प्रसिद्धः दशरथः तन्नाम राजा इन्दुमिव चन्द्रमिव सुन्दरं कान्तिमत् गात्रं वपुर्यस्य तं रामं तन्नामात्मजं हि यस्माज्जज्ञिवान् जनयामास च पुनस्त्वर्थकः लोकानां जनानां लोचनानि विगाहन्ते मज्जन्त्यस्मिन्निति (करणाधिरणयोश्चेति ल्युट् ) तादृशं शीलं स्वभावः सद्वृत्तं वा यस्यास्तां कुमुदिनीमिव कैरविणीमिव सीतां तन्नाम्नींपुत्रीं जज्ञिवान् इति अत्राभिसंबन्ध्यते यतः उभावपि युवां इन्दुसदृशपुत्रं कुमुदिनीसदृशपुत्रीं च जनयामासथुः अतो दशरथस्य जनकविनयः संपद्यते इति भावः। लोकेपि कन्यासम्बन्धिनः वरसम्बन्धिनां वशगा इति प्रसिद्धमेवेति भावः सूचितः । उपमावृत्त्यनुप्रासावलङ्कारौ । स्वागता वृत्तम् ॥ २९ ॥ **रामः** अलीकालापितया निरर्थकभाषणेन। **जनकः** अनया भङ्ग्या वैदग्ध्येन

ना । तत्किमनेन रभसवशंवदेन विस्मृतमेव शांभवं धनुः । (प्रकाशम् ।) भगवन्, अनेन भगवतो वक्रकमनीयेन वाग्विलासेन द्वितीयेनेव हर-कार्मुकेण किमपि कौतुकितोऽस्मि ।

**विश्वामित्रः**—( स्वगतम् । ) कथमनया परिपाट्या हरचापारोपण-मुद्घाटयति । भवतु । ( प्रकाशम् ) राजर्षे, साधु स्मारितोऽस्मि । अतीव मे कौतुकं वृषभकेतुकार्मुकावलोकने । तेन तदानयनायादिश्यन्तां पु-रुषाः । अथवा किमन्यैः । रामभद्र एवादिश्यताम् ।

**जनकः**—( सविस्मयम् । ) भगवन्, कथं मुग्ध इव दुग्धमुखमपि राममिन्दुकिरीटकार्मुकानयनार्थमादिशसि । न जानासि किम् ।

एतत्तद्दुर्विगाहं तुहिनगिरिमयं कार्मुकं यत्र जज्ञे
मौर्वी दर्वीकराणां पतिरुदधिसुतानायकः सायकश्च ।
दोर्दण्डैश्चन्द्रमौलेर्नतमपि यदभूदुन्नतं कार्मुकाणां
बाष्पाम्भोवृष्टये च त्रिपुरमृगदृशामैशमप्यैन्द्रमासीत् ॥ ३० ॥

---

वैदग्धी भङ्गिश्छभनिमीलिकेति त्रिकाण्डशेषः । अनेनेतरभाषणेन । रभसस्य हर्षस्य वशंवदेन (प्रियवशे वदः खजिति खच्) अधीनेन शांभवं शङ्करसं-बन्धि धनुर्विस्मृतमेव । भगवन्ननेन वक्रश्चासौ कमनीयश्चेतिविशेषणोभय-पदकर्मधारयः। वाग्विलासेन वाग्रचनयाद्वितीयेनेव हरकार्मुकेण कार्मुकस्यापि वक्रत्वाद्वाग्विलासधनुषोः साम्यमिति भावः । **विश्वामित्रः** परिपाट्या नुक्रमेण हरचापे आरोपणं, सिञ्जिन्या इति भावः। उद्घाटयति प्रकटयति । राजर्षे जनक साधु यथा स्यात्तथा स्मारितोस्मि।वृषभकेतोः शंकरस्य कार्मुका-वलोके अतीव मेकौतुकं कुतुकं. **जनकः** दुग्धं मुखे यस्य अद्यापि दुग्धप्राशन-योग्यस्येति भावः । इन्दुकिरीटकार्मुकस्य शंङ्करधनुषः आनयनार्थं आदिशसि आज्ञापयसि।**एतदिति**.यत्र दर्वीकराणा सर्पाणां पतिः शेषः मौर्वी गुणः संजात-उदधिसुताया लक्ष्म्या नायकः विष्णुः सायकश्च यत्र जज्ञे, चन्द्रमौलेः शंक-रस्य दोर्दण्डैः नतमपि नम्रमपि कार्मुकाणां मध्ये इदं धनुः उन्नतमेवाभूत् महोच्चत्वादिति भावः । त्रिपुरमृगदृशां त्रिपुरस्त्रीणां बाष्पमेवाम्भः तस्य वृष्टये ऐशमपि ईशसम्बध्यपि ऐन्द्रं इन्द्रस्येदं इन्द्रसम्बन्ध्यभूत्। यथा इन्द्रचापे उ-द्यति वृष्टिर्भवति तथास्मिन्नपि चापे युद्धार्थं सन्नद्धे त्रिपुरस्त्रीणां पतिनाशात् बाष्पांभोवृष्टिरतीव जातेति भावः । तदेतत् तुहिनगिरेर्हिमाचलस्य विकारः ( मयड्वैतयोरिति मयट् ) कार्मुकं दुर्विगाहं दुःखेन चलितुं शक्यं

**विश्वामित्रः**--जानामि ।

सेवायातसमस्तखेचरकरक्रीडाचलच्चामर-
श्रेणीमारुतपानपीननिबिडज्यापन्नगाकर्षिणा ।
गाढाकुञ्चनजृम्भमाणतुहिनस्यन्दैर्यदीयैः श्रमः
संत्यक्तः पुरवैरिणापि तदिदं शैलेन्द्रसारं धनुः ॥ ३१ ॥

**जनकः**--तत्कथमस्यानयनाय रामायादिशसि ।

**विश्वमित्रः**—न केमलमानयनाय । किंत्वानमनाय । ( रामं प्रति । ) वत्स, बध्यतां परिकरः । इदं च

मारीचमारीचतुरं सुबाहोरपवारणम् ।
न्यस्यतां लक्ष्मणकरे ताटकाताडनं धनुः ॥ ३२ ॥

---

दुःखेनापि आरोपणं न शक्यं वीरराजैः अयं तु दुग्धमुख इति भावः । तुल्ययोगिताविरोधाभासालङ्कारौ ॥ शिखरिणी वृत्तम् ॥ ३० ॥ **विश्वामित्रः** जानामि त्वदुक्तं धनुर्दुर्विगाहत्वमवैमीत्यर्थः । तदेव प्रथयति **सेवेति** सेवायै आयातानां समस्तखेचराणां सकलसुराणां करैः क्रीडया चलतां चामराणां प्रकीर्णकानां श्रेण्याः पङ्क्तेर्यो मारुतस्तस्य पानेन पीनः स्थूलःअतएव निबिडो दृढो यो ज्यारूपपन्नगो भोगी तमाकर्षतीति। सुप्यजाताविति णिनिः तेन पुरवैरिणापि शङ्करेणाऽपि यदीयैर्हिमाचलसम्बधिभिः गाढाकुञ्चनेन दृढाकर्षणेन ( कुञ्चकौटिल्य इत्यास्माद्भावे ल्युट् ) जृम्भमाणाः प्रादुर्भवन्तो ये तुहिनस्यन्दास्तुहिनद्रवास्तैः आर्द्रवस्त्रदृढनिष्पीडनेन यथा जलकणा निस्सरन्ति तथेति भावः। श्रमः सन्त्यक्तस्तदिदं शैलेन्द्रस्य हिमाचलस्य सारः स्थिरांशो यत्र न तु हिमाचलस्येव सार इति।तदुक्तं **पुष्पदन्तेन**।रथः क्षोणी यन्ता शतधृतिरगेन्द्रो धनुरथो इति । एतेन त्रिपुरदाहकस्यापि यदाकर्षणेन महाश्रमोऽन्यस्य तु का कथेति भावः।परिकराङ्कुरालङ्कारः साभिप्राये विशेष्ये तु भवेत्परिकराङ्कुर इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम्॥३१॥ **विश्वामित्रः** आनमनाय वक्रीकरणाय परिकरः प्रगाढगात्रिकाबन्धः।**मारीचेति**।मारीचस्य तदाख्यनिशाचरस्य मार्यां मारणे चतुरं (मारिः स्त्री मारणे वर्षे इतिमेदिनी) ( कृदिकारादक्तिन इति ङीष् ) साम्प्रतं मारणाभावेऽपि अग्रेऽनेनैव धनुषा तस्य नाशो भविष्यतीति चतुरशब्देन सूचितम् । सुबाहोस्तदाख्यराक्षसस्यापवारणमन्तर्धायकं नाशकमित्यर्थः । ताडकायास्तदाख्ययातुधान्यास्ताडनं मारणं धनुर्लक्ष्मणकरे न्यस्यताम्।तादृशघोरकर्मकर्तुर्नासाध्यमस्य धनुषः

**जनकः**—कथमसंभावनीयमेवोद्भावयसि ।

**विश्वामित्रः**—कथमिदं न विदितं ते । अनेन हि

प्राप्य चापनिगमानितः क्रमा-
त्संप्रताप्य विशिखैर्निशाचरान् ।
अस्मदीयमखरक्षणक्रिया-
दक्षिणेन गुरुदक्षिणीकृता ॥ ३३ ॥

**जनकः**—( विमृश्य । निःश्वस्य च । ) भगवन्, अस्त्येतत् । किंतु

मारीचमुख्यरजनीचरचक्रचूडा-
चञ्चन्मरीचिचयचुम्बितपादपीठः ।
अत्राभवद्विफलबाहुबलावलेपो
वीरः शशाङ्कमुकुटाचलचालनोऽपि ॥ ३४ ॥

**विश्वामित्रः**—किमेतावता । नन्वत एव राममादिशामि । रामं प्रति वत्स, उत्तिष्ठ । कुमुदिनीकान्तकलाकिरीटकार्मुकारोपणप्रवीणतया संप्रीणयास्मान् ।

---

आरोपणमिति सूचितम् । परिकरालङ्कारः ॥३२॥ **जनकः** कथमिति प्रश्नार्थे।उद्भावयसि प्रकटयसि । **विश्वामित्रः** ।**प्राप्येति**। दक्षिणेनोदारेण रामेण इतो मत्तः क्रमादभ्यासक्रमाच्चापस्य निगमान्वेदान्प्राप्य विशिखैर्बाणैर्निशाचरान् सम्प्रताप्य विनाश्येत्यर्थः। अस्मदीयस्य मखस्य यज्ञस्य रक्षणक्रियैव गुरुदक्षिणीकृता दक्षिणात्वेनामन्यतेत्यर्थः। (अभूततद्भावे च्विः) दक्षतेति पाठे मखरक्षणक्रियादक्षतेत्येकं पदम् । रूपकवृत्त्यनुप्रासालङ्कारौ । रथोद्धता वृत्तम्॥ ॥३३॥**जनकः** ।**मारीचेति**।मारीचस्तदाख्यराक्षसो मुख्योऽग्रेसरो येषां तेषां रजनीचराणां राक्षसानां चक्रस्य समुदायस्य चूडासु चञ्चन् सञ्चलन् यो मरीचिचयः कान्तिनिकरस्तेन चुम्बितं पादपीठं यस्य तादृशः वीरः शशाङ्कमुकुटस्य शंकरस्याचलं कैलासं चालयतीति तादृशो रावणोऽपि अत्र चापारोपणे विफलः बाहुबलस्यावलेपो दर्पो यस्य तादृशोऽभवत् । यत्र त्रिभुवनजयिरावणस्यापीदृश्यवस्था तत्र का कथेदृशबालस्येति भावः।काव्यार्थापत्त्यलङ्कारध्वनिः।वसन्ततिलका वृत्तम् ॥ ३४ ॥ **विश्वामित्रः** अत एव रावणस्याप्यधृष्यत्वादेव कुमुदिनीकान्तस्य चन्द्रस्य कला किरीटे यस्य तस्य शङ्करस्य कार्मुकारोपणे

---

१. दक्षतैवेति पा० ।

**जनकः**—( स्वगतम्। )

यस्य ख्याता जगति सकले निस्तमिस्रा तपःश्री-
मिथ्योत्कण्ठः कथमिह भवेदेष गाधेस्तनूजः।
बालो रामः किमपि गहनं कार्मुकं चन्द्रमौले-
र्दोलारोहं कलयति मुहुस्तेन मे चित्तवृत्तिः॥ ३५॥

( पुनः पृथिवीमालोक्य। )

रतिरिव जननेत्रानन्दिनी नन्दिनी ते
कुसुमशर इवायं रूपसारः कुमारः।
यदि तु धनुरपीदं प्राप्तमेतस्य हस्तं
कुसुममयमिव स्यात्संभृतः संप्रदायः॥ ३६॥

**शतानन्दः**—राजर्षे, किमेतन्मूढ इव मुहुर्मुहुरालोकसे। अनुवर्तस्व महर्षेर्वचनम्।

**जनकः**—(प्रकाशम्।) अनुवृत्तमेव। ( रामं प्रति। ) वत्स, अनुष्ठीयतां गुरुवचनम्।

( राम उत्थाय परिकरं बध्नाति। )

( प्रविश्य। )

---

प्रीणतया कुशलतया सम्प्रीणय ( धूञ्प्रीञोरिति नुक् ) **जनकः**। **यस्येति**। यस्य ऋषेर्निस्तमिस्रा निर्दोषा तपसः कृच्छ्रादिकर्मणः श्रीः सम्पत् सकले जगति ख्याता एष गाधेस्तनूजो विश्वामित्रः इहास्मिन्धनुरारोपकर्मणि मिथ्योत्कण्ठः कथं भवेन्नैवेत्यर्थः। रामस्तु बालः चन्द्रमौले रुद्रस्य कार्मुकं किमप्यनिर्वचनीयं यथा तथा गहनं दुर्धर्षं तेन हेतुना मे चित्तवृत्तिर्मुहुर्मुहुर्वारंवारं दोलारोहं कलयति संशयं गाहत इति भावः। सन्देहालङ्कारः। मन्दाक्रान्ता वृत्तम्॥३५॥ **रतिरिति**। हे भूमे तव नन्दिनी सीता रतिरिव कामपत्नीव जननेत्रानन्दिनी, अयं कुमारो रामः कुसुमशर इव मदन इव रूपेण सारः श्रेष्ठः यदि एतस्य कुमारस्य हस्तं प्राप्तमिदं धनुः कुसुममयमिव प्रसूनप्रचुरमिव स्यात्तर्हि सम्प्रदायः मदनस्य रतिपत्नीकत्वं कुसुमधन्वत्वं चेति परंपरागता रीतिः(सम्प्रदायः स्यात्पारम्पर्यमिति हलायुधः।) सम्भृतः पूर्णः स्यात्। समसम्भावनालङ्कारौ समं स्याद्वर्णनं यत्र द्वयोरप्यनुरूपयोरिति लक्षणात्। मालिनी वृत्तम्॥३६॥ **जनकः** (प्रकाशम्) पूर्वपद्यद्वयेन स्वस्मिन्नेव विचारितमतः प्रकाशमिति गुरुवचनं विश्वामित्रोक्तम्। **रामः** परिकरं प्रगाढमात्रिकाव-

प्रतीहारी--जेदु जेदु देवो । को वि बम्हणो देवस्स दंसणत्थी दुआरदेसम्मि चिट्ठदि । ता किं पवेसीअदु ।

जनकः--आः, इदमपि किं जनकः प्रष्टव्यः ।

प्रतीहारी—तथा । ( इति निर्गत्य तेन सह प्रविशति । )

जनकः—ब्रह्मन्, प्रणम्यसे ।

मुनिः—राजन्, सुमतिर्भूयाः ।

जनकः--( स्वगतम् । ) अन्यादृशीयमाशीःपरिपाटी । भवतु । ( प्रकाशम् । ) मुने, इहास्यताम् ।

मुनिः--संदेशहरः खल्वस्मि ।

जनकः--कस्यायम् । कीदृशो वा संदेशः ।

मुनिः--

पीत्वा कज्जलकालिमानमखिल क्ष्मापालनारीदृशां
नीत्वा स्फीतयशोट्टहासमहसा लोकत्रयं शुभ्रताम् ।
चण्डीशं चरितैरनेकविभवैरद्यापि यः सेवते
हे वैदेह स जामदग्न्यपरशुस्त्वामेतदाभाषते ॥ ३७ ॥

---

१. जयतु जयतु देवः । को पि ब्राह्मणो देवस्य दर्शनार्थी द्वारदेशे तिष्ठति तत्किं प्रवेश्यताम् ।

---

न्धम् । प्रतीहारी द्वारपालिका । जनकः प्रष्टव्यः (व्रश्चभ्रस्जेति षत्वम् ) मुनिः सुमतिर्भूयाः आशिषि लिङ् । सुमतिरित्यनेन मद्वचनोल्लङ्घने मतिर्माभूदिति सूचितम् । जनकः आशीःपरिपाटी आशीर्वादक्रमः अन्यादृशी अपूर्वा । मुनिः । सन्देशं हरति प्रापयतीति सन्देशहरः (हरतेरनुद्यमनेऽजित्यच्) जनकः कस्यायं सन्देश इत्यर्थः । कीदृशः किंस्वरूपः । मुनिः । पीत्वेति । हे वैदेह यः क्ष्मापालानां भूपालानां या नार्यः स्त्रियः तासां दृशां लोचनानां अखिलं निःशेषं कज्जलकालिमानं पीत्वा तासां पतिनाशे शृङ्गारद्रव्यसंस्काराभावात् । कज्जलकालकूटमिति पाठे सुगमोऽर्थः । अनेन स्वस्वाम्यनुसृतिः सूचिता । स्फीतमभिवृद्धं यश एवाट्टहासः तस्य महसा तेजसा लोकानां भ्वादीनां त्रयं शुभ्रतां नीत्वा अनेके विभवाः दैत्यहननरुण्डमालाद्यर्पणरूपाः येषु तैश्चरितैश्चरित्रैश्चण्डीशं शङ्करमद्यापि सेवते । चरितैकदेशविभवैरितिपाठे चरितस्याऽनेकक्षत्रियशिरश्छेदनरूपस्य एको देशो भागः तस्य विभवै रुण्डमालाद्यर्पणरूपैः पूर्वच्छिन्नामितक्षत्रशिरःसङ्घमध्ये एकभागेनैवाद्यापि रुण्डमालाकरणादिना सेवत इति भावः । स जामदग्न्यपरशुः त्वामेतद्वक्ष्यमाणमाभाषते ब्रूते । पूर्वविशे-

---

१. शुभ्रतामिति । २. कज्जलकालकूटमिति ।

जनकः—( स्वगतम् । ) अहो गर्वाङ्कुरस्य वक्रता । भवतु । ( प्रकाशम् । ) किं तत् ।

मुनिः—

कस्मैचिद्देहि कन्यां नरपतिशिशवे दीर्घमायुर्लभस्व
व्यावर्तस्वाप्रियान्नः पुरमथनधनुःकर्षणालापपापात् ।
नो चेदन्योऽस्त्युपायस्तव कलुषमषीपङ्कसंक्षालनाया-
मस्मद्विस्तारिधाराञ्चलबहलपयःपूरदूरावगाहः ॥ ३८ ॥

जनकः—( विहस्य । ) तन्मयापि प्रतिसंदेशः कथनीयस्तस्य ।

मुनिः—कीदृशोऽसौ ।

जनकः—

त्वं मित्रं मम जामदग्न्यपरशो तेनैतदाभाष्यसे
संप्रत्येव यथाप्रतिश्रुतमियं कन्या मया दीयते ।

---

षणैः स्ववचनस्यानुल्लङ्घनीयत्वमुल्लङ्घने दण्डार्हत्वं च सूचितम् । परिकरालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥ जनकः । अहो आश्चर्ये । गर्वाङ्कुरस्य दर्पोद्भेदस्य वक्रता तत् यदाभाषते तत् किम् । मुनिः । कस्मैचिदिति । कस्मैचित् नरपते राज्ञः शिशवे कुमाराय कन्यां देहि । दीर्घं चिरन्तनमायुर्जीवितकालं लभस्व प्राप्नुहि । नोऽस्माकमप्रियात् पुरमथनस्य रुद्रस्य धनुषश्चापस्य यत्कर्षणं तस्यालापो भाषणं तद्रूपं यत्पापमेनस्तस्मान्निवर्तस्व विरमेत्यर्थः । धनुराकर्षणालापोऽपि यद्येनसे तदाचापाकर्षिणे वराय कुमारीं ददामीति प्रतिज्ञा तु किं वक्तव्येति भावः । नोचेत् तव कलुषमष्याः वृजिनकज्जलस्य यः पङ्कस्तस्य क्षालनायां शोधने अस्माकं विस्तारिण्यो विशालाः या धाराः निशितमुखानि तासामञ्चलेऽग्रे यानि बहलपयांसि तेषां पूरे दूरावगाहः दूरविलोडनरूपोऽन्यो उपायः साधनम् । अस्ति रूपककाव्यलिङ्गपर्यायोक्तालङ्काराः । स्रग्धरा वृत्तम् ॥ ३८ ॥ जनकः प्रतिसन्देशः प्रतिवचनम् जनकः । हेत्वमिति । जामदग्न्यपरशो त्वं मम मित्रं सखा तेन सखित्वहेतुना एतद्वक्ष्यमाणमाभाष्यसे उच्यसे सम्प्रत्येव इदानीमेव न तु कालान्तर इति भावः । मया जनकेनैव नान्येन प्रतिश्रुतं प्रतिज्ञामनतिक्रम्य वर्त्तत इति यथाप्रतिश्रुतं प्रतिज्ञानुसारेण नत्वालापमात्रेण इयं कन्या सीतवै नान्या ।

तेनेह स्वयमेत्य धूर्जटिधनुर्धौरेयदोःसंपदो
जामातुः पुरतश्चिराय भवता धाराजलं त्यज्यताम् ॥ ३९ ॥

**मुनिः**--तथास्तु । ( इति निष्क्रान्तः । )

**जनकः**—आङ्गिरसोपक्षिप्तस्तावदयं जामदग्न्येन निजकोपानल-स्फुलिङ्गः ।

**शतानन्दः**—किमेतावता । अतिगम्भीरभुजसारकासारकैरवारामः खलु रामः ।

**विश्वामित्रः**—राजर्षे, के पुनरमी परितः स्फुरन्मणिमौलयः परःसहस्रा दृश्यन्ते ।

**जनकः**—

श्रीकण्ठकार्मुकनिरस्तभुजावलेपा
नानादिगन्तजगतीपतयः किलामी ।
अभ्यर्थनां मम किमप्यभिवर्तमाना
गृह्णन्ति कानिचिदहानि नरेन्द्रपूजाम् ॥ ४० ॥

---

दीयते तेन स्वयमात्मनैव एत्यागत्य धूर्जटेः शङ्करस्य धनुषो धौरेया धूर्वहा (धुरोयड्ढकाविति ढक्) दोःसंपत् बाहुलक्ष्मीर्यस्य तस्य जामातुर्दुहितृपतेः पुरतोऽग्रे चिराय बहुकालं धाराजलं निशितमुखस्य जलं भवता जामदग्न्यपरशुनेवेत्यर्थः । नान्येन त्यज्यतां विसृज्यतां । कन्यादानवेलायां सङ्कल्पपूर्वकं वरहस्तेऽग्रे वा प्रतिगृह्यतामित्युक्त्वा यदा जलं विसृजामितदात्वं तत्कार्यं निर्वाहय मित्रत्वान्ममेति भावः ।अनेन रामस्य निरतिशयबाहुबलं तस्याग्रे परशोर्धिक्कारोऽपि व्यञ्जितः । मया भवतेत्यादिपदानामर्थान्तरसंक्रमितवाच्यत्वस्य सत्त्वात् अर्थान्तरसंक्रमितवाच्यध्वनिभेदः । शार्दूलविक्रीडितं वृत्तम् ॥ ३९ ॥ **जनकः** आंगिरस शतानन्द जामदग्न्येन निजकोपानलस्य क्रोधाग्नेः । स्फुलिङ्गः कणः उपक्षिप्तः । **शतानन्दः** । अतिगम्भीरौ समर्थौ भुजौ बाहू सारो बलं चेति द्वन्द्वः तावेव कासारकैरवे सरःकुमुदे तयोराराम उपवनं । कासारेत्यनेन जलपूर्णता कैरवेत्यनेन चन्द्रविकासिता तेन शीतलत्वमाभ्यां च महतोऽप्यग्नेः शान्तिः किं स्फुलिङ्गस्येति भावः । **विश्वामित्रः** ।सहस्रात्पराः परःसहस्राः ( पञ्चमीतियोगविभागात्समासः, राजदन्तादित्वात्परनिपातः, पारस्करादित्वात्सुट् ) । **जनकः** । **श्रीकण्ठेति** । श्रीकण्ठस्य शङ्करस्य कार्मुकेण धनुषा निरस्तः भुजावलेपः येषांते अमी नानादिगन्तानां जगतीपतयः राजानः किल ।

**विश्वामित्रः**—वत्स रामभद्र, तदेषामेव पश्यतां कौतुकमस्माकं पूरय ।

( रामो विश्वामित्रं प्रणम्य निष्क्रान्तः । )

**जनकः**—आङ्गिरसापरिशीलितसंनिवेशस्य वत्सरामस्य भवता प्रत्यनन्तरीभूयताम् । आदिश्यतां कञ्चुकी च करकलितकमलमालया जानक्याः स्वयंवराङ्गणावतरणाय ।

**शतानन्दः**—तथास्तु । ( इति निष्क्रान्तः । )

( प्रविश्य )

**कञ्चुकी**—जयतु देवः । अनुष्ठित एव देवादेशः ।

**विश्वामित्रः**—( विलोक्य । सहर्षम् । ) आः, कथमुद्गतमेव रामचन्द्रयशःपताकाकेतुदण्डेन हरकोदण्डेन । ( पुनः सविस्मयम् । ) अये,

राघवेण शिशुनापि किलायं
लीलयैव नमितो हरचापः ।
दूरमुल्लसति यस्य समन्ता-
दम्बरेऽपि गमितो गुणघोषः ॥ ४१ ॥

---

मम किमपि अनिर्वचनीयमभ्यर्थनां प्रार्थनां अनुवर्तमाना अनुसरन्तः सन्तः कानिचित्कियन्ति अहानि दिनानि नतु बहुकालमित्यर्थः ( कालाध्वनोरिति द्वितीया ) नरेन्द्रपूजां राजोचितां पूजां गृह्णन्ति । केचिन्नरेन्द्रेति विश्वामित्रसंबोधनमित्याहुः । वृत्त्यनुप्रासालङ्कारः । वसन्ततिलका वृत्तम् ॥ ४० ॥ **विश्वामित्रः** एतेषां पश्यतां पश्यतः एताननादृत्येत्यर्थः । (षष्ठी चानादर इति षष्ठी) **जनकः** आङ्गिरस शतानन्द अपरिशीलितः अज्ञात इति यावत् । सन्निवेशः धनुर्निवासस्थानं येन तस्य भवता प्रत्यनन्तरीभूयतां सहचरीभूयतां, स्थलादिप्रदर्शनायेति भावः । करेण कराभ्यां वा कलिता कमलमाला यया वीरस्वयंवराङ्गणे अवतरणाय आनयनाय । **विश्वामित्रः** । रामचन्द्रस्य यश एव पताका केतनं तस्याः केतुदण्डेन ध्वजदण्डरूपेण हरकोदण्डेन रुद्रचापेन । **राघवेणेति** । शिशुनापि डिम्भेनापि राघवेण रामेण लीलयैव क्रीडयैवायं हरचापो नमितः प्रह्वीकृतः । अम्बरेपि व्योम्न्यपि गमितो यस्य धनुषः स्वस्य च गुणस्य सिञ्जिन्याः शौर्यादेश्च घोषः शब्दः साधुवादश्च समन्तात्सर्वतो दूरं विप्रकृष्टं लसति प्रसरति । श्लेषविरोधाभासयोः संसृष्टिः । स्वागता वृत्तम् ॥ ४१ ॥

**लक्ष्मणः**—भगवन्, एवमेतत्। तथा हि।

पूर्णा एव पुरारिचापकपटच्छन्नाचलग्रामणी-
गूढानेकगुहागभीरकुहरस्फारप्रतिध्वानिभिः।
मौर्वीभूतभुजङ्गराजवदनश्रेणीविसर्पद्वचः-
प्रारब्धार्ययशःप्रशस्तिसदृशैर्ज्याघातघोषैर्दिशः॥ ४२॥

**जनकः**—आः, किमुच्यते दिशः पूर्णा इति। ननु

एतैः श्रीकण्ठकोदण्डचञ्चन्मौर्वीभवै रवैः।
चिरात्प्रतिज्ञया साकं पूर्णो मम मनोरथः॥ ४३॥

**प्रतीहारी**—( कञ्चुकिन प्रति।) अज्ज, पेक्ख पेक्ख कोदुहलम्। सीदारामेहिं मिलिअ उण हरचावारोवणं समग्गीकरीअदि।

**कञ्चुकी**—( सकौतुकम्।) कथमिव। ( विमृश्य विहस्य च।) आं ज्ञातम्।

करकिसलयलीलाचारुचण्डीशचापे
दशरथतनयेन स्वैरमाकृष्यमाणे।

१. आर्य, पश्य पश्य कौतुकम्। सीतारामाभ्यां मिलित्वा पुनर्हरचापारोपणं समग्रीक्रियते।

**लक्ष्मणः**|पूर्णा इति|पुरारेः शङ्करस्य चापकपटेन धनुर्मिषेण च्छन्नस्याचलग्रामण्यः पर्वतश्रेष्ठस्य हिमालयस्येति यावत्। गूढानां संवृतानामनेकगुहानां गभीरेषु कुहरेषु विवरेषु स्फारं प्रभूतं यथा तथा प्रतिध्वनन्ति तच्छीलास्तैः मौर्वीभूतस्य ज्याभूतस्य भुजङ्गराजस्य वासुकेः वदनश्रेण्या मुखपरम्परया विसर्पद्भिः प्रसरद्भिर्वचोभिः प्रारब्धाया आर्यस्य रामस्य यशसः प्रशस्तेः प्रशंसायाः सदृशैः समानैर्ज्याघातस्य शिञ्जिनीताडनस्य घोषैर्दिशः पूर्णा एव। अत्युक्तिरलङ्कारः। अत्युक्तिरद्भुतातथ्यशौर्यौदार्यादिवर्णनमिति लक्षणात्। शार्दूलविक्रीडितं वृत्तम्॥ ४२॥ **जनकः** आः क्रोधे। **एतैरिति**| श्रीकण्ठकोदण्डस्य शितिकण्ठधनुषः चञ्चन्मौर्व्याश्चलच्छिञ्जिन्या भवः उत्पत्तिः येषां तै रवैर्ध्वनिभिः कर्तृभिः मम मनोरथोऽभिलाषः प्रतिज्ञया साकं पूर्णः पूरितः। सहोक्तिरलङ्कारः सहोक्तिः सा सहार्थस्य बलादेकं द्विवाचकमिति लक्षणात्। श्लोकश्छन्दः॥ ४३॥ **कञ्चुकी**|**करेति**|दशरथस्य पङ्क्तिरथस्य तनयेन सूनुना करकिसलययोर्लीलया क्रीडया चारु रुचिरं यथा तथा चण्डीशचापे स्वैरं स्वच्छन्दमाकृष्यमाणे सति चारौ मनोहरे। चण्डीशचापे इति एकमेव पदम्। सीतया

र[1]भसरसविकासी सीतया पुङ्खितोऽसौ
कुवलयदलदामश्यामकान्तिः कटाक्षः ॥ ४४ ॥

लक्ष्मणः—भगवन्, अत्यद्भुतं वर्तते । नन्वयं

भिन्दन्निद्रां मुरारेः सकलभुजभृतां म्लानयञ्शौर्यदर्पं
छिन्दन्दिक्कुम्भिकर्णाञ्चलचलनकलां कम्पयन्कूर्मराजम् ।
आर्यश्लाघागभीरः प्रलयजलधरध्वानधिक्कारधीर-
ष्टाङ्कारः कृष्यमाणत्रिपुरहरधनुर्भङ्गभूराविरस्ति ॥ ४५ ॥

प्रतीहारी—

ते[1]ल्लोक्कं लङ्घअन्तो गिरिगहिरगुहासुत्तजग्गन्तसीह-
प्फारुम्मिल्लन्तकण्ठत्थणिदपडिरवुग्गारपूरिज्जमाणे ।

---

१. त्रैलोक्य लङ्घयन्गिरिगभीरगुहासुप्तजाग्रत्सिंह-
स्फारोन्मीलत्कण्ठस्तनितप्रतिरवोद्गारपूर्यमाणे ।

---

जानक्या रभसेन प्रीत्या रसेन चोभाभ्यां विकासी विकस्वरः कुवलयदलानामुत्पलानां दाम्न इव मालाया इव श्यामा कृष्णा कान्तिर्यस्य तादृशोऽसौ कटाक्षः । पुङ्खोऽस्यास्ति इति पुङ्खी बाणः तत्करोतीति ण्यन्तात्कर्मणिक्तः।बाणीकृतः।मालिनी वृत्तम्॥४४॥भिन्देति।मुरारेर्विष्णोर्निद्रां भिन्दन् विदारयन् सकलभुजभृतां सर्वबाहुशालिनां शौर्ये वीरत्वे किंवा शौर्यस्य दर्पमवलेपं म्लानयन् ग्लापयन् दिक्कुम्भिनां दिग्गजानाम् कर्णाञ्चलयोः कर्णाग्रयोः चलनकलां संचलनचातुर्यम् छिन्दन् प्रतिबन्धन् कूर्माणां राजेति कूर्मराजः राजाहःसखिभ्य इति टच् । तं कम्पयन् आर्यस्य रामस्य श्लाघया स्तुत्या गभीरः प्रलयजलधराणां पुष्करावर्तकानाम् । उक्तञ्च **ब्रह्माण्डपुराणे** अष्टपञ्चाशत्तमेऽध्याये । पुष्करावर्तकास्तेन कारणेनेह विश्रुताः । नानारूपधरास्ते तु महाघोरस्वनास्तथा। कल्पान्ते वृष्टिकर्तारः संवर्तामेर्नियामका इति । ध्वानधिक्कारे शब्दन्यक्कारे धीरः कृष्यमाणस्य त्रिपुरहरधनुषः शाम्भवचापस्य भङ्गाद्द्विधाभवनाद्भवतीति तथा टङ्कारः शब्दः आविरस्ति प्रादुर्भवति । समुच्चयालङ्कारः बहूनां युगपद्भावभाजां गुम्फः समुच्चयः।स्रग्धरा वृत्तम् ॥ ४५ ॥ **प्रतीहारी** । त्रैलोक्यं लोकत्रितयम् लङ्घयन्नुत्क्रामन् गिरिगभीरगुहासु अद्रिगम्भीरदरीषु पूर्वं सुप्तानां पश्चाज्जाग्रतां पूर्वकालैकेति समासः । सिंहानां स्फारं प्रभूतं यथा तथोन्मीलतः प्रसरतः कण्ठ-

---

१. रसेति पा० ।

ब्रह्मण्डे भज्जमाणे बहुविअडकडक्कारपब्भारभीमो
अम्मो भज्जन्तचण्डीसरधणुहटणक्कारओ उग्गमेई ॥ ४६ ॥

कञ्चुकी—पश्य कौतुकम् ।

क्रीडाभग्नमृगाङ्कमौलिधनुषं सीतार्पितां वक्षमा
बिभ्राणं कमलस्रजं निजगृहं शृङ्गारवीरश्रियोः ।
रामं व्रीडवशादवाञ्चितमुखं भूमीभुजां पश्यतां
चेतः क्रोधविषादविस्मयमुदामूर्मीः समालिङ्गति ॥ ४७ ॥

( प्रविश्य । )

शतानन्दः—राजर्षे, विषीद वा प्रसीद वा । इदं यथादृष्टमुपवर्ण्यते ।

ज्यावल्लीं ललिताङ्गुलीकिसलयैराकर्णमाकर्षतो
न भ्रूर्भङ्गुरतां गता रघुशिशोर्भग्नं धनुर्धूर्जटेः ।

---

१. ब्रह्माण्डे भज्यमाने बहुविकटकटत्कारप्राग्भारभीमो
हो भव्यश्चण्डीश्वरधनुष्टणत्कार उद्गच्छति ॥

---

स्तनितस्य गलगार्जितस्य प्रतिरवोद्गारेण प्रतिशब्दप्रादुर्भावेण पूर्यमाणे ब्रह्माण्डे भज्यमाने भग्ने बहुविकटानामतिकरालानां कटत्काराणां कटदितिशब्दानाम् प्राग्भारेण समूहेन भीमो भयदश्चण्डीश्वरधनुषः टंकारष्टात्कृतिरुद्गच्छति ब्रह्माण्डादपि ऊर्ध्वं गच्छति। अहो इति आश्चर्ये । अत्युक्तिरलङ्कारः । स्रग्धरा वृत्तम् ॥ ४६ ॥ **कञ्चुकी । क्रीडयेति ।** क्रीडया हेलया भग्नं द्विधाकृतम् मृगाङ्कमौलिधनुः शङ्करचापो येन सीतया जानक्या अर्पितां कण्ठे निक्षिप्तां कमलस्रजमम्बुजमालां वक्षसोरसा बिभ्राणं धारयन्तम्, शृङ्गारवीरश्रियोस्तदाख्यरससम्पत्त्योः निजगृहं स्वीयसदनम् व्रीडवशाल्लज्जावशात् अवाञ्चितमधःकृतं मुखं येन तं रामं पश्यताम् भूमीभुजां महीपतीनाम् चेतोंतःकरणम् क्रोधोस्माकं न मिलितेति विषादो दुःखम् तत एव विस्मयोऽनेन बालेनापि प्रचण्डभुजबलैस्तरुणैरप्यचलं धनुरारोप्य भग्नमपीति मुद् हर्षः सुकुमारयोर्योग्ययोः समागम इति तेषामूर्मीस्तरङ्गान्समूहानित्यर्थः । समालिङ्गति । यथासंख्यसमुच्चयालंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४७ ॥ **शतानन्दः** यथादृष्टं दृष्टानुसारेण ( यथार्थेऽव्ययीभावः ) **ज्यावल्लीमिति** । ललितैर्मनोहरैरंगुलीकिसलयैः ज्यावल्लीं सिञ्जिनीम् आकर्णं कर्णपर्यन्तमाकर्षतो रघुशिशोः भ्रूः दृगूर्ध्वरोमलेखा भङ्गुरतां वक्रतां न गता नाप, अपि तु धूर्जटेः पशुपतेर्धनुर्भग्नं दलितम् । अस्य रामस्य कण्ठे अहङ्कारेण दर्पेण तरङ्गितससम्भृतो ध्वानिः शब्दो नाभूत् ।

नाहंकारतरङ्गितो ध्वनिरभूत्कण्ठेऽस्य दीर्यद्धनु-
ष्टङ्कारस्तु चकार तारतरलः शब्दाद्वितीयं जगत् ॥ ४८ ॥

**जनकः**—कथं पुनरेतावतीमतिभूमिमवगाहमानोऽपि वत्सो रामभद्रो भवता न निवारितः ।

**शतानन्दः**—कथंकारं वारयामः ।

यावत्कन्दुकलाञ्छनाञ्चितकरः शोणाब्जनालाकृतिः
कौसल्यार्पितमङ्गलप्रतिसरो वत्सस्य दोःकन्दलः ।
किंचिच्चञ्चति तावदेव हि दलच्चण्डीशचापोच्छल-
च्छब्दैकार्णवमग्नमेतदखिलं जातं त्रिलोकीतलम् ॥ ४९ ॥

**जनकः**—तदलं कालातिपातेन । याच्यतामनुमतिर्भगवतो विश्वामित्रस्य जानकीरामभद्रयोः पाणिसंघट्टनाय ।

**शतानन्दः**—

सन्धौ[1] विघटमानेन धनुषैव पिनाकिनः ।
ननु संघट्टितौ पाणी जानकीरामभद्रयोः ॥ ५० ॥

---

तारिणात्युच्चरवेण तरलश्चञ्चलः दीर्यद्धनुषः भिद्यमानचापस्य टङ्कारस्तु ध्वनिस्तु जगद्भुवनम् शब्दान्न विद्यते द्वितीयं यस्मिंस्तादृशं जगत् चकार । परिसंख्यालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥ **शतानन्दः** कथंकारं (अन्यथैवंकथमित्थमिति णमुल्) कथमित्यर्थः । **यावदिति** । कन्दुकस्य गेन्दुकस्य शिशुक्रीडनकस्येत्यर्थः।लाञ्छनेनाङ्केनाञ्चितौ करौ यस्य सः शोणाब्जस्य रक्तोत्पलस्य यो नालस्तस्येवाकृतिर्यस्य श्यामवर्ण इति भावः । कौसल्यया राममात्रार्पितः मङ्गलप्रतिसरो मङ्गलसूत्रं यस्मै दोःकन्दलः कोमलबाहुः ( कन्दलस्तु नवाङ्कुर इति हैमः ) यावत्किञ्चित् ईषत् चञ्चति चलति तावदेव यावत्तावतावधिवाचकावत्र इदमखिलं समग्रं त्रिलोकीतलं लोकत्रितयस्थलम् दलतो भज्यमानाच्चण्डीशचापात् उच्छलन्नूर्ध्वं प्रसरन् शब्द एव एकार्णवः तस्मिन्मग्नं जातम् । अक्रमातिशयोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम्॥४९॥**जनकः** कालातिपातेन कालयापनेन, पाणिसंघट्टनाय पाणिग्रहणाय।**शतानन्दः**।**सन्धाविति** सन्धौ विघटमानेन भज्यमानेन पिनाकिनः पशुपतेः धनुषैव जानकीरामभद्रयोः पाणी संघट्टितौ मेलितौ पाणिग्रहणं कारितमिति भावः । नन्विति निश्चये । प्रहर्षणालङ्कारः । उत्कण्ठितार्थसंसिद्धिर्विना यत्नं प्रहर्षणमितिलक्षणात् ।श्लोकश्छन्दः॥५०॥

---

१. सम्यक्संघट्टमानेनेति पा० ।

तदूर्मिलालक्ष्मणयोरेव पाणिसंघट्टनाय भगवानभ्यर्थनीयः ।

**विश्वामित्रः**—(विहस्य ।) अस्त्वेतत् परं तु

पाणीञ्जनककन्यानां पीडयद्भिः सहानुजैः ॥
सीताया रामभद्रो मे पाणिपीडनमिच्छति ॥ ५१ ॥

**जनकः**—(सहर्षम् ।) कथं माण्डवीश्रुतकीर्तिभ्यां भरतशत्रुघ्नयोरपि परिणयमनुसंधत्ते भगवान् ।

**विश्वामित्रः**—अथ किम् ।

**जनकः**—तद्गृहीतमिदमधिशेखरमाज्ञाकुसुमं भगवतः । तदागच्छत । समीहितं निष्पादयामः ॥

( इति निष्क्रान्ताः सर्वे । )

## इति तृतीयोऽङ्कः ।

---

भगवान्विश्वामित्रः । **विश्वामित्रः** एतद्भवदुक्तमस्तु जनककन्यानां जनककुलोत्पन्नानां कन्यानामित्यर्थः । पाणीन्हस्तान्पीडयद्भिरनुजैः सह, रामभद्रः सीतायाः पाणिपीडनमिच्छति । श्लोकश्छन्दः ॥५१॥ **जनकः** माण्डवीश्रुतकीर्तिभ्यां जनकभ्रातृकुशध्वजतनयाभ्याम् भरतशत्रुघ्नयोः तन्नामरामभ्रात्रोः परिणयमुपयमम् । **जनकः** आज्ञैव कुसुम तदधिशेखरं शिरस्थितमाल्यायां गृहीतं शिरसा गृहीताज्ञ इति भावः । आपीडशेखरोत्तंसावतंसाः शिरसि स्रजीति शारदीनाममाला । निष्क्रान्ताः सर्वे ।

इति तृतीयोऽङ्कः ।

# चतुर्थोऽङ्कः ।

——:*:——

( नेपथ्ये ध्रुवा गीयते । )

मणिमयमङ्गलदीवो जणअनरेन्दस्स मण्डवे जलइ ।
चण्डाणिलो वि पत्तो जंस्सि विफलाअमो होइ ॥ १ ॥

( पुनर्नेपथ्ये । )

अरे क्षत्रियाः, अपसरत लोचनपथात् । नन्वयं कुर्वन्कोपादुदञ्चद्रविकिरणसटापाटलैर्दृष्टिपातै-

---

१. मणिमयमङ्गलदीपो जनकनरेन्द्रस्य मण्डपे ज्वलति ।
चण्डानिलोऽपि प्राप्तो यस्मिन्विफलागमो भवति ॥

---

## चतुर्थोऽङ्कः ।

अत्र तावच्चतुर्थाङ्कमारभमाणः कविः परशुरामप्रवेशादिकमर्थं चूलिकया सूचयति । चूलिकालक्षणन्तु **दशरूपके** । अन्तर्जवनिकासंस्थैश्चूलिकार्थस्य सूचनेति । **नेपथ्ये.** ध्रुवा तन्नामगीतिः । तल्लक्षणमाह **राजशेखरः** । ध्रुवा हि नाम नाट्यस्य प्रथमे प्राणाः । प्रथयति पात्रविशेषान् सामाजिकजनमनांसि रञ्जयति । अनुसन्दधाति च रसान्नाट्यविधाने ध्रुवा गीतिरिति । तथाचात्र रामपरशुरामपात्रविशेषौ प्रथ्येते । तदेव विशदयति । **मणिमयेति** । जनकनरेन्द्रस्य मण्डपे मणिमयः मणेर्विकारः मङ्गलदीपः मङ्गलाय दीपः मङ्गलसूचको वा ज्वलति । यस्मिन्दीपे चण्डानिलः प्रचण्डवायुः प्राप्तोपि विफलो निष्फल आगमः प्राप्तिर्यस्य तादृशो भवति । तैलदीपस्य चण्डानिलभीतिरस्य तु न तस्माद्भीतिरिति भावः । अत्र मङ्गलदीपशब्देन रामः, चण्डानिलशब्देन परशुरामश्च सूचितौ । यस्मिन्विफलागम इत्यनेन रामकृतपरशुरामपराजयो व्यञ्जितः। अनेन पताकास्थानकमुक्तम् । प्रस्तुतागन्तुभावस्य वस्तुनोन्योक्तिसूचकम् । पताकास्थानकं तुल्यसंविधानविशेषणमिति **दशरूपके** । समासोक्तिरलङ्कारः । समासोक्तिः परिस्फूर्तिः प्रस्तुतेऽप्रस्तुतस्य चेदिति लक्षणम् । आर्या वृत्तम् ॥ १॥ **पुनर्नेपथ्ये.** कोपाद्रोषात् उदञ्चत उदयमानस्य रवेः किरणा मयूखा एव सटा केसराःअथवा

---

१. विमलागम इति पाठः ।

रद्यापि क्षत्रकण्ठच्युतरुधिरसरित्सिक्तधारं कुठारम् ।
तीव्रैर्निःश्वासपातैः पुनरपि भुवनोत्पातमासूचयद्भि-
र्गर्जन्मौर्वीकचापस्त्रिभुवनविजयी जामदग्न्यः समेति ॥ २ ॥

( ततः प्रविशति जामदग्न्यः । )

जामदग्न्यः—( साटोपं परिक्रम्य । ) अहो धृष्टता जनकस्य । यदयं हरचापारोपणेन कन्यादानं प्रतिजानीते । ( परशुं विलोक्य । )

सकलनृपकठोरकण्ठपीठी-
बहलगलद्रुधिरौघधौतधारः ।
तदिदमजनकं जगद्विधत्ते
परशुरय जमदग्निनन्दनस्य ॥ ३ ॥

---

किरणा सटा इव ता इव पाटलैररुणै ( पाटलस्तथा ताम्र इति हलायुधः ) दृष्टिपातैर्नेत्रपातैः नेत्रस्थारुण्यस्य तत्पाते आरोपः । अद्यापि कुठारं परशुं क्षत्राणां क्षत्रियाणां ( क्षत्रः क्षत्रिय इति त्रिकाण्डशेषः ) कण्ठेभ्यश्च्युतानां गलितानां रुधिराणामसृजां सरिता धुन्या सिक्ता धारा निशितमुखं यस्य तं कुर्वन्, पुनरपि भुवनानां विष्टपानाम् उत्पातमशुभचिह्नं सूचयद्भिः पिशुनयद्भिः तीव्रैरुग्रैः ( तीव्रोग्रमुत्कटमिति धनञ्जयः ) निःश्वासपातैः श्वासोद्गमैरुपलक्षितः, गर्जन्ती ध्वनन्ती मौर्वी सिञ्जिनी यस्य ( नद्यृतश्चेति कप् ) तादृशश्चापो यस्य स त्रिभुवनविजयी लोकत्रयजेता, अयं जामदग्न्यः जमदग्निपुत्रः परशुरामः समेति, । अतः अरे क्षत्रियाः अस्य लोचनपथादपसरतेति पूर्ववाक्ये नान्वय । अत्र भयानको रसो व्यज्यते । परशुराम आलम्बनविभाव. । दृष्टिनिःश्वासपातादिकास्तु उद्दीपनविभावाः । शङ्कात्रासौ व्यभिचारिभावौ । लोचनपथादपसरतेति ससम्भ्रमवचन अनुभावः । एतैर्भयस्थायिभावो भयानको व्यक्त । परिकरवृत्त्यनुप्रासालङ्कारौ । स्रग्धरा वृत्तम् ॥ २ ॥ **जामदग्न्यः** । धृष्टता धैर्यम् । प्रतिजानीते आशृणोति । **सकलेति** । सकलनृपाणामखिलक्षत्रियाणां कठोरकण्ठपीठ्यः निष्ठुरगलस्थानानि ताभ्यो बहलगलताऽतिक्षरता रुधिरौघेण शोणितनिकरेण धौता क्षालिता धारा तीक्ष्णमुखं यस्य स जमदग्निनन्दनस्य परशुरामस्य अयं पुरोदृश्यमानः परशुः परश्वधः तदिदं जगद् अजनकं वैदेहरहितं विधत्ते करोति । रूपकालंकारः । पुष्पिताग्रा वृत्तम् ॥ ३ ॥

( विमृश्य । )

उदितोऽर्जुनभुजविपिने ज्वलितस्तुङ्गेषु नृपतिवंशेषु ।
निमिकुलकलमपलालं[1] कोपानल किं पुनः स्पृशसि ॥ ४ ॥

( पुनर्विचिन्त्य । ) अलमस्मिन्नुपेक्षया[2] । मनोरथोपनीतजामातृभुजबलावलेपदुर्ललितः खल्वयम्[3] । तथा हि । संदिष्टमनेनास्मत्परशोः । ('त्वं मित्रम्' ३।३९ इत्यादि पठति[4] । ) अहो अस्य दुरवलेपः ।

यस्योद्यद्घोरधाराञ्चलदलितगलद्बाहुशाखासहस्र-
प्रोद्गच्छद्रक्तधारानिवहजितनवोन्मीलदर्कांशुजालः ।
क्ष्मापालः कार्तवीर्यः सुरपुरसुदृशां पुष्पिताशोकशाखि-
भ्रान्तिं दत्त्वाऽपि चित्ते निजपुरसुदृशां शोकशाखी बभूव ॥ ५ ॥

---

विमृश्य विचार्य । **उदित इति**. अर्जुनस्य कार्तवीर्यस्य भुजा एव विपिनमरण्यं तस्मिन् उदित, उत्पन्न तुङ्गेषु उच्चेषु नृपतिवंशेषु पार्थिवकुलेषु अन्यत्र अर्जुनास्तन्नामकवृक्षा. भुजा इव तेषा विपिने अरण्ये नृपतय इव वंशा वेणवस्तेषु ज्वलितो दीप्तः निमिकुलं जनकपूर्वजकुलं तदेवकलमपलालः शालितृणगुच्छः तं पुनः किं किमर्थं स्पृशसि इति प्रश्न. । एतेन महावीर्यवतस्तव एतत्स्पर्शनमपि लाघवसंपादकमिति सूचितम् । श्लेषपर्यायविषमालङ्कारा· । आर्या वृत्तम् ॥ ४ ॥ मनोरथे संकल्पे उपनीत· आनीतो यो जामाता तस्य भुजयोर्बलावलेपेन पराक्रमगर्वेण दुर्ललित दुर्वृत्त· । देवादिदुर्धरहरचापारोपणकर्तृजामातुरग्रे परशुरामस्य का कथेत्यवलेप इति भावः। **त्वं मित्रमित्यादि।** त्व मित्रं इत्यादिधाराजलं त्यज्यतामित्यन्तं श्लोकम् । दुरवलेपो दुर्दर्पः युग्मेन परशुं प्रस्तौति। **यस्येति।** यस्य परशोः उद्यद्घोरधारायाः प्रस्फुरद्रौद्रनिशितमुखस्याञ्चलेनाग्रेण पूर्वं दलितं छिन्नं पश्चाद्गलत् । पूर्वकालैकेतिसमास । यत् बहवो भुजा एव शाखाः तासां सहस्रं, तस्मात्प्रोद्गच्छता वेगेनोत्प्लवतो रक्तधाराणां निवहेन समूहेन जितमभिभूतं नवोन्मीलतो नवोद्यतोऽर्कस्य भानोरंशुजालं गभस्तिवृन्दं येन स तथा, क्ष्मापाल. सुरपुरसुदृशां सुराङ्गनानां पुष्पितस्याऽशोकशाखिन· अशोकवृक्षस्य भ्रान्तिं दत्त्वापि, ऽनिजपुरसुदृशां स्वपौरवनितानां

---

१. कमलकलापमिति पाठः । २. अथवा अलमस्मिन्निति पाठः ।
३. खल्वसाविति पाठः । ४. इत्यादिपूर्वार्द्धस्यमिति पा० ।

अपि च ।

येनाबध्यत नर्मदाम्बुनिवहः संख्ये च लङ्केश्वर-
स्तद्यस्मिन्निरमज्जदर्जुनभुजक्षोणीरुहां मण्डलम् ।
क्षत्रस्त्रीनयनाम्बुपूरमिषतः खेलन्ति यत्केलय-
स्तत्तादृक्परशुर्ममायमधुना धाराजलं मुञ्चति ॥ ६ ॥

( विलोक्य । ) कथमयं शतानन्दशिष्यस्ताण्ड्यायनः ।

( प्रविश्य । )

**ताण्ड्यायनः**—भगवन्, अभिवादये ।

**जामदग्न्यः**—आयुष्मान्भूयाः । कथय तावत् । अपि नाम भवदुपाध्याययजमानस्य निवृत्ता हरचापारोपणश्रद्धा ।

**ताण्ड्यायनः**—निवृत्ता ।

**जामदग्न्यः**—( सहर्षम् । ) निवृत्ता ।

**ताण्ड्यायनः**—भगवन्, निवृत्ता सहैव चापेन ।

**जामदग्न्यः**—( ससंभ्रमम् । ) किमात्थ सहैव चापेन निवृत्तेति ।

**ताण्ड्यायनः**—अथ किम् ।

**जामदग्न्यः**—स्फुटं कथय तावत्किं वृत्तमिति ।

---

चित्ते शोकशाखी शोकतरुः, शोकफलद इति भावः । बभूव । प्रतीपसन्देहविरोधाभासालङ्काराः । स्रग्धरा वृत्तम् ॥ ५ ॥ **येनेति** । येन कार्तवीर्यभुजमण्डलेन नर्मदाम्बुनिवहः नर्मदाजलप्रवाहः अबध्यत अवारुध्यत, संख्ये युद्धे लङ्केश्वरो रावणश्च अबध्यत । तदर्जुनस्य सहस्रबाहोः, भुजा बाहव एव क्षोणीरुहस्तरवस्तेषां मण्डलं वृन्दं यस्मिन्धाराजले निरमज्जत्, यत्केलयः यस्य धाराजलस्य क्रीडाः क्षत्त्रस्त्रीणां नृपजायानां नयनाम्बुपूरस्याश्रुप्रवाहस्य मिषतः अपदेशात् खेलन्ति विलसन्ति तादृक् पूर्वोक्तगुणविशिष्टं तत् प्रसिद्धं धाराजलं ममायं परशुरधुना साम्प्रतं मुञ्चति । तुल्ययोगितापरिकरालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥ ( विलोक्य ) ताण्ड्यायन इत्यनेन तस्य प्रवेशः सूचितः । **जामदग्न्यः** । भवदुपाध्याययजमानस्य **जनकस्य** श्रद्धा काङ्क्षा ( श्र-

---

१ भन्यश्चेति पा० ।

**ताण्ड्यायनः**—कस्यचिद्

अखण्डचण्डिमोद्दण्डभुजदण्डनिपीडितम् ।
भगवन्भृगुमार्तण्ड भग्नं भर्गशरासनम् ॥ ७ ॥

**जामदग्न्यः**—( सक्रोधम् । ) कस्य ।

**ताण्ड्यायनः**—

सुबाहुमारीचपुरःसरा अमी
निशाचराः कौशिकयज्ञघातिनः ।
वशे स्थिता यस्य

**जामदग्न्यः**—अलमतः परम् । ज्ञातः खलु खलानामग्रणीर्निशाचरग्रामणीः ।

**ताण्ड्यायनः**—( स्वगतम् । ) कथं दशकण्ठेन धनुर्भग्नमिति प्रतीत भगवता । भवतु तावत् ।

**जामदग्न्यः**—( सक्रोधम् । ) अयमयमिदानी

नृपशतसुकुमारकण्ठनाली[1]
दलनकला[2]कुशलः परश्वधो मे ।
दशवदनकठोरकण्ठपीठी-
कदनविनोदविदग्धतां दधातु ॥ ९ ॥

---

द्वादरे च काङ्क्षायामिति मेदिनी)। **ताण्ड्यायनःअखण्डेति** । भगवन् भृगूणा तद्गोत्रस्थानां मार्तण्ड इव सूर्य इव भर्गस्य रुद्रस्य शरासनं धनुः कस्यापि पुरुषस्य अखण्डः पूर्णः चण्डिमा चण्डत्वं ययोस्ताभ्यामुद्दण्डाभ्यामुग्राभ्यां भुजदण्डाभ्यां निपीडितं सत् भग्नं विदलितम् । वृत्त्यनुप्रासालङ्कारः । श्लोकश्छन्द ॥७॥ **ताण्ड्यायनः** । **सुबाहुरिति** । सुबाहुमारीचौ तदाख्यौ राक्षसौ पुर सरावग्रेसरौ येषान्ते तथा, कौशिकस्य विश्वामित्रस्य यज्ञघातिनः मखान्तरायकर्तारो ये निशाचरा राक्षसा यस्य वशे स्थिता. अधीना. । **जामदग्न्यः** । खलानां दुर्जनानामग्रणीरग्रेसरो निशाचरग्रामणी राक्षसाधिपतिः । **ताण्डयायनः** । प्रतीतं विज्ञातम् । भगवता जामदग्न्येन । **जामदग्न्य** । **नृपशतेति** । नृपशतस्यासंख्यनृपाणां शतशब्दोऽसंख्यत्वोपलक्षकः । सुकुमाराः कोमलाः या कण्ठनाल्यः कण्ठनलिकास्तासां दलनकलायां कुशलः, मे परश्वधः परशुः दशवदनस्य

---

१. नालाविति पा० । २. कदनेति पा० ।

( विमृश्य । ) अथ वा ।

यः कर्तार्जुनभूरुहाद्भुतभुजाशाखासहस्रच्छिदां
दम्भोलेर्गिरिकूटपाटनपटोः शौण्डीयतो लज्जते ।
तस्यैतस्य परेतराजसदनद्वारः कुठारस्य मे
का श्लाघा दशकण्ठकण्ठकदलीकाण्डावलीखण्डने ॥१०॥

( पुनर्विचिन्त्य । ) तथाप्यनुचितमुदासितुमेतस्मिन्कृतागसि रक्षसि । तदिदानीं

दक्षिणस्याम्बुधेर्मध्ये कृत्वा कोङ्कणमष्टमम् ।
मद्बाणजन्मा दहनो लङ्कातङ्काय जायताम् ॥ ११ ॥

---

रावणस्य कठोरकण्ठपीठयाः निष्ठुरगलप्रदेशस्य कदनस्य मर्दनस्य यो विनोदस्तस्मिन् विदग्धतां कौशल्यम् दधातु धरतु । ( डुधाञ् धारणपोषणयोरित्यस्माज्जुहोत्यादेर्लोट् ) वृत्त्यनुप्रासालङ्कारः । पुष्पिताग्रा वृत्तम् ॥ ९ ॥ विमृश्य विचार्य । **य इति** । यो मत्परशुः अर्जुन एव कार्तवीर्य एव भूरुहस्तरुस्तस्याद्भुतभुजा एव शाखास्तासां सहस्रस्य दशशत्याः छिदां छेदनं,(षिद्भिदादिभ्य इत्यङ् ) कर्ता । ( न लोकाव्ययनिष्ठेति षष्ठीनिषेधः ) गिरिकूटस्याद्रिशृङ्गस्य पाटने विदारणे पटोः कुशलस्य दम्भोलेरशनेः शौण्डी चतुरता ( ष्यञन्ताच्छौण्डशब्दान्ङीष् ) यतः कुठारात् लज्जते । तदपेक्षयातिदुःसहत्वादित्याशयः । तस्यैतस्य परेतराजस्य अन्तकस्य सदनद्वारः गृहद्वारभूतस्य मे कुठारस्य दशकण्ठस्य कण्ठा एव कदलीकाण्डाः मोचास्तम्भास्तेषामावलीखण्डने पङ्क्तिविदारणे का श्लाघा न कापीत्यर्थः । काव्यार्थापत्त्यलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १० ॥ कृतागसि कृतापराधे । **दक्षिणस्येति** । मद्बाणाज्जन्म जनिर्यस्य स दहनोऽग्निः दक्षिणस्य दक्षिणदिग्भवस्याम्बुधेर्वारिधेर्मध्ये अन्तः कोङ्कणं तदाख्यदेशं अष्टमः अष्टमं द्वीपमित्यर्थः । सप्तद्वीपास्तु वारिधिवेष्टिताः प्रसिद्धा एव । ते च “ जम्बूः प्लक्षः शाल्मलिः कुशः क्रौञ्चः शाकः पुष्करश्चेति । तद्वेष्टनाः सप्तसमुद्रा अपि “क्षारेक्षुरसोदसुराघृतोदक्षीरोददधिमण्डोदशुद्धोदेति संज्ञिताः । एवञ्चैकैकद्वीपस्यैकैकसमुद्रावरणमिति सिद्धम् ।

---

१. कृत्वेति पाठः । २. शौण्डीर्यत इति पाठः ।

( इति साटोपं परिक्रामति। )

**ताण्ड्यायनः**—( स्वगतम्। ) दिष्ट्या स्वस्ति क्षत्रियकुलाय।

( नेपथ्ये। )

अहो नियोगिनः, कृतविवाहमङ्गलयोः सीतारामचन्द्रयोः स्वस्तिवाचनिका द्विजा आहूयन्ताम्।

**जामदग्न्यः**—( परिवृत्य। सक्रोधम्। ) आः ब्रह्मबन्धो, कथमलीकदशकण्ठकीर्तिदानेन प्रतारितोऽस्मि। नन्वयमन्यः कोऽपि जनकजामाता।

**ताण्ड्यायनः**—भगवन्, मम को वापराधः। ( अर्धोक्त एव। ) भगवता भ्रान्तम्। मयापि संभ्रान्तम्।

**जामदग्न्यः**—तन्निःशेषं तावत्कथय।

**ताण्ड्यायनः**—

शराग्रवर्तिनः

प्रतापलेशस्य गताः पराभवम् ॥ ८ ॥

( त[1]स्यैव 'अखण्डचण्डिमा' ४।७ इत्यादि पठति। )

**जामदग्न्यः**—कः पुनरयं मारीचदमनः।

**ताण्ड्यायनः**—

ये ऋष्यशृङ्गचरुभागभुवः कुमाराः

संजज्ञिरे दशरथस्य वधूजनेन।

---

लङ्काया दक्षिणदिश्यत्वात् तस्या आतङ्काय दक्षिणवारिधौ यदि स्थानं क्रियते तदा समन्ततो जलावृततया अष्टमो द्वीप एव सम्पन्न इति भावः। लङ्कातङ्काय लङ्कापीडायै जायतां भवतु ॥ ११ ॥ **नेपथ्ये**। स्वस्तीतिवाचनं येषामित्यत इनिठनाविति ठन्, ठस्येक इतीकः। द्विजा ब्राह्मणा आहूयन्ताम्। **जामदग्न्यः** ब्रह्मबन्धो दुष्टब्राह्मण अलीकाया अनृताया दशकण्ठकीर्तेर्यशसो दानेन प्रदानेन कथनेनेत्यर्थः। प्रतारितोस्मि वञ्चितोऽस्मि। **ताण्ड्यायनः**। पूर्वपठितश्लोकशेषं पूरयति **शराग्रेति**। यस्य शराग्रे वर्तिनः स्थितस्य प्रतापस्य लेशः अंशः तस्य वशे स्थिताः सन्तः पराभवं गताः। वंशस्थं वृत्तम्। **ताण्ड्यायनः**। **य इति**। **ऋष्यशृङ्गचरोः** तदाख्यमुनिहुतहव्यान्नस्य भागेभ्योऽशेभ्यः भवन्ति तादृशाः कुमाराः दशरथस्य वधूजनेन कौस

---

१. तथैवेति पाठः।

तेषामयं निरुपमः प्रथमः कुमारो
रामाभिधः कुशिकराजतनूजशिष्यः ॥ १२ ॥

**जामदग्न्यः**—( क्षणं विभाव्य । सामर्षम् । )

दुर्धर्षाः[1] सुरसिद्धकिंनरनरैस्त्यक्तक्रमं वक्रतां
प्राप्ते यत्र विधातरीव तरसा तिस्रोऽपि दग्धाः पुरः ।
तद्भग्नं यदि राघवेण शिशुना चण्डीपतेः कार्मुकं

**ताण्ड्यायनः**—( स्वगतम् । ) किमधुना वक्ष्यति ।

**जामदग्न्यः**—

तन्मग्नं कुलमेव तर्कय रघोर्मच्छस्त्रधाराम्भसि ॥ १३ ॥

**ताण्ड्यायनः**—संरब्धोऽयं भगवान् । तमिमं वृत्तान्तमुपाध्यायस्य कथयामि । ( इति निष्क्रान्तः । )

**जामदग्न्यः**—( नेपथ्याभिमुखं विलोक्य[2] । ) अभिनवविवाहमङ्गलतया तर्कयामि स एष रामः सानुज इति । ( सहर्षम् । निर्वर्ण्य । ) अर्धमुग्ध-

---

ल्यादिस्त्रीजनेन कर्त्रा, सर्ञ्जज्ञिरे उत्पन्नाः तेषां मध्ये ( निर्धारणे षष्ठी ) निरुपमोऽसदृशः कुशिकराजतनूजस्य विश्वामित्रस्य शिष्यः रामाभिध रामनामा प्रथमो ज्येष्ठ. कुमार· सोऽयमित्यर्थः। वसन्ततिलका वृत्तम्॥१२॥ **जामदग्न्यः**। **दुर्धर्षा इति** यत्र। यस्मिन् विधातरीव ब्रह्मणीव त्यक्तो विसृष्टः क्रम· परम्परागतसम्प्रदायो यथा स्यात्तथा कुटिलतां प्राप्ते सति । तासां दोषवशात् ब्रह्मा यथा वक्रो जातस्तथैवायं चापोऽतीव वक्रतां प्राप्त इति भाव.। अथवा त्यक्तक्रमं कुटिलता प्राप्ते विधातरीव यत्रेत्युत्प्रेक्षा । सुरा देवा· सिद्धकिन्नरा देवयोनिविशेषाः नराः प्रसिद्धा. तैर्दुर्धर्षा असह्या तिस्र· पुरः पुराणि तरसा वेगेन दग्धाः तत् चण्डीपतेः शङ्करस्य कार्मुकं शिशुना राघवेण यदि भग्नम् । **जामदग्न्यः** तत्तस्मात् रघोः कुलमेव मम शस्त्रस्य कुठारस्य धारैव धाराया वा अम्भस्तस्मिन् मग्नमेवान्तर्हितमेव। पूर्वार्धे उपमोत्प्रेक्षयोः सन्देहसङ्करः एकस्य च ग्रहे न्यायदोषाभावादनिश्चय इति **मम्मटाः** । उत्तरार्धे काव्यलिङ्गालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥१३॥ **ताण्ड्यायनः** भगवान् परशुरामः संरब्ध. क्रुद्धः, उपाध्यायस्य शतानन्दस्य । **जामदग्न्यः** अभिनवं नूतनं विवाहमङ्गलमुपयमकल्याणकर्म यस्य तस्य भावस्तत्ता तया ( तस्य भाव इति तल् ) स एष सानुजो राम

---

१ दुर्धर्षे इति पाठः । २. विलोक्येति पाठः ।

खल्वयं जनो यदेनं काम इति वक्तव्ये राम इति जल्पति । (पुनर्निर्वर्ण्य ।)

सौन्दर्यं मदनादपि प्रथयति प्रौढिप्रकर्षं पुरां
भेत्तारं मदनारिमप्यधरयत्युद्दामदोःक्रीडितम् ।
मुग्धत्वं मदनारिमौलिशशिनोऽप्युत्कर्षमालम्बते
मूर्तैस्तत्किमसौ रसैर्विरचितः शृङ्गारवीराद्भुतैः ॥ १४ ॥

( ततः प्रविशतो रामलक्ष्मणौ । )

**लक्ष्मण**.—( सकौतुकम् । )

मौर्वीं धनुस्तनुरियं च बिभर्ति मौञ्जीं
बाणाः कुशाश्च विलसन्ति करे शिताग्राः ।
धारोज्ज्वलः परशुरेष कमण्डलुश्च
तद्वीरशान्तरसयोः किमयं विकारः ॥ १५ ॥

---

इति तर्कयामि । अयं जनः सर्वो लोकः यद्यस्मात् एनं रामं काम इति वक्तव्ये राम इति जल्पति अतोऽर्धमुग्धः ककारस्थानेपि रेफो निक्षिप्त इत्यर्धमुग्धत्वम् **सौन्दर्यमिति**।अस्य। सौन्दर्यमङ्गसौष्ठवम्।(उक्तं च **मातृगुप्ताचार्यैः**।अङ्गप्रत्यङ्गकानां यः सन्निवेशो यथोचितम्।सुश्लिष्टसन्धिबन्धो यस्तत्सौन्दर्यमिति स्मृतमिति) मदनादपि प्रौढिः प्रकर्ष आधिक्यं प्रथयति ख्यापयति । उद्दामदोर्ष्णोरुत्कटभुजयोः क्रीडितं विलासः पुरा त्रिपुरस्य भेत्तारं नाशकं मदनारिमपि अधरयति तिरस्कुरुते ।मुग्धत्वं बाल्यं मदनारिमौलिशशिनोऽपि रुद्रशिरश्चन्द्रखण्डादपि उत्कर्षमालम्बते तत्तस्मादसौ रामः मूर्तैः शरीरवद्भिः शृङ्गारवीराद्भुतैस्तदाख्यरसैर्विरचितः किम् । यथासंख्यसारालङ्कारौ उत्तरोत्तरमुत्कर्षः सार इत्यभिधीयत इति लक्षणात् शार्दूलविक्रीडितं वृत्तम् ॥ १४ ॥ **लक्ष्मणः** । **मौर्वीमिति** । धनुश्चापो मौर्वीं बिभर्ति । अनेन युद्धसन्नाहो दर्शितः । इयं च तनुरपि मौञ्जीं मेखलां बिभर्ति । अनेन तपश्चरणसन्नाहो लक्षितः । एवमग्रेऽपि उभयथा योज्यानि । करे हस्ते शितं तीक्ष्णं अग्रं येषां ते बाणाः कुशादर्भाश्च धारायां निशितमुखे उज्ज्वलः दीप्तः एष परशुः, कमण्डलुपक्षे धारया जलासारेण उज्ज्वलः। करे इति करयोरुपलक्षणम् । हस्तयोर्विलसन्तीत्यर्थः । तत् तस्माद्वीरशान्तरसयोर्विकारः किमयमिति विस्मयः । तुल्ययोगिताश्लेषालङ्कारौ । वसन्ततिलका वृत्तम् ॥ १५ ॥

---

१. सिताग्रा इति पाठः । २. विवर्त इति पाठः ।

आर्य, किं पुनरिदं ब्रह्मक्षत्रवर्णात्मकं चित्रमिव स्फुरति ।

**रामः**—वत्स, न विदितं ते । नन्वयं स भगवान्भार्गवः

वेध्यं क्रौञ्चमहीधरस्य शिखरं देयं धरित्रीतलं
प्रत्यग्रक्षितिखण्डदण्डनविधिक्रीडाविधेयोऽम्बुधिः ।
जेयस्तारकसूदनो युधि करक्रीडाकुठारस्य च
च्छेद्यं यस्य बभूव हैहयपतेरुद्दामदोःकाननम् ॥ १६ ॥

**लक्ष्मणः**—तर्हि विस्मयनीयशीलोऽयं भगवान् ।

**रामः**—विस्मयनीयशीलानां शिखामणिरिति वक्तव्यम् । अयं हि

एकस्वर्णमहीधरां क्षितिमिमां स्वर्णैकशृङ्गी यथा
गामेकां प्रतिपाद्य कश्यपमुनौ न स्वात्मने श्लाघते ।
किञ्च क्रौञ्चगिरिं गिरीशतनयव्याविद्धशक्तिक्षतं
विद्ध्वा बाणगणैरुदारहृदयो वैलक्ष्यमालम्बते ॥ १७ ॥

---

**रामः** । **वेध्यमिति** । क्रौञ्चमहीधरस्य क्रौञ्चनामकगिरेः शिखरं शृङ्गं यस्य वेध्यं लक्ष्यं बभूव, धरित्रीतलं पृथ्वीतलं देयं दानार्हं बभूवेति सर्वत्र संबध्यते । अम्बुधिः समुद्रः प्रत्यग्रं नवीनं यत्क्षितिखण्डं भूशकलं भाग इति भावः । तस्य दण्डनविधिर्ग्रहणविधिः "गर्गाः शतं दण्ड्यन्तामित्यत्रेव दण्डधातुरत्रापि ग्रहणार्थः" । स एव क्रीडा तस्या विधेयः अधीनः, तारकसूदनः कार्तिकेयः युधि जेयः जेतुं योग्यः, हैहयपतेः कार्तवीर्यस्य उद्दामदोष एव काननं अरण्यं करे क्रीडार्थं यः कुठारस्तस्य छेद्यं बभूव, स नूनं स एवायं भार्गव इति पूर्ववाक्येन संबन्धः । तुल्ययोगितालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १६ ॥ **रामः** । **एकेति** । अयमिति पूर्ववाक्यादुपात्तम् । अयमुदारहृदयः परशुरामः हि स्वर्णस्य कनकस्य एकं शृङ्गं यस्याः तां ( नासिकोदरौष्ठेति ङीष् ) एकां गां यथा गामिव एकोऽद्वितीयः स्वर्णमहीधरः कनकगिरिर्यस्यां तामिमां क्षितिं कश्यपमुनौ प्रतिपाद्य दत्त्वा स्वात्मने स्वमित्यर्थः । न श्लाघते ( श्लाघह्नुङ्स्थाशपामिति संप्रदानसंज्ञायां चतुर्थी संप्रदाने इति चतुर्थी । किञ्च अपि च गिरीशतनयेन कार्तिकेयेन व्याविद्धया ताडितया शक्त्या तदाख्यायुधेन क्षतं व्रणं यस्य तं क्रौञ्चगिरिं क्रौञ्चाख्यशैलं बाणगणैः शरनिकरैर्विद्ध्वा वैलक्ष्यं लज्जामाल-

---

१. तनयस्येति पाठः ।

( उभौ परिक्रामतः । )

राम·—( अञ्जलिं बद्ध्वा । ) भगवन्, भृगुकुलशिरःशेखरशिखण्डक, एष सानुजस्य मे परमोन्नतिरमणीयपरिणामः प्रणाम· ।

जामदग्न्यः—समरविजयी भूयाः ।

रामः—भगवन् , भृगुकुलमौलिमाणिक्य, अनुगृहीतोऽस्मि ।

भार्गवः—( स्वगतम् । सकरुणम् । )

रामे चन्द्राभिरामे विनयवति शिशौ किं प्रकुप्यातिमात्रं

( विमृश्य । सक्रोधम् । )

हुं चापं चन्द्रमौलेश्चपलमतिरसाविक्षुभङ्गं बभञ्ज ।

( पुनः सानुक्रोशम् । )

बाला वैधव्यदीक्षां जनकनृपसुता नार्हतीयं मदस्त्रात्

( पुनर्विचिन्त्य । सामर्षम् । )

आः शान्तो मे कुठारः कथमयमधुना रेणुकाकण्ठशत्रुः ॥ १८ ॥

( प्रकाशम् । ) दाशरथे, इयमसौ मे त्वयि समुदाचारानुसारिणी वाग्वृत्तिरेव ।

---

म्बते । कार्तिकेयेन पूर्वं प्रणिताङ्गमेनं विद्ध्वा किं मम शौर्यमिति लज्जत इति भावः । विशेषोक्तिरलंकारः । शार्दूलविक्रीडितं वृत्तम् ॥ १७ ॥ **भार्गवः** ( स्वगतम् ) **राम इति** । चन्द्रवदभिरामे हृद्ये न केवलमभिरामेऽपि तु विनयवति नीतिमति शिशौ बाले नाद्यापि कृत्याकृत्यविवेकस्तस्येति भावः । तस्मिन् रामेऽतिमात्रमत्यन्तं प्रकुप्य क्रुद्ध्वापि किम् न किमपीत्यर्थः । ( विमृश्य ) विचार्य । सक्रोधम् हुमिति रुषोक्तौ । चपलमतिरविचारबुद्धिरसौ चन्द्रमौलेरीशस्य चापं कार्मुकमिक्षुभङ्गं बभञ्ज इक्षुमिव बभञ्ज । उपमाने कर्मणि चेत्यनेन णमुल् ) इक्षुदण्डमिति पाठे तु इवाध्याहारेण गम्योपमया वा व्यवस्थेयम् । ( पुनः सानुक्रोशम् ) । बालेयं जनकनृपसुता सीता मदस्त्रान्मात्रियुक्तास्त्राद्वैधव्यस्य दीक्षामुपदेशं नार्हति पुनर्विचिन्त्य सामर्षम् । आः कोपे, रेणुकायास्तदाख्यमातुः कण्ठशत्रुर्गलच्छेदक इति यावत् । मे कुठारः कथं शान्तः मातुः कण्ठच्छेदावसरेऽपि निर्घृणोऽयमिदानीं कथं दयां करोतीति कोपः । भावशबलोऽत्र व्यङ्ग्यः भावस्य शान्तिरुदयः सन्धिः शबलता तथेति **काव्यप्रकाशे**।स्रग्धरा वृत्तम् ॥१८॥( प्रकाशम् ) दाशरथे राम अत इत्यतीम् ।

---

१. इक्षुदण्डमिति पाठः ।२.

**रामः**— ( विहस्य । ) मनोवृत्तिस्तु कीदृशी ।

**भार्गवः**—

चण्डीशकार्मुकविमर्दविवर्धमान-
दर्पावलेपसविशेषविकाशभाजोः ।
बाह्वोस्तवाहमधुना मधुना समानै-
राराधयामि रुधिरैः कठिनं कुठारम् ॥ १९ ॥

**रामः**—भगवन्, निग्रहानुग्रहयोः स्वाधीनोऽयं जनः । परं ते कोपबीजं ज्ञातुमिच्छामि ।

**भार्गवः**—अहो दर्पान्धता यदात्मना कृतमस्माभिरुक्तमपि नावधारयति निजदुर्विनयम् । ननु रे,

येनोपदिष्टमद्यापि पुरस्त्रीविरहव्रतम् ।
न भग्नं तत्त्वया भग्नं जगद्गुरुशरासनम् ॥ २० ॥

---

इयं मयोक्ता समरविजयी भूया इति वाक् समुदाचारानुसारिणी शिष्टाचारानुसारिणी वाग्वृत्तिरेव भाषणव्यापारमात्रम् । मनसि न तथा वर्तत इति भावः **भार्गवः । चण्डीशेति** । अधुना साम्प्रतम् । चण्डीशकार्मुकस्य विमर्दैन भञ्जनेन विवर्धमानो यो दर्पोऽहङ्कारः स एवावलेपो भूषणं तेन ( अवलेपस्तु गर्वे स्याल्लेपने भूषणेऽपि चेति मेदिनी ) सविशेषं यथा तथा विकाशं शोभां भजतस्तौ तयोः ( भजो ण्विरिति ण्विप्रत्ययः ) तव बाह्वोः मधुना मद्येन समानैः सदृशैरुधिरैः काठिनं कुठारमाराधयामि पूजयामि । त्वां कुठारेण हन्मीति भावः । पर्यायोक्तालङ्कारः । वसन्ततिलका वृत्तम् ॥१९॥**रामः** निग्रहो नाशः अनुग्रह ईप्सितफलदानम् तयोर्द्वन्द्वः । **भार्गवः** निजदुर्विनयं स्वदुश्चेष्टितम् । नावधारयति । न निश्चिनोति । **येनेति** । येन धनुषा उपदिष्टं शिक्षितम् पुरस्त्रीणां त्रिपुरकामिनीनां विरह एव निजपतिवियोग एव व्रतं नियमः अद्यापि न भग्नम् तत् जगद्गुरोरीशस्य शरासनं धनुस्त्वया भग्नं खण्डितम् । अथवा जगति गुरु महदिति पृथक्पदं वा । इतोऽप्यन्यत्कोपबीजं

---

१ भुग्नमिति पाठः ।

**रामः**—भगवन्, अलीकलोकवार्तया निरपराधे मयि मुधा कोपकलङ्कितोऽसि ।

**भार्गवः**—तत्किं स्वस्ति हरकार्मुकाय ।

**रामः**—नहि नहि ।

**भार्गवः**—तत्कथं निरपराधोऽसि ।

**रामः**—

मया स्पृष्टं न वा स्पृष्टं कार्मुकं पुरवैरिणः ।
भगवन्नात्मनैवेदमभज्यत करोमि किम् ॥ २१ ॥

**भार्गवः**—आः, कथं रे चन्दनदिग्धं नाराच निधाय हृदयं मे शीतलयसि । तदलमनेन । ( कुठारमुद्यम्य । )

हे राम कामरिपुकार्मुकमर्मघात-
संजातपातक तवैष कठोरधारः ।
सीताकरव्यतिकरप्रतिकूलबन्धुः
कण्ठं पुरा विशतु निष्करुणः कुठारः ॥ २२ ॥

---

किमस्तीति भावः। पर्यायोक्तानुप्रासालङ्कारौ । श्लोकश्छन्दः॥२०॥ **रामः**। अलीकयाऽनृतया लोकवार्तया मुधा व्यर्थम् । कोपकलङ्कितोऽसि रोषलाञ्छितोसि । **भार्गव**।हरकार्मुकाय स्वस्ति क्षेमं किमिति प्रश्नः।(नमःस्वस्तिस्वाहेत्यनेन चतुर्थी) **रामः । मयेति** । भगवन्परशुराम पुरवैरिणो रुद्रस्य कार्मुकं चापः मया स्पृष्टं न वा स्पृष्टम् तावत् आत्मनैव स्वयमेवाभज्यत द्विधाऽभवत् ( भञ्जेः कर्मकर्तरि लङ् ) विभावनालङ्कारः, विभावना विनापि स्यात्कारणं कार्यजन्म चेदिति लक्षणात् । श्लोकश्छन्द. ॥ २१ ॥ **भार्गवः**। आः चन्दनेन दिग्धं लिप्तं नराचामतीति नराचः ( अन्येभ्योपीति डः, तत स्वार्थे प्रज्ञाद्यण् ) निधाय हृदयं शीतलयसि शीतं करोषि ( शीतलशब्दात्तत्करोतीति णिच् ) हे **रामेति.** कामरिपुकार्मुकस्य भञ्जनेन शङ्करधनुषः मर्मघातेन सञ्जातमुत्पन्नं पातकं यस्य तत्सम्बुद्धिः हे राम, सीतायाः करयोर्व्यतिकरस्य सम्बन्धस्य प्रतिकूलो विरुद्धो बन्धुरिव बान्धव इव बान्धवाः प्रतिकूलाश्चेत्तेषां द्वेषश्चिरस्थायी मर्मभेदी च भवतीति प्रसिद्धम् । कठोरा कठिना धारा यस्य निष्करुणो दयाशून्यः कुठारः

---

१. कर्मैति पाठः । २. बन्धेति पाठ. ।

तत्प्रवीरो भव ।

**रामः**—

हारः कण्ठं विशतु यदि वा तीक्ष्णधारः कुठारः
स्त्रीणां नेत्राण्यधिवसतु नः कज्जलं वा जलं वा ।
संपश्यामो ध्रुवमिह सुखं प्रेतभर्तुर्मुखं वा
यद्वा तद्वा भवतु न वयं ब्राह्मणेषु प्रवीराः ॥ २३ ॥

**जामदग्न्यः**—आः, कथं मामपि प्रणतिपात्रं ब्राह्मणमात्रमिव मन्यसे । ( पुनः सामर्षम् । )

जानीषे नहि जामदग्न्यमपि रे यद्दीर्घदोःकन्दल-
द्वन्द्वास्कन्दितबाहुना रणभुवि स्कन्देन मन्दौजसा ।
नाद्राक्षीर्भुजसंपदं मम कथं वक्त्रानुसारादिति
क्रुद्धेनोद्धतमैक्षि शंकरकरन्यस्तं विधातुः शिरः ॥ २४ ॥

---

परशु पुरा अल्पकाले तव कण्ठं विशतु । प्राप्तकाले लोट् । तत् तस्मात्प्रवीरो भव । काव्यलिङ्गालङ्कारः । वसन्ततिलका वृत्तम् ॥२२॥**राम । हार इति** हारो मुक्तावली, यदि वा पक्षान्तरे, तीक्ष्णा धारा यस्य तादृशः कुठारः कण्ठं प्रविशतु नः स्त्रीणां नेत्राणि नेत्रेष्वित्यर्थ । अधिशीङ्स्थासामिति कर्मत्वम् । कज्जलमञ्जनं वा अथवा जलं बाष्पमस्मद्धनननिमित्तमिति भाव । अधिवसतु इह भूलोके ध्रुवं निश्चलं सुखमथवा प्रेतभर्तुर्यमस्य मुख सम्पश्याम अस्माकं यद्वा तद्वा भवतु उक्तेष्वन्यतमद् यद्वेवत्तद्भवत्विति भावः । परन्तु वयं ब्राह्मणेषु प्रवीरा योद्धारः न । गूढार्थस्तु वयं क्षत्रियाः युद्धे सुखदुःखयोस्तुल्यत्वान्न बिभीमः ब्राह्मणप्रवीरास्तु युद्धवार्तामपि श्रुत्वा पलायन्त इति सूचितः। विकल्पालङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ २३ ॥ **जामदग्न्यः** प्रणतिपात्रं नमस्कृतियोग्यम्, ब्राह्मणमात्रं केवलब्राह्मणमित्यर्थः । अहन्तु धनुर्विद्यायामपि कुशल इति भावः । **जानीष इति** यस्य दीर्घयोर्विशालयोर्दोःकन्दलयोर्भुजस्तम्भयोर्द्वन्द्वेन युग्मेनास्कन्दितौ पातितौ बाहू यस्य तेन रणभुवि मन्दमोजस्तेजो यस्य तेन स्कन्देन मम वक्त्रानुसाराद्वदनसम्पत्त्यनुरोधात् भुजानां सम्पदं बाहुल्यरूपाम् कथं नाद्राक्षीर्न दृष्टवान् इति क्रुद्धेन सता शङ्करस्य करे न्यस्तं स्थापितम् विधातुर्ब्रह्मणः शिरो मस्तकम् उद्धतमुत्सिक्तं यथा तथा ऐक्षि ईक्षितम ।

---

१. प्रतिवीर इति पाठः । २. क्रुजेति पा०।

( पुनः सामर्षम्। ) किमात्थ रे, किमात्थ। 'न वयं ब्राह्मणेषु प्रवीराः' इति। कथं क्षत्रियजातिगर्वितो ब्राह्मणजातिं तृणाय मन्यसे। तदिदानीमावयोः का गरीयसीति सङ्ग्रामतुलैव निर्णेष्यते।

**रामः**—

भो ब्रह्मन्भवता समं न घटते संग्रामवार्तापि नः
सर्वे हीनबला वयं बलवतां यूयं स्थिता मूर्धनि।

**लक्ष्मणः**—जामदग्न्य, एवमेतत्।

यस्मादेकगुणं शरासनमिदं सुव्यक्तमुर्वीभुजा-
मस्माकं, भवतां पुनर्नवगुणं यज्ञोपवीतं बलम् ॥ २५ ॥

**रामः**—वत्स, अलमिह माननीये मुनौ दुर्विनयवैदग्ध्येन।

**जामदग्न्यः**—अस्य को दोषः।

दारैर्मुक्तकुचांशुकैः परिवृतं प्राचीनमेषां नृपं
नाहिंसीद्यदसौ कुठारहतकस्तस्यैतदुज्जृम्भितम्।

---

ईक्षतेः कर्मणि लुङ्, चिण्भावकर्मणोरिति चिण्। तादृशं जामदग्न्यमपि नहि जानीष इति प्रश्नः। छेकवृत्त्यनुप्रासावलङ्कारौ। शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥ ( पुनः सामर्षम् ) तृणाय मन्यसे तृणं जानासीत्यर्थः। मन्यकर्मण्यनादर इति चतुर्थी। का का जातिर्गरीयसी अतिगुर्वी ( द्विवचनविभज्येतीयमुनि प्रियस्थिरेति गरादेशः )। **रामः**। **भो इति**। ब्रह्मन् भवता त्वया समम्। सहयुक्त इति तृतीया। नोऽस्माकं संग्रामवार्तापि युद्धवृत्तान्तोऽपि न घटते न युज्यते, किमु साक्षात्संग्राम इति भावः। कारणं दर्शयति। वयं सर्वे क्षत्रिया इत्यर्थः। हीनबला नष्टपराक्रमाः। यूयं तु बलवतां प्रशस्तबलशालिनां मूर्धनि मस्तके उपरीत्यर्थः। स्थिताः अस्माद्धेतोरित्यर्थः। **लक्ष्मणः** एवमेतत् रामोक्तं सत्यमित्यर्थः। सत्यत्वमेव प्रथयति। यस्माद्धेतोरुर्वीभुजां राज्ञामस्माकं शरासनं धनुरेको गुणः सिञ्जिनी यस्य तादृशं सत् सुव्यक्तं प्रसिद्धम् भवतां ब्राह्मणानां बलं नव नवसङ्ख्याका नूतना वा गुणास्तन्तवः शौर्यादयश्च यस्य तादृशं यज्ञोपवीतम्। गुणशब्दश्लेषेणाधिक्यं द्योतितम्। गूढस्तु-यज्ञोपवीतमेव बलं नह्यन्यदस्तीति द्योत्यते। काव्यलिङ्गश्लेषावलङ्कारौ। शार्दूलविक्रीडितं वृत्तम् ॥२५॥ **रामः** दुर्विनयवैदग्ध्येनौद्धत्यचातुर्येण। **जामदग्न्यः**। **दारैरिति**। मुक्तं त्यक्तं कुचांशुकं कूर्पासकं यैस्तैर्दारैः स्त्रीभिः परिवृतं वेष्टितम्

यन्नारीकवचान्वयप्रणयिनां क्षत्राधमानामिमा
दुर्वाचः प्रविशन्ति मे श्रवणयोर्धिक्क्षत्रगोत्रे कृपाम् ॥ २६ ॥

रामः—अलमिह क्षीरकण्ठे कठोरकोपतया । तत्क्षम्यताम् ।

जामदग्न्यः—आः, किमुच्यते क्षीरकण्ठ इति । विषकण्ठः खल्वसौ ।

लक्ष्मणः—भगवन्, शितिकण्ठशिष्येण विशेषतः क्षन्तव्यम् ।

जामदग्न्यः—आः, कथं विषकण्ठनामसाम्येन त्वमपि मे गुरुः ।

लक्ष्मणः—( विहस्य । ) भगवन्, अन्याभिसंधानेन मयेदमुक्तं यत्किल

किरीटमधिरूढेऽपि बाले प्रालेयरोचिषि ।
शितिकण्ठस्य किं चित्ते धत्ते कोपाङ्कुरः पदम् ॥ २७ ॥

तद्भवांस्तदन्तेवासीति विशेषतः क्षन्तुमर्हति ।

---

एषां क्षत्रियाणां प्राचीनं नृपं मूलकनामानं पूर्वजं यद्यस्मात् असौ कुठारहतको नीचकुठारो नाहिंसीत् । तस्याहिंसनस्यैतत्कठोरवचनादि उज्जृम्भितं विलासः यत् नारीकवचस्य ( मूलकस्यैव परशुरामभीत्या स्त्रीषु निलीय स्थितत्वान्नारीकवचेति नामान्तरं सम्प्राप्तमिति नवमस्कन्धभागवतकथाऽत्रानुसन्धेया ) अन्वये वंशे प्रणयिनां प्रेमवतां तदुत्पन्नानामिति भावः । क्षत्राधमानामधमक्षत्रियाणामिमा उक्ता वक्ष्यमाणाश्च दुर्वाचो मर्मभेदकवचनानि मे श्रवणयोः कर्णयोः प्रविशन्ति अतः क्षत्रगोत्रे नृपवंशे कृपां दयां धिक् (उभसर्वतसोरित्यनेन धिग्योगे द्वितीया ) व्याजनिन्दालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २६ ॥ **रामः** क्षीरकण्ठे बाले कठोरकोपतया अलम् । **जामदग्न्यः** विषं गरलं कण्ठे यस्य तादृशः मर्मभेदनादिति भावः । **लक्ष्मणः** शितिकण्ठशिष्येण शङ्करच्छात्रेण अहं यदि विषकण्ठः शब्दसाम्याच्छङ्कर एव त्वं तु रुद्रशिष्योऽतो गुरूक्तं शिष्येण सर्वथा क्षन्तव्यमेवेति गूढाभिप्रायः । **जामदग्न्यः** लक्ष्मणोक्तगूढभावं ज्ञात्वा वदति । **आः कथमिति** । **लक्ष्मणः** अन्याभिसन्धानेनान्याभिप्रायेण । **किरीटमिति** । बाले शिशावल्पक इत्यर्थः । प्रालेयरोचिषि चन्द्रे किरीटं मुकुटमर्थाच्छङ्करस्येत्यर्थः । अधिरूढेऽप्यारूढवत्यपि शितिकण्ठस्य पशुपतेश्चित्ते कोपाङ्कुरो रोषोद्भेदः पदं स्थानं धत्ते किमिति प्रश्नः । अप्रस्तुतप्रशंसालङ्कारः । अप्रस्तुतप्रशंसा स्यात्सा यत्र प्रस्तुताश्रयेति तल्लक्षणात् । श्लोकश्छन्दः ॥ २७ ॥ तत्तस्माद्भवांस्तदन्ते-

जामदग्न्यः ( स्वगतम् । ) अहो अस्य क्षत्रियबटोर्वाक्परिपाटीपाटवम् । भवतु । ( प्रकाशम् । ) तदिदं क्षान्तमेव मया । अयं तु न क्षमते प्रकृतिकठोरः कुठारः । शीलं न वेत्सि कथमस्य ।

क्रीडाविनिर्मितसुदुर्मददोर्विलास-
निःशेषराजकवधस्य परश्वधस्य ।
कीलालकीकसकचैः परितो विचिंत्य
येन द्विधाऽपि विदधे पृथिवी त्रिवर्णा ॥ २८ ॥

( पुनः सामर्षम् । ) कथमस्य हरप्रसादपरशोः शीलमपरिशीलितं ते ।

यत्र क्रामति संगराङ्गणभुव दुर्वारधाराञ्चल-
क्षुण्णक्षत्रकिशोरकण्ठरुधिरैर्नीरेणुका भूरभूत् ।
तादृग्वीरैवरस्वयवरपरस्वर्लोककन्याकर-
क्रीडापुष्करदामरेणुभिरभूद् द्यौरेव रेणूत्कटा ॥ २९ ॥

---

वासीति शङ्करच्छात्र इति विशेषत आधिक्येन पूर्वं विषकण्ठशब्देन रुद्रसाम्यमप्यसहमानस्य जामदग्न्यस्य समाधानच्छलेन किरीटमिति पद्ये मम त्वच्छिरोवर्तित्वमपि त्वया सोढव्यमिति व्यञ्जितम् । जामदग्न्य अहो क्षत्रियबटोः लक्ष्मणस्य वाक्परिपाट्याः भाषणपरम्परायाः पाटवम् । अनेन लक्ष्मणगूढार्थोऽनेन ज्ञात इति सूचितम् । प्रकृत्या स्वभावेन कठोरो निष्ठुरः । क्रीडेति । क्रीडया हेलया निर्मितो रचितः सुदुर्मदोऽत्युद्दण्डो दोर्विलासो भुजपराक्रमो यस्य तादृशस्य निःशेषस्याखिलस्य राजकस्य नृपगणस्य वधो येन तस्य परश्वधस्य कुठारस्य शीलं स्वभावं कथं न वेत्सीति पूर्ववाक्येन सम्बन्धः । अतिप्रसिद्धमपि कथं न जानासीति भावः । येन कुठारेण परित आसमन्ताद्विचित्य सञ्चित्यार्थात्कीलालादीन् कीलालं रक्तं कीकसान्यस्थीनि कचाः केशाः इति द्वंद्वः तैः पृथिवी द्विधापि प्रकारद्वयेनापि त्रयो वर्णाः रक्तश्वेतकृष्णाः ब्राह्मणवैश्यशूद्राश्च यस्यां सा तथा विदधे चक्रे । निःशेषक्षत्रियहननादिति भाव । विरोधाभासालङ्कार वसन्ततिलका वृत्तम् ॥२८॥ ( पुनः सामर्षम् ) शीलं स्वभावः ते तव अपरिशीलितमविदितम् । यत्रेति । यत्र यस्मिन्परशौ सङ्गराङ्गणभुवं संग्रामप्रदेशं क्रामति चरति सति ( क्रमः परस्मैपदेष्विति दीर्घः ) दुर्वारेणापरिहार्येण धाराञ्चलेन निशितमुखाग्रेण क्षुण्णानां नाशितानां क्षत्रकिशोराणां कण्ठरुधिरैः भूर्भूमिः

---

१. विचिन्त्येति पाठः । २. त्रिधापीति पा० । ३. बालेति पाठः ।

**लक्ष्मणः**—भगवन्, एतत्सत्यम् । यत्किल भवत्कुठारधाराञ्चलविलसितेन नीरेणुका भूरभूदिति।

**जामदग्न्यः**—(स्वगतम्।) आः, कथं रेणुकावृत्तान्तेन मर्म विध्यति । भवतु।(प्रकाशम्।) अये क्षत्रियपोत, अलमिह निरपराधे भवति मुधा परश्वधपातेन । तदयं मे प्रकृतिकठोरभाषिणं भवत्कण्ठमेव शा[1]तयति कुठारः।

(नेपथ्ये।)

अये जामदग्न्य, कथमतिप्रगल्भसे । तदिदमिदानीं भवच्छासनाय शरासनमानीयते।

**जामदग्न्यः**—(विहस्य।) कथमयं जनकः। (उच्चैः।) अये याज्ञवल्क्यशिष्य, किं भवतः शरासनेन । पद्मासनमेवावलम्बस्व । (पुनः सोत्प्रासम्।)

---

निर्गता रेणवो धूलयो यस्याः (शेषाद्विभाषेति कप्) तादृश्यभूत्। समरोत्थिता धूली रक्तार्द्रतया भूमावेव निलीनेति भावः। तादृग्वीरा अनिर्वचनीयशूरास्त एव वरा अथवा वीरवराः शूरश्रेष्ठास्तेषां स्वयंवरे स्वयंवरणे पराणामासक्तानां स्वर्लोककन्यानां करेषु क्रीडा येषां तानि पुष्करदामानि कमलमालास्तेषा रेणुभिः परागैः द्यौरिवान्तरिक्षमेव रेणूत्कटा धूल्यतिशयवती अभूत्। परिसंख्याऽऽवृत्तिदीपकच्छेकवृत्त्यनुप्रासालङ्काराः। त्रिविधं दीपकावृत्तौ भवेदावृत्तिदीपकमिति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ २९ ॥ **लक्ष्मणः** भवत्कुठारधाराञ्चलेन त्वत्कुठारनिशितमुखाग्रेण। नीरेणुकेति सुगमोऽर्थः। गूढार्थस्तु निर्गता रेणुका तदाख्यमाता यस्या इति विग्रहेण बोध्यः। परशुरामेण स्वपरशुना मातृवधकरणात्। स्पष्टं चैतद् **भागवते** । **जामदग्न्यः** आ इति कोपे रेणुकावृत्तान्तेन गूढमन्मातृवृत्तान्तेन मर्म जीवस्थानम् निरपराधे धनुर्भङ्गरूपापराधरहिते भवति त्वयि मुधा वृथा परश्वधपातेनालम् । प्रकृत्या स्वभावेन कठोरं भाषते तच्छीलः तम्। **नेपथ्ये**। अतिप्रगल्भसेऽतिविकत्थसे। **जामदग्न्यः** याज्ञवल्क्यशिष्येति जनकसम्बोधनम् । अनेन युद्धयोग्यताभावः सूचितः । पद्मासनं तदाख्यमासनम् । (पुनः

---

१. पातयतीति पाठः।

युष्माकं भोः सुघटितबहुन्यस्तपद्माक्षकण्ठा
मित्थोत्कण्ठा किमिति समिति क्षत्रियश्रोत्रियाणाम् ।
तेऽन्ये चञ्चत्करतलचलच्चण्डनिस्त्रिंशधारा-
धौतारातिद्विपमदमषीपङ्कपूराः प्रवीराः ॥ ३० ॥

तदलं भवता । एतावेव तावत्क्षत्रियस्फुलिङ्गौ निर्वापयामि ।

(पुनर्नेपथ्ये ।)

अये जामदग्न्य, कथं तथा शमधनसमृद्धस्य जमदग्नेस्तनयोऽपि शमदुर्गतोऽसि संवृत्तः ।

**जामदग्न्यः**—कथमयमाङ्गिरसः । ( उच्चैः । ) अये शतानन्द, कथय तावत् । इदमेवंविधं शमाभिधानं कस्मात्पितुरुपागतम् । भगवतो गौतमाद्वा गोत्रभिदो वा ।

---

सोल्लासम् ) सोपहासमित्यर्थः । **युष्माकमिति** । भोः सम्बोधने, सुघटिता. संयोजिताः । बहुन्यस्ताः पद्माक्षाः कमलाक्षमालाः कण्ठे येषां ते तत्सम्बोधनम् । क्षत्रियाश्च ते श्रोत्रियाश्चेति विग्रह. । पूर्वं क्षत्रिया इदानीं श्रोत्रिया इति भाव· । पूर्वकालैकेत्यादिना समास. । तेषां युष्माकं समिति संयुगे मिथ्या मृषा उत्कण्ठा किमिति किमर्थम् । चञ्चत्सु चलत्सु करतलेषु चलता कम्पमानाना चण्डनिस्त्रिंशाना तीक्ष्णकृपाणानां धाराभिर्धौताः प्रक्षालिताः अरातिद्विपानां प्रत्यर्थिहस्तिनाम् , मदमषीपङ्कस्य पूरा ओघा यैस्ते प्रवीराः शूरतमा अन्ये न यूय तादृशाः केवलं यमनियमादिसाधनदक्षा एवेति भावः। काव्यलिङ्गच्छेकानुप्रासालङ्कारौ । मन्दाक्रान्ता वृत्तम् ॥ ३० ॥ क्षत्रियावेव स्फुलिङ्गावग्निकणौ एतावेव रामलक्ष्मणावेव निर्वापयामि शमयामि । स्फुलिङ्गशब्देन तेजस्वित्वं स्वसुशमत्वं च सूचितम् । **नेपथ्ये** । शमः शान्तिरेव धनं तेन समृद्धस्य परिपूर्णस्य शमदुर्गत· शान्तिहीनः। **जामदग्न्यः** एवंविधमेतादृशम् , शमाभिधानं शान्त्यभिख्यम् । धनमित्यर्थ· । भगवतः पूज्याद्गौतमात्तदाख्यपितुर्वाऽथवा गोत्रान्पर्वतान्भिनत्ति दारयति तथा तस्मादिन्द्राद्वा कस्मादुपागतमिति प्रश्नः। अनेन शतानन्दमातुरहल्याया इन्द्राभिसरणमुद्घाटितम्। उक्तञ्च **वाल्मीकीये** रामा० बा० ४८ सर्गे । तस्यान्तरं विदित्वा च सहस्राक्षः शचीपतिः । मुनिवेषधरो भूत्वा अहल्यामिदमब्रवीत् । ऋतुकालं

---

१. उपात्तमिति पाठः ।

(नेपथ्ये ।)

आः क्षत्रियापुत्र, निजजननीकण्ठताण्डवितकुठारकुलाङ्गार, कथं तपस्तुङ्गमाङ्गिरसमपि कुलं कलङ्कयसि ।

जामदग्न्यः—आः पाप कुलपांसन पांसुलापुत्र, कथं भृगूणामग्रे तपस्ताण्डवं मण्डयसि ।

रामः—भगवन्, सकललोकविख्यातमिदं भृगूणामङ्गिरसां च कुलम् । तपोविशेषतस्तु भर्गशिष्यस्य । अत एव विज्ञापयामि ।

तपः शान्तं चेतः स्फटिकमणिमालापरिकरः
कुशाः कुण्डी दण्डः सततमुटजावासनिरतिः ।
मुनीनामेतद्वः समुचितमुदग्रं न वचनं
न वक्रभ्रूभङ्गो न शरधनुषी नापि परशुः ॥ ३१ ॥

( पुनः सविस्मयम् । ) भवानेव तावद्विचारयतु ।

क्व परशुरशुभस्ते कुत्र गोत्रं पवित्रं
क्व नु धनुरिदमुग्रं निर्मलं कुत्र शीलम् ।

---

समीक्षन्ते नार्थिनः सुसमाहिते । सङ्गमं त्वहमिच्छामि त्वया सह सुमध्यमे । मुनिवेषं सहस्राक्षं विज्ञाय रघुनन्दन । मतिं चकार दुर्मेधा देवराजकुतूहलादिति । **नेपथ्ये** अरे क्षत्रियापुत्र अस्य मातू रेणुकायाः क्षत्रियाद्रेणुभिख्यादुत्पन्नत्वात्तथा सम्बोधनम् । निजायाः स्वीयाया जनन्या रेणुकायाः कण्ठे ताण्डवितो व्यापारितः कुठारो येन अत एव कुलाङ्गार वंशदाहक तपसा तुङ्गमुच्चमाङ्गिरसमङ्गिरऋषिसम्बन्धि कुलं मद्वंश कलङ्कयस्यपवादयसि । कलङ्कवच्छब्दाण्णिच् । **जामदग्न्यः** पांसुलायाः स्वैरिण्याः पुत्र । **रामः** भर्गशिष्यस्य रुद्रशिष्यस्य परशुरामस्य । **तप इति** । तपः कृच्छ्रादिकर्म शान्तं समाधानं चेतो हृदयं स्फटिकमणीनां माला जपमाला परिकरो विवेकः (भवेत्परिकर इत्युपक्रम्य समाचारविवेकयोरिति मेदिनी ) कुशा दर्भाः कुण्डी कमण्डलुः सततं सर्वदा उटजावासे पर्णशालावासे निरतिरासक्तिः एतत्पूर्वोक्तं मुनीनामृषीणां वः समुचितं योग्यं उदग्रमुच्चं मर्मभेदकमिति यावत् । वचनं न समुचितम् । वक्रस्य भ्रुवोश्च भङ्गः कौटिल्यम् । शरो बाणो धनुश्चाप इमौ परशुरपि कुठारोऽपि न समुचित इति प्रत्येकं सम्बन्धः । छेकानुप्राससमालङ्कारौ । शिखरिणी वृत्तम् ॥ ३१ ॥ **क्वेति** । अशुभोऽमङ्गलः परशुः क्व, ते तव पवित्रं पूतं गोत्रं कुलं च कुत्र । इदमुग्रं धनुः

घनसमरकराला कुत्र नाराचहेला
कुशकिसलयलीला कुत्र या पर्णशाला ॥ ३२ ॥

जामदग्न्यः—कथमन्यमिव मां प्रणतिपात्रं मुनिमात्रं मन्यसे । स एष जामदग्न्यः खल्वहं

क्षुण्णक्षत्त्रकिशोरकण्ठविगलत्कीलालधारासरि-
न्निर्वृत्ताभिषवस्य कृत्तशिरसां केशान्कुशान्कुर्वतः ।
गृह्णन्रक्तजलाञ्जलीन्पितृगणो यस्य क्षणं विस्मितः
संतोषेण जुगुप्सया करुणया त्रासेन हासेन च ॥ ३३ ॥

तदलमिदानीमपि

कृत्वा त्रिःसप्तकृत्वः समिति विशसनं पूर्वमुर्वीपतीनां
कृत्वाऽन्यत्सप्तकृत्वः पुनरपि कदनं दुर्मदानां नृपाणाम् ।

---

क, निर्मलं निष्कल्मषं शीलं सद्वर्तनं कुत्र । घनेन सान्द्रेण समरेण रणेन कराला भयप्रदा नाराचानां बाणानां लीला क्रीडा कुत्र। कुशकिसलयानां दर्भपल्लवानां लीला यस्यां सा पर्णशालोटजं कुत्र।परस्परमतिविरुद्धमिति भावः। भवानेव त्वमेव विचारयतु इति पूर्ववाक्येन सम्बन्धः। विषमालङ्कारः। मालिनी वृत्तम्॥ ३२ ॥**जामदग्न्यः**। मुनिमात्रं प्रणतिपात्रं नमस्कृत्यर्हम् । मुनिमात्रं केवलमुनिम्। **क्षुण्णेति**। क्षुण्णेभ्यश्छिन्नेभ्यः क्षत्रकठोरकण्ठेभ्यो विगलन्तीनां क्षरन्तीनां कीलालधाराणां शोणितसम्पातानाम्। सरिति नद्यां निर्वृत्तो निष्पन्नोऽभिषवः स्नानं यस्य (भवेदभिषवः स्नान इति मेदिनी) कृत्तानां छिन्नानां शिरसां मूर्ध्नां केशान् कुशान् दर्भान्कुर्वतो मे रक्तमेव जलमर्थात्क्षत्रियाणाम् । तस्याऽञ्जलीन् गृह्णन्पितृगणः क्षणं सन्तोषेणायमतिशयेन पितृभक्तो यतः पितृनिमित्तकमेवेदं कर्मानेन कृतमिति हर्षेण क्षणं जुगुप्सया मनुष्यरक्तमसंस्कृतं चेति निन्दया क्षणं करुणयाऽनेकहिंसादर्शनेन कृपया क्षणं त्रासेन रामाङ्के शत्रुप्रहारदर्शनजनितोद्वेगेन हासेन केशानां कुशीकरणं शोणितानां जलीकरणं चित्रं दृष्ट्वा हास्येन विस्मितः अपूर्वाद्भुतमनेन कृतमिति चित्रितोऽभूदिति भावः। भावशबलताऽत्र व्यज्यते। छेकानुप्रासोऽङ्गम्। शार्दूलविक्रीडितं वृत्तम्॥ ३३॥**कृत्वेति**। पूर्वमेतदपेक्षयेति भावः। उर्वीपतीनां राज्ञां समिति रणे विशसनं घातं त्रिर्वारत्रयं (द्वित्रिचतुर्भ्यः इति सुच्) सप्तकृत्वः सप्त वारान् (संख्यायाः क्रियाभ्यावृत्तीति कृत्वसुच्) त्रिरावृत्त्या सप्त वारान् मिलित्वा एकविंशतिवारमित्यर्थः। कृत्वा पुनरपि सप्तकृत्वः

---

१. मालेति पाठः । २ कठोरेति पाठः ।

निर्माय क्ष्मापतीनां प्रतिसमरहतैरुत्तमैरुत्तमाङ्गैः
कापालीमक्षमालां झटिति भगवतो भैरवस्यार्पयामि ॥ ३४ ॥

**राम**·—
प्रसीद त्वं रोषाद्विरम कुरु मे चेतसि गिरं
चिरं यत्सायासैर्बहुभिरिह वारैर्जितमभूत् ।
यशोवृत्तं वित्तं कितव इव विक्षोभतरल-
स्तदेतस्मिन्वारे भृगुतिलक मा हारय मुधा ॥ ३५ ॥

**जामदग्न्यः**—कथं रे हारयिष्यामि । ( विमृश्य । ) अथवा ।
किं नाम वाग्डम्बरपण्डितेषु
युष्मासु वाणीः प्रचुराः प्रयुञ्जे ।
बाणान्रिपुप्राणहरान्मदीया-
न्सर्वेऽपि यूयं सहिताः सहध्वम् ॥ ३६ ॥

---

सप्त वारान् दुर्मदानां मदोद्धतानां नृपाणां क्षत्रियाणामन्यत्पूर्वकृतैकविंशत्यावृत्तिकदनाद्भिन्नं कदनं कृत्वा समरं समरं प्रतिसमरमिति ( वीप्सायामव्ययीभाव· ) हतैश्छिन्नैरिति यावत् । क्ष्मापतीनां भूपतीनामुत्तमैरुत्तमाङ्गैः शिरोभिः कापालीं कपालसम्बन्धिनीम् ( तस्येदमित्यण् ) अक्षमालां रुद्राक्षमाला निर्माय रचयित्वा भगवत· षड्गुणैश्वर्यसम्पन्नस्य भैरवस्य रुद्रस्य झटिति द्राक् अर्पयामि ददामि । छेकानुप्रासालङ्कारः । स्रग्धरा वृत्तम् ॥३४॥ **रामः** प्रसीदेति भृगुतिलक परशुराम त्वं प्रसीद रोषाद्विरम विरतो भव मे मम गिरं वक्ष्यमाणामुक्तां च चेतसि कुरु मनसि विचारयेत्यर्थः । तद्दर्शयति **चिरमिति** । चिरं बहुकालं सायासैः सपरिश्रमैः बहुभिरनेकैर्वारैरावृत्तिभिरिह जगत्यां यद्यशोऽर्थात्क्षत्रियाणा जितमभूत् तत् यश. विक्षोभेण मदेन तरलः कितव उन्मत्तः ( कितवस्तु भवेन्मत्ते वञ्चके इति मेदिनी ) वृत्तं स्थितं वित्तं धनमिव एतस्मिन्वारे वृथा व्यर्थं मा हारय अर्थादन्यैर्मादृशैरिति भावः । उपमालङ्कारः । शिखरिणी वृत्तम् ॥३५॥ **जामदग्न्यः** । **किमिति** । वाग्डम्बरे वचनाटोपे पण्डितेषु युष्मासु प्रचुराः प्रभूताः वाणीर्वचनानि किंनाम प्रयुञ्जे रिपुप्राणहरान् शत्रुजीवघातकान् मदीयान् मत्संबन्धिनो बाणान् इषून्, सहिता

---

१. आयासैरिति पाठः । २. वित्तमिति पाठः । ३. वृत्तमिति पा० ।
४. तरलमिति पाठः ।

रामः—किमन्यैर्नन्वहमेव हरशरासनारोपणोपनीतजानकीकरकिसलयलीलानिहितकमलमालिकामिलदलिपटलकोलाहलसंगीतयशःपरिमलेन वक्षःस्थलेन सहिष्ये ।

जामदग्न्यः—

ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रस्त्वं कतरः स मे तव गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं
मन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥ ३७ ॥

रामः—(स्वगतम् ।) कथं भगवन्तं विश्वामित्रमधिक्षिपति । तदतःपरं न सहिष्ये । (प्रकाशम् ।)

ईशत्यक्तपुराणचापदलनप्रोद्भूतगर्वोद्धति-
व्यग्रोऽहं कतरः स ते मम गुरुः सोढुं न शक्तः शरान् ।
तुष्टादिष्टवरप्रदाद्भगवतः पद्मासनात्सादरं
त्वन्नाराचभयादयाचत किल ब्राह्मीं तनूं कौशिकः ॥ ३८ ॥

---

एकीभूता मिलिता इति यावत् । यूयं सर्वेपि सहध्वम् । छेकानुप्रासालङ्कारः । इन्द्रवज्रा वृत्तम् ॥ ३६ ॥ रामः अन्यैरितरैः किं किम्प्रयोजनमित्यर्थः । हरशरासनस्य आरोपणेन उपनीताया निकटागताया जानक्याः कराकिसलयाभ्यां, लीलया निहितायां स्थापिताया कमलमालिकायां मिलतामागतानामलीनां भ्रमराणां पटलस्य वृन्दस्य कोलाहलेन मुखरध्वनिना संगीतो वर्णितो यश परिमलो यस्य तेन वक्षःस्थलेन सहिष्ये । अहमेक एव नवप्रून्वक्षसा सहिष्ये किमन्यैरिति भावः । जामदग्न्य । ईशेति. समसिद्धः तव गुरुः कौशिकः विश्वामित्रः मे बाणान् सोढुं न शक्तः सन् तुष्टात् हृष्टादिष्टानीप्सितान्वरान् मनोरथान्प्रददातीति सः तस्मात् भगवतः पद्मं आसनं यस्य तस्मात् ब्रह्मणः, मन्नाराचभयात् सादरमादरयुक्तं यथा तथा ब्राह्मीं ब्राह्मणसंबन्धिनीं तनुमयाचत । ईशेन त्यक्तस्य दूरमुत्सृष्टस्य पुराणचापस्याऽति । जीर्णस्येति भावः । दलनेन भञ्जनेन प्रोद्भूतया प्रादुर्भूतया गर्वोद्धत्या दर्पोत्कर्षेण व्यग्र आकुलः त्वं कतर , कः पदार्थः । महतां तव गुरूणामीदृश्यवस्था शङ्करपरित्यक्तातिचिरन्तनजीर्णधनुर्भञ्जनवीरंमन्यस्य तव का कथेति भावः । काव्यार्थापत्त्यलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ३७ ॥ राम. जामदग्न्योक्तमेव पद्यं व्यग्रस्त्वमित्यत्र व्यग्रोऽहमिति स मे तव गुरुरित्यत्र स ते मम गुरुरिति, मन्नारा-

(इति पदव्यत्यासेन पुनः श्लोकं पठति। पुनः साटोपम्।) अये जामदग्न्य,

तत्कोदण्डं कुलिशकठिनं भग्नमेतेन भग्नं
मग्नं शल्यं तव हृदि महद्भग्नमेतावता किम्।
त्रैयक्षं वा भवतु यदि वा नाम नारायणीयं
नैतत्किंचिद्गणयति स मे दुर्मदो दोर्विलासः॥ ३९॥

**जामदग्न्यः**—(सहर्षम्।) साधु रे क्षत्रियपोत, साधु। यत्किल जामदग्न्यनाम्नश्चण्डधाम्नः पुरतः खद्योत इव विद्योतसे। किमात्थ रे किमात्थ।

**रामः**—[4] नन्विदं भूयोऽप्युच्यते। (पुनस्तदेव पठति।)

**जामदग्न्यः**—साधु स्मारितोऽस्मि।

**रामः**—किं तत्।

**जामदग्न्यः**—

कराघाताद्विष्णोस्तरलवनमालापरिमल-
भ्रमद्भृङ्गध्वानद्विगुणितविकासः समजनि।

---

चेत्यत्र त्वन्नाराचेति व्यत्यासेन पुनः पठितवान्। स्वगुरुविश्वामित्रनिन्दामसहमानस्यातिरोषाविर्भावचिह्नमिदम्। अलङ्कारादिकं पूर्वपद्योक्तमेव॥ ३८॥ **तत्कोदण्डमिति**। अये जामदग्न्य कुलिशवत् वज्रवत्कठिनं तत्प्रसिद्धं शाम्भवं कोदण्डं कार्मुकं भग्नं तदेतेन मम दोर्विलासेन भग्नम्। तव हृदि चेतसि महच्छल्यं शङ्कुः मग्नमवगाढमेतावतेयता किं भग्नं नष्टमित्यर्थः। त्र्यक्षस्य रुद्रस्येदं त्रैयक्षं (तस्येदमित्यण् नय्वाभ्यां पदान्ताभ्यामित्यैजागमः) वा अथवा नारायणस्य विष्णोरिदं नारायणीयम्। वृद्धाच्छ इति छः। नामेति सम्भावनायाम्। भवतु मे दुर्मदो दुरवलेपो दोर्विलासः एतत्सर्वं पूर्वोक्तम्। किञ्चिदीषदपि न गणयति। मन्दाक्रान्ता वृत्तम्॥ ३९॥ **जामदग्न्यः**। चण्डधाम्नः सूर्यस्य। **रामः**। पुनस्तदेव तत्कोदण्डमिति पूर्वोक्तपद्यमेव। **जामदग्न्यः**। **कराघातादिति**। यस्य धनुषः विष्णोर्नारायणस्य कराघाताद्धस्तसङ्घर्षात् तरलायाश्चञ्चलाया वनमालायास्तन्नामकमालायाः (तदुक्तमापादलम्बिनीं मालां वनमालां विदुर्बुधा इति) परिमलेन भ्रमतामितस्ततः सञ्चरमाणानां भृङ्गाणां ध्वानेन द्विगुणितः सञ्जातद्विगुणो विकाशः प्रकाशो यस्य स प्रसिद्धो ज्याघोषः सुररिपूणां दैत्यानां

---

१. भीममिति पाठः। २. महन्ममैतावतेति पाठः। ३. दुर्विलास इति पाठः ४. (तदेव पठतीति पाठः। ५. विकाश इति पाठः।

स यस्य ज्याघोषः सुररिपुवधूवर्गरुदित-
ध्वनिस्वाध्यायानां प्रणव इव तत्कार्मुकमिदम् ॥ ४० ॥

**रामः**—

करपङ्केरुहक्रोडे क्रीडितं येन शार्ङ्गिणः।

तदेतत्।

**जामदग्न्यः**—

अथ किं यदि शक्तोऽसि गृहाण विगृहाण वा ॥ ४१ ॥

**रामः**—गृह्णामि।

**जामदग्न्यः**—तदेहि। बाष्पायमाणभवद्बन्धुजनबन्धुरां वसुन्धरामतिक्रम्य समरक्षमां क्षमामवतरावः।

(इति निष्क्रान्तौ।)

**लक्ष्मणः**—(विलोक्य सहर्षं सकौतुकं च।)

मा शांभवं धनुरिवेदमपि प्रयातु
भङ्गप्रसङ्गमिति मन्दचलद्भुजेन।
आर्येण कार्मुकमपीदमहो सहेलं
चक्रीकृत भगवतो गरुडध्वजस्य ॥ ४२ ॥

---

वधूवर्गस्य कामिनीगणस्य रुदितध्वनय एव स्वाध्याया वेदाभ्यासास्तेषां प्रणव इव ओङ्कार इव। ओङ्कारो यथा वेदस्यारम्भक. तथा तासां रुदितारम्भको ज्याघोष इति भावः। समजनि। (दीपजनेति चिण्, जनिवध्योरित्युपधावृद्धिनिषेध·) तत् तदेवेदं मद्धस्ते दृश्यमानं कार्मुकम्। उत्प्रेक्षारूपकालङ्कारौ। शिखरिणी वृत्तम् ॥४०॥ **राम**·। **करेति**। येन धनुषा शार्ङ्गिणोऽच्युतस्य करपङ्केरुहयोर्हस्ताम्बुजयोः क्रोडेऽङ्के क्रीडितं विलसितम्। तदेतत्किमिति प्रश्नः। **जामदग्न्य** अथ किं तथैवेत्यर्थः। यदि शक्तोऽसि सन्धातुमित्यर्थ। तर्हि गृहाण धत्स्व। अथवा विगृहाण वा युध्यस्व वेत्यर्थः। (हलः श्नः शानज्झाविति शानजादेशः) श्लोकश्छन्द· ॥ ४१ ॥ **जामदग्न्यः** बाष्पायमाणैर्बाष्पमुद्वमद्भिः (बाष्पोष्मभ्यामिति क्यङ्) भवद्बन्धुजनैराप्तैर्जनकादिभिर्बन्धुरां व्याप्ताम्। अतिस्वजनसम्मर्दितामित्यर्थः। वसुन्धरां (संज्ञायां भृतॄवृजिधारीत्यनेन खच्, खचि ह्रस्व इत्येन ह्रस्वः) समरक्षमां रणयोग्यां क्षमां प्रदेशम्। **लक्ष्मणः**। **मेति**। शाम्भवं रौद्रं (तस्येदमित्यण्) धनुरिवेदमपि वैष्णवमपि भङ्गप्रसङ्गं विदारणप्रसङ्गम् मा यात्विति हेतोः मन्दं यथा तथा चलन्तौ भुजौ बाहू यस्य तेनार्येण रामेण भगवतो गरुडध्वजस्य विष्णोरि-

( नेपथ्ये । )

अहो कौतुकम् ।

उद्भिन्नश्चापचक्रादमरपरिवृतव्योमरन्ध्रावगाही
बाणोऽयं राघवस्य त्रिदशपुरगतिच्छेदकृद्भार्गवस्य ।
हंसीभूतः सुरस्त्रीकरकमलगलत्पुष्पसौरभ्यलुभ्य-
द्भृङ्गीसंगीतभङ्गीपरिचलितयशाः स्वर्गपर्यङ्कमेति ॥ ४३ ॥

( ततः प्रविशतो रामजामदग्न्यौ । )

जामदग्न्यः— ( रामं विलोक्य निर्वर्ण्य च स्वगतम् । )

त्रिलोकीकोकीय मुदमुदयतानेन लभते
विकाशं चादत्ते मुनिजनमनःपङ्कजवनम् ।
अये कोऽयं बालः कुवलयदलश्यामलतनु-
र्जगद्योनिर्ज्योतिः कथमिदमहो तत्परिणतम् ॥ ४४ ॥

---

दमपि कार्मुकं सहेलं सावज्ञं यथा तथा चक्रीकृतमाकृष्टमिति भावः। (अभूततद्भाव इति च्विः)। गम्योत्प्रेक्षाकाव्यलिङ्गावलङ्कारौ । वसन्ततिलका वृत्तम्॥४२॥ **उद्भिन्न इति**। चापश्चक्रमिवेत्युपमितसमासः। आकृष्टगुणाद्धनुष इति भावः। उद्भिन्नो निर्गतः अमरैः सुरैः परिवृतं कस्यायमिषुरस्मान्हन्तुमित प्रवर्तत इति सरभसं त्यक्तं व्योमरन्ध्रमवगाहते तच्छीलः भार्गवस्य परशुरामस्य त्रिदशपुरगतेः स्वर्गगमनस्य छेदकृत् भङ्गकृत्प्रतिबन्धकृदिति भावः। सुरस्त्रीणां निर्जरकामिनीनां करकमलेभ्यो गलता पुष्पाणां सौरभ्येण गन्धेन लुभ्यन्तीनां सतृष्णानां भृङ्गीणां सङ्गीतस्य भङ्ग्या शैल्या परिचलितमासमन्तात्प्रसृतं यशो यस्य येन वा तादृशः हंसीभूतः अहंसोऽपि हंसः सम्पन्नः व्योमरन्ध्रावगाहित्वादिति भावः। राघवस्याय बाणः स्वर्ग एव पर्यङ्कस्तमेति गच्छति। रूपकवृत्त्यनुप्रासावलङ्कारौ । स्रग्धरा वृत्तम्॥४३॥ **जामदग्न्य त्रिलोकीति**। उदयता प्रकाशमानेनानेनेयं त्रिलोकीकोकी त्रैलोक्यचक्रवाकी मुदं हर्षं लभते मुनिजनानामृषीणां मनश्चेत एव पङ्कजवनं विकाशं चादत्तेऽङ्गीकरोति। कुवलयदलमिव श्यामला तनुरङ्गं यस्य अयं बालो राम अये कः को भवेदिति विमर्शः। तेन बालरूपेण परिणतं जगतो योनिर्मूलकारणं ज्योतिः सूर्यरूपं कथमिदं भवेत् किम्। कथमित्यस्य सम्भावनार्थत्वात्। अहो इत्याश्चर्ये।

---

१. परिवृततेति पा० । २. परिरम्भितेति पा० । ३. बाधत्त इति पा० ।

( पुनर्विमृश्य । )

आपूरणाय पुरवैरिशरासनस्य
बाणात्मना परिणतः किल लीलया यः ।
आरोपणाय पुनरस्य स एव शङ्के
बालात्मना परिणतः पुरुषः पुराणः ॥ ४५ ॥

( प्रकाशम् । ) वत्स, इतः ।

( राम सलज्जमधोमुखस्तिष्ठति ।)

**जामदग्न्य.**—( उपसृत्य । रामस्य चिबुकमुन्नमय्य । ) किमिति लज्जास्थानम् ।

कमलबन्धुविलोचन यस्त्वया
स्वमहिमोन्नमनैरधरीकृतः ।
न किमसावधरीकुरुते नर-
स्त्रिदशकोटिकिरीटमणीनपि ॥ ४६ ॥

**रामः**—( अञ्जलिं बद्ध्वा । ) भगवन्, अलमनेन । दुर्विनयपङ्कमलिनीकृतमात्मानं तावद्भवच्चरणनखकिरणतरङ्गिणीजलेन क्षालयामि ।

चण्डमेव किल तिग्मरोचिषः
सौम्यमेव किल शीतरोचिषः ।

---

रूपकालङ्कार । शिखरिणी वृत्तम् ॥ ४४ ॥ **आपूरणायेति** । यो विष्णु पुरवैरिणो रुद्रस्य शरासनस्य चापस्यापूरणाय शरसन्धानपूरणाय लीलया बाणात्मना इषुस्वरूपेण परिणतः स एव पुराणः पुरुषः विष्णुरस्यारोपणाय पुनः बालात्मना परिणत इति शङ्के । उत्प्रेक्षालङ्कार । वसन्ततिलका वृत्तम् ।४५॥ **जामदग्न्यः** । **कमलेति** । कमलयोरम्बुरुहयोर्बन्धू सुहृदौ सदृशे इति यावत् । विलोचने यस्य तत्सम्बुद्धिः राम त्वया स्वस्य माहिम्नामुन्नमनैरूर्ध्वप्रसरणैर्यो नरो मल्लक्षणोऽधरीकृतोऽध.कृतः असौ नरो मल्लक्षणः त्रिदशानां कोटिः बहुत्वस्य कोटिरत्र बहुत्वोपलक्षकः । किरीटानां मणीनपि नाधरीकुरुते किमपि तु कुरुत एव । योऽहं सर्वनिर्जरमुकुटमणिलालितपादः प्रचण्डविक्रमस्तस्य मम पराजयस्तवौच्चयायैव हेतुः नत्वधरीकरणायातः किं तव लज्जास्थानमिति प्रश्नः । पर्यायोक्तालङ्कारः। द्रुतविलम्बित वृत्तम्, द्रुतविलम्बितमाह नभौ भराविति तल्लक्षणात् ॥४६॥**राम**. दुर्विनयस्यौद्धत्यस्य पङ्केन पापेन मलिनीकृतमात्मानम्। भवच्चरणनखानाम् । किरणा एव तरङ्गिणीजलम्। तेन क्षालयामि निर्मलीकरोमि।**चण्डमिति**। तिग्मरोचिषः सूर्यस्य महस्तेजश्चण्डमेवाग्रमेव शीतरोचिषश्चन्द्रस्य सौ-

चण्डसौम्यमिति कौतुकावहं
नौमि तावकमहह महन्महः ॥ ४७ ॥

( इति पादयोः पतति । )

**जामदग्न्यः**—अयि कल्याणनिधे, आशीरुक्तिरपि त्वयि पुनरुक्तिरेव । तथापीदमाशास्महे ।

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्राचण्डातप तप सहस्राणि शरदाम् ।
इयं चास्तां युष्मच्छरशमितलङ्केश्वरशिरः-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ४८ ॥

तदनुजानीहि माम् । ( इति निष्क्रान्तः । )

**रामः** (लक्ष्मणं प्रति । ) ननु कथं नयनपथमतिक्रान्त एव भगवान् । तदेहि । भृगुकुलतिलकवियोगखिन्नमात्मानं बन्धुजनविलोकनेन विनोदयावः ।

( इति निष्क्रान्ताः सर्वे । )

**इति चतुर्थोऽङ्कः ।**

---

म्यमेवानुग्रमेव । चण्डं च तत् सौम्यं चेति विशेषणोभयपदः कर्मधारयः। इति हेतोः कौतुकावहं कुतूहलकारि । तवेदं तावकं ( तवकममकाविति तवकादेशः) महत् गुरु महस्तेजो नौमि । काव्यलिङ्गव्यतिरेकवृत्त्यनुप्रासालङ्काराः । रथोद्धता वृत्तम् ॥ ४७ ॥ **जामदग्न्यः** । आशीरुक्तिराशीर्वादः पुनरुक्तिरेव स्थितस्यैव पुनरनुवादो नत्वपूर्व इति भावः । आशास्महे इच्छामः । **यश इति** । यशःपूरं कीर्तिप्रवाहं दूरं दूरदेशपर्यन्तं तनु विस्तारय । सुतनोः सीताया नेत्रे एवोत्पलवनी कमलकाननं तस्या या तमसा शोकेन ( तमो ध्वान्ते गुणे शोक इति मेदिनी ) तन्द्रा मीलनं तस्याश्चण्डातपेति रामसम्बोधनम् । शरदां वर्षाणां सहस्राणि तप शत्रूनिति शेषः । इयं त्रिजगती लोकत्रयी युष्मच्छरैः शमितैश्छिन्नैः लङ्केश्वरशिरोभिः रावणमस्तकैः श्रित उत्सङ्गोऽङ्को यस्या अत एव नन्दन्तो मोदमानाः सुरनरभुजङ्गा देवमनुष्यसर्पा यस्यां तादृशी आस्ताम् । यथासंख्यमलङ्कारः । शिखरिणी वृत्तम् ॥ ४८ ॥ इति निष्क्रान्ताः सर्वे ।

**इति चतुर्थोऽङ्कः ।**

---

# पञ्चमोऽङ्कः ।

——:*:——

( ततः प्रविशतो गङ्गायमुने । )

**गङ्गा**—सखि कालिन्दि, किमिति दुर्मनायसे ।

**यमुना**—[1]भअवदि भाईरहि, अत्थि काल्णम् ।

**गङ्गा**—कीदृशं तत् ।

**यमुना**—[2]एक्कं दाव । अत्थि मह भादा सुग्गीवो त्ति ।

**गङ्गा** ( सकौतुकम् । आत्मगतम् । ) अये, कथमस्याः कपिकुलोत्पन्नोऽप्ययं भ्राता । ( विमृश्य । ) उपपन्नमिदम् । अनयोः खल्वेक एवायं सविता प्रसविता । ( प्रकाशम् । ) अथ किं तस्य ।

**यमुना**—[3]सोतिबलिट्ठेण दुट्ठबलीमुहेण वालिणामहेएण परिहूदो एक्कदुग्गमत्तसरणो कइपअपरिवारो चिट्ठदि ।

---

१. भगवति भागीरथि, अस्ति कारणम् ।

२. एकं तावत् । अस्ति मम भ्राता सुग्रीव इति ।

३. सोऽतिबलिष्ठेन दुष्टवलीमुखेन वालिनामधेयेन परिभूत एकदुर्गमात्रशरणः कतिपयपरिवारस्तिष्ठति ।

---

पञ्चमोऽङ्कः ।

इह कविर्जयदेवो रामारण्यवासादिकथां दिदर्शयिषुरपि नायकाऽनुचितवस्तुनोऽङ्के अदर्शनस्योक्तत्वात्सूच्या दर्शयति । उक्तञ्च **साहित्यदर्पणे** । यत्स्यादनुचितं कर्म नायकस्य रसस्य वा । विरुद्धं तत्परित्याज्यमन्यथा वा प्रकल्पयेदिति । अङ्केष्वदर्शनीया या वक्तव्यैव च संमतेति च । **गङ्गा** । किमिति कस्माद्धेतोः दुर्मनायसे दुर्मना इवाचरसि ( कर्तुः क्यङिति क्यङ्सलोपौ ) । **यमुना** । एकमित्यनेन द्वितीयमपि कारणं वर्तत इति सूचितम् । **गङ्गा** । कपीनां कुलोत्पन्नोऽप्ययं सुग्रीवः कथं भ्राता । विजातीयत्वात्कौतुकम् । इदं भ्रातृत्वमुपपन्नं युक्तम् । अनयोः यमुनासुग्रीवयोः सविता सूर्यः एक एव प्रसविता उत्पादकः । अथ तस्य किं, जातमिति शेषः । **यमुना** । अतिबलिष्ठेन अतिबलवता दुष्टवलीमुखेन दुष्टवानरेण, वालीति नामधेयं नाम यस्य तेन अभिभूतः पराजितः, एकदुर्गं एव एकदुर्गमात्रं तच्छरणं

---

१. न्नोऽपि भ्रातेति पाठः ।

गङ्गा—नन्विमावपि भ्रातरौ । तत्किमनयोरीदृशं वैरायितम् । (इत्यर्धोक्त एव ।) अथवा 'एकामिषाभिलाषो हि बीजं वैरमहातरोः' इति ख्यातमेतत् । तत्किमनेन । द्वितीयमपि कारणं कथय तावत् ।

यमुना—कस्सिंपि[1] दिअहे गहीअतवस्सा विअ मम्महवसन्ता दोवि तरुणा जडाहरा एक्का चक्कवाकत्थणी चन्दवअणा मं उत्तरिअ दक्खिणं चलिदुं उवक्कन्ता ।

गङ्गा—ततस्ततः ।

यमुना—तदो[2] अ तीए खणं विलम्बिअ पणमिअ मुउलिअकरकमलजुअलाए अहमेरिसं विण्णत्ता—'अयि देवि दिणअरणन्दिणि, पुणोवि णिअकुडुम्बस्स दंसणप्पसादं करेसु' त्ति ।

---

१. कस्मिन्नपि दिवसे गृहीततपस्याविव मन्मथवसन्तौ द्वावपि तरुणौ जटाधरौ एका चक्रवाकस्तनी चन्द्रवदना मामुत्तीर्य दक्षिणं चलितुमुपक्रान्ताः ।

२. ततश्च तया क्षणं विलम्ब्य प्रणम्य मुकुलितकरकमलयुगलयाहमीदृशं विज्ञप्ता—'अयि देवि दिनकरनन्दिनि, पुनरपि निजकुटुम्बस्य दर्शनप्रसादं कुरुष्व' इति ।

---

रक्षितृ गृहं वा यस्य, कतिपये कियन्तः हनुमदादयः परिवाराः परिजना यस्य तादृशः तिष्ठति । **गङ्गा** । इमावपि वालिसुग्रीवावपि, ईदृशमतिशयमित्यर्थः । वैरायितं वैरकरणम् । (शब्दवैरकलहेति क्यङन्ताद्भावे क्तः) एकेति । एकं यदामिषं भोग्यवस्तु तस्याभिलाषः, वैरमेव महातरुः तस्य बीजं कारणम्, इत्येतत् ख्यातं प्रसिद्धम् । अतः तादृशं किमपि स्यादिति भावः । कारणं दुर्मनायमानताया इति शेषः । **यमुना** । गृहीता तपस्या तपश्चरणं याभ्यां तौ (कर्मणो रोमन्थतपोभ्यामिति क्यङ् । अप्रत्ययादित्यः ।) मन्मथो मदनः वसन्तश्च ताविव अतिरमणीयाविति भावः । जटाया. धरावित्यच्प्रत्ययान्तेन समासः । अन्यथाऽणि जटाधाराविति स्यात् । चक्रवाकाविव स्तनौ यस्याः । दक्षिणं दक्षिणदिक्प्रदेशम्, उपक्रान्ता. प्रवृत्ताः । **यमुना** । तया चक्रवाकस्तन्या क्षणं घटिकाषष्ठभागं विलम्ब्य स्थित्वा, मुकुलीकृतं कुड्मलीकृतं करकमलस्य युगलं यथा तथा सत्या प्रणम्य नमस्कृत्य, ईदृशं वक्ष्यमाणं विज्ञप्ता प्रार्थिता । अयीत्यनुनये । दिनकरनन्दिनि सूर्यतनये, निजकुटुम्बस्य स्वजनस्य । यमुनायाः सूर्यपुत्रीत्वाद्दशरथवंशस्यापि

**गङ्गा**—तत्कथं संभावयसि ।

**यमुना**—( गङ्गायाः कर्णे । ) एवमेवम्[1] ।

**गङ्गा**—असंभावनीयमिदम् । तन्नूनमावर्तशतभ्रमितहृदया किमप्यलीकमनुभूतवती । ( विमृश्य । ) अथवा को जानाति विधेः संविधानवैदग्ध्यम् ।

**यमुना**—जइ संवुत्तो ता कहं भअवदीए ण गोअरो इमो वुत्तन्तो ।

**गङ्गा**—न किंचिदेतत् । मया हि ब्रह्मलोकादागतायाः सरस्वत्याः समागमसुखव्यग्रचित्तया स्थितम् । तदेहि । इयमदूरे सरयूः । तेन हि तन्मुखादेव निरूपयावः ।

( इति परिक्रामतः । )

---

१. एवमेवम् ।

२. यदि संवृत्तस्तत्कथ भगवत्या न गोचरोऽयं वृत्तान्तः ।

---

सूर्यवंशोत्पन्नत्वात्स्वजनत्वमिति भावः । पुनरपि दर्शनप्रसादं यथा पुनर्दर्शनं भविष्यति तथा प्रसादं कुरुष्वेति भावः । **गङ्गा** । तत् चक्रवाकस्तनीवचनं कथं केन प्रकारेण संभावयसि तर्कयसि । सा किमर्थमित्थमुक्तवती सा च का एतद्विषये त्वं कथं तर्कयसीति भावः । **यमुना** । गङ्गायाः कर्णेति कविवचनम् । एवमेवमिति रहस्यभाषणेन सीतारामलक्ष्मणानां वनवासवृत्तान्तो यमुनया कर्णे उक्तः । स्फुटीभविष्यति चैतदग्रे सरयूभाषणावसरे । **गङ्गा** । इदं त्वदुक्तम् । तत्तस्मान्नूनं निश्चयेन आवर्तशतैरम्भोभ्रमशतैः भ्रमितं हृदयमन्तःप्रदेशो यस्याः, अयमर्थः प्रवाहरूपे । देवतारूपे तु–आवर्तशतैः चिन्ताशतैः भ्रमितं भ्रान्तिमद्धृदयं चेतो यस्यास्तथा सती अलीकमनृतम् । विधेर्दैवस्य संविधानवैदग्ध्यं कार्यरचनाचातुर्यम् । तेन त्वदुक्तं क्वचित्संभवेदपीति सूचितम् । **यमुना** । यदि अयं वृत्तान्तः संवृत्तो निष्पन्नस्तर्हि भवत्यास्तव कथं न गोचरः कथमविज्ञातः । अयोध्यातः गङ्गोत्तरणमन्तरेण यमुनादर्शनस्याऽसंभवादेवं प्रश्नः । **गङ्गा** । एतत् ममाऽज्ञानं न किञ्चित् आश्चर्यजनकमिति शेषः । तत्र कारणं दर्शयति मयेति । हि यस्मान्मया ब्रह्मलोकात्सत्यलोकात्,

---

१. एवमेतदिति पा० ।

(प्रविश्य।)

**सरयूः**—देव्यौ, नमो वाम्।

**उभे**—आलि, अवितथमङ्गला भव।

**गङ्गा**—(सरयूं हस्ते गृहीत्वा।) सखि, कथं तापनिमग्नमङ्गकं ते।

**सरयूः**—भगवति, प्रतीपमाभाषसे। ननु लज्जापङ्कनिमज्जनमनुभवन्त्या मेऽर्धावलम्बनोऽयमङ्गसंताप इति।

**गङ्गा**—स्पष्टं तावदावेदय।

**सरयूः**—

बहलगलितैः संतापोष्णैस्तटान्तविहारिभि-
र्दशरथपुरीपौरस्त्रीणां विलोचनवारिभिः।
उपचयवतीं संतापोष्णां निजां दधती तनू-
मिह मुहुरहं मातर्लज्जां वहामि जहामि च॥ १॥

**गङ्गा**—(सातङ्कम्।) किं पुनरासामश्रुवृष्टेः कारणम्।

**सरयूः**—(गङ्गायाः कर्णे।) एवमेवम्।

---

सरस्वत्यास्तन्नामकनद्याः समागमसुखेन व्यग्रं व्याकुलं चित्तं यस्यास्तया सत्या स्थितम्। अदूरे समीपे सरयूः। अनेन तस्याः प्रवेशः सूचितः। निरूपयावः ज्ञास्यावः। **सरयू**। वां युवाभ्याम्। (युष्मदस्मदोरिति वामादेशः। नमःस्वस्तीति चतुर्थी)। **उभे**। आलि सखि। अवितथमङ्गला सत्यकल्याणा। **गङ्गा**। तापनिमग्नं संतप्तम्, अङ्गकम् (अनुकम्पायामिति कन्)। **सरयूः**। प्रतीपं विरुद्धं, लज्जापङ्कनिमग्नस्य तापनिमग्नमिति वचनं विरुद्धमिति भावः। लज्जैव पङ्कः कर्दमः तस्मिन्निमज्जनमनुभवन्त्या मे अयं संतापः,अर्धमवलम्बनमाश्रयो यस्य,तादृशः।सन्तापेन लज्जापङ्कादुद्धृतास्मीति भावः। **सरयूः**। **बहलेति**। बहलं बहु यथा तथा गलितैः स्रस्तैः। सन्तापेन दुःखेनोष्णैः, तटान्ते तीरप्रान्ते विहारिभिः प्रसरद्भिः, दशरथपुर्या अयोध्यायाः पौरस्त्रीणां नगरस्त्रीणां विलोचनवारिभिरश्रुभिरुपचयो वृद्धिरस्या अस्ति तादृशीम्। तटान्तागतपुरस्त्रीबाष्पजलसङ्गमेन सरय्वा अतिवृद्धिरभूदिति भावः। सन्तापेन दुःखेनोष्णां निजां स्वकीयां तनूं मूर्तिं दधती सती मुहुर्वारंवारं लज्जां वहामि, च परं जहामि त्यजामि। दुःखसमयेऽप्युपचय इति लज्जा, सन्तप्ताङ्गत्वात्तत्त्याग इति भावः। यथासङ्ख्यमलङ्कारः। हरिणीवृत्तम्॥ १॥ **गङ्गा**। सातङ्कं सभयम्। आसां पौरस्त्रीणाम्। **सरयूः**। एवमेवमत्र रहस्यभाषणे

**गङ्गा**—हा इन्दुमतीनन्दन, हा सकललोकहृदयानन्दनचन्दन, हा महाकोदण्डपण्डित, हा आखण्डलप्रियसख, हा निजतनयनिर्विशेषप्रीतिपरिपालितसकललोक, हा रामभद्रैकजीवित ।[१]

**सरयूः**—( स्वगतम् । ) अस्यैव विलसितमेतत् ।

**गङ्गा**—हा महाराज दशरथ । ( इति मूर्च्छिता पतति ।

**यमुना**—( अंशुकाञ्चलेन वीजयन्ती । ) भअवदि, समस्ससिहि समस्ससिहि । णं इमेहिं जेव्व गुणेहिं असोअणिज्जो सो राआ ।

**गङ्गा**—( सरयूं प्रति । ) सखि, तवैव न केवलमयं तापः, सर्वजनसाधारणः खल्वसौ । तदेनं रामभद्रच्छत्रच्छाययापनोदयामः ।

**सरयूः**—( निःश्वस्य । ) भगवति, न खल्वप्रोषितसलिलसेकः कलम[२]केदारः परिशुष्यति ।

**गङ्गा**—स्पष्टं तावत्कथय ।

( सरयूरधरस्फुरणं नाटयति । )

---

१. भगवति, समाश्वसिहि समाश्वसिहि । नन्वेतैरेव गुणैरशोचनीयोऽसौ राजा ।

---

दशरथमृत्युवृत्तान्तः कथितः । **गङ्गा** । हा इति खेदे, इन्दुमत्याः तन्नामकदशरथमातुः नन्दन तनय, सकललोकानां हृदयानन्दने चन्दन, महत्सु कोदण्डेषु चापेषु विषये पण्डित, आखण्डलस्येन्द्रस्य प्रियसख प्रियसुहृत् निजतनयनिर्विशेषप्रीत्यां निजापत्यतुल्यप्रेम्णा परिपालिता रक्षिताः सकललोकाः समस्तजना येन, रामभद्र एव एकं जीवितं यस्य । **सरयूः** । अस्यैव रामभद्रैकजीवितत्वस्यैव एतन्मरणरूपं विलसितम् । **यमुना** । एतैरेव गुणैः लोकहृदयानन्दनादिभिः अशोचनीयः शोकानर्हः । यशःशरीरेण स्थितत्वादिति भाव । **गङ्गा** । एनं तापम्, रामभद्र एव च्छत्रं तस्य च्छायया अपनोदयामः निवारयामः । **सरयूः** । अप्रोषितोऽत्यक्तः सलिलसेको जलसेचनं यस्य तादृशः कलमकेदारः शालिक्षेत्रं न खलु शुष्यति । अनेन रामचन्द्रो यदि अयोध्यामध्यस्थास्यत्तर्हि दशरथमरणमेव नाभविष्यादिति

---

१. ( इति मूर्च्छेति ) इत्यधिकः पा० । २. कमलेति पा० ।

**गङ्गा**—अलमलम् । कथं दावानलशोषितायां तरुशाखायां कुठारमारोपयितुमिच्छसि । अथवा कथय तावत् ।

**सरयूः**—( स्वगतम्। ) अहो,

न ज्ञातुं नाप्यविज्ञातुं नेक्षितुं नाप्युपेक्षितुम् ।
सुजनः स्वजने जातं विपत्पातं समीहते ॥ २ ॥

( प्रकाशम्। ) रामभद्रमभिषेक्तुं कृतमनोरथं दशरथमेत्य कैकेयी प्रथमं तावदिदमुक्तवती ।

इदमेव नरेन्द्राणां स्वर्गद्वारमनर्गलम् ।
यदात्मनः प्रतिज्ञा च प्रजा च परिपाल्यते ॥ ३ ॥

**गङ्गा**—( स्वगतम्। ) अनेनैव तावदकल्याणरुचिः सूचिता दुराशया । ( प्रकाशम्। ) चरमं च किम् ।

**सरयूः**—

त्वया देयं यन्मे द्वयमभिहितं देहि तदिदं
वनं कौसल्येयो विशतु युवराजोऽस्तु भरतः ।

---

व्यञ्जितम् । **गङ्गा** । दावानलेन वनाग्निना, कुठारमारोपयितुं परशुं पातयितुम् । अनेन विषयनिगरणम् । दशरथमरणखिन्नायां मयीत्यर्थः शोषितशाखाशब्देन निगीर्णः । कुठारमित्यनेनान्यदतिदुःखदं वृत्तकथनमित्यर्थः निगीर्णः । **सरयूः । न ज्ञातुमिति** । सुजनः स्वजने आप्तजने जातं विपदः विपत्तेः पातं पतनं न ज्ञातुं बोद्धुम्, नापि अविज्ञातुम्, तथा न ईक्षितुं द्रष्टुम् नापि उपेक्षितुमुदासितुम्, समीहते इच्छति इति सर्वत्र सम्बध्यते । दीपकानुप्रासालङ्कारौ । श्लोकश्छन्दः ॥ २ ॥ अभिषेक्तुं यौवराज्ये इति भावः । कृतो मनोरथो येन तम् । **इदमिति** । आत्मनः स्वस्य प्रतिज्ञा संधा प्रजा च यत् परिपाल्यते रक्ष्यते । अर्थान्नरेन्द्रैरित्यर्थः । इदमेव नरेन्द्राणां राज्ञामनर्गलमप्रतिबन्धं स्वर्गद्वारं वर्तत इति शेषः । रूपकालङ्कारः । श्लोकश्छन्दः ॥३॥ **गङ्गा** । दुराशया दुष्टेच्छया, अनेनैव इदमेवेत्यादिवचनेनैव अकल्याणरुचिः अशुभेच्छा सूचिता । चरमं पश्चात् । **सरयूः । त्वयेति** । त्वया मे यत् द्वयं देयमभिहितं

---

१. नाप्यनुज्ञातुमिति पाठः । २. रुची इतिपाठः ।

**गङ्गा**—( सोद्वेगम् । ) ततः किं वृत्तम् ।

**सरयूः**—

इतीदं कैकेय्या वचनमधिगम्याकुलमतेः
पितुः पादौ नत्वा मुदितहृदयोऽसौ वनमगात् ॥ ४ ॥

**गङ्गा**—यमुने, तदिदं यत्कथितवत्यसि । ( सविषादम् । ) हा, रघुकुलकुटुम्बक निहतमसि ।

**यमुना**—भअवदि, एक्कं किं रघुकुलकुटुम्बअं । णं मिअमहेसिवणदेवदाओ परिहरिअ सअलो जेव्व जीअलोओ रामचन्दमुहचन्दविलोअणविहीणत्तणेण णिहदो ।

**सरयूः**—एवमेतत् ।

प्रोषितवति रजनिकरे बन्धुतया न खलु कैरवाण्येव ।
म्लायन्ति किं तु सहसा भुवनान्यपि तमसि मज्जन्ति ॥ ५ ॥

---

१. भगवति, एकं किं रघुकुलकुटुम्बकम् । ननु मृगमहर्षिवनदेवताः परिहृत्य सकल एव जीवलोको रामचन्द्रमुखचन्द्रविलोकनविहीनत्वेन निहतः ।

---

कथितं तदिदमग्रे याच्यमानं देहि । कौसल्यायाः अपत्यं कौसल्येयः । ( स्त्रीभ्यो ढगिति ढक् ) रामः वनमरण्यं विशतु भरतो मत्पुत्रो युवराजोऽस्तु । **इतीदमिति** । इति पूर्वोक्तप्रकारेण कैकेय्याः तदाख्याया राजपत्न्या वचनमधिगम्य ज्ञात्वा, आकुला व्यग्रा मतिर्बुद्धिर्यस्य तस्य पितुः दशरथस्य पादौ नत्वा मुदितहृदयः हृष्टान्तःकरणः असौ रामः काननमरण्यमगात् । विभावनालङ्कारः । शिखरिणी वृत्तम् ॥ ४ ॥ **गङ्गा** । कर्णे यत्कथितवत्यसि तदिदं,सरय्वापि तदेव कथितमिति भावः । हा इति शोके । रघुकुलकुटुम्बक ( अनुकम्पायां कन् ) निहतं नष्टमसि । **यमुना** । एकं केवलम् । मृगा महर्षयोऽगस्त्यादयः वनदेवताश्चेति द्वन्द्वः ।तान्परिहृत्य वर्जयित्वा सकलः समस्त एव जीवलोकः रामचन्द्रमुखचन्द्रस्य विलोकनविहीनत्वेन दर्शनाभावेन निहतः । अरण्यस्थितमृगादीनां रामचन्द्रस्य नित्यदर्शनेन न तेषां दुःखमिति भावः । **सरयूः** । **प्रोषितेति** । रजनिकरे चन्द्रे प्रोषितवत्यस्तंगते । बन्धुतया आप्तत्वेन कैरवाण्येव कुमुदान्येव न खलु म्लायन्ति, किन्तु सहसा भुवनान्यपि जगन्त्यपि

---

१. कुटुम्बकमिति पाठः ।

गङ्गा—एवमेतत्। परं सखि सरयु, कथय तावत्। कीदृशी वृत्तिः सीतालक्ष्मणयोर्वत्सरामभद्रे। तौ हि तस्य सदैव संनिहितौ चन्द्रिकाप्रसादाविव चन्द्रमसः।

सरयूः—अतो जानास्येव यादृशी चन्द्रिकाप्रसादयोरेव चन्द्रमसि।

गङ्गा—( स्वगतम्। सहर्षम्। ) कथं सहैव वनं गताविल्युक्तं भवति। ( प्रकाशम्। ) सखि, जीवितास्मि तावदनेन वागमृतेन। क्षणमपि हि रामचन्द्रविरहमनुभवितुमसहा मे वत्सा जानकी।

सरयूः—एवमेतत्। रामचन्द्रेण हीदमुक्ता जानकी—

'अम्बाः शुश्रूषमाणा मे शरदः कतिचिन्नय।'

इदमाकर्ण्य तथा मूर्च्छिता जानकी यथा स्वजनकरोपनीतशीतशीकरासारसिक्तापि न प्रबुद्धा।

यमुना—ता उण कहं पवुद्धा।

सरयूः—

'वनं वनजपत्राक्षि समागच्छ सहैव वा ॥ ६ ॥

१. तत्पुनः कथं प्रबुद्धा।

तमसि मज्जन्ति। अप्रस्तुतप्रशंसालङ्कारः। आर्या वृत्तम् ॥ ५ ॥ **गङ्गा**। कीदृशी वृत्तिः वर्तनम्। तौ सीतालक्ष्मणौ हि यस्मात् चन्द्रमसः इन्दोः चन्द्रिकाप्रसादाविव ज्योत्स्नाप्रसन्नते इव सदैव सर्वकाले एव सन्निहितौ अविरहितौ। **सरयूः**। अत चन्द्रिकाप्रसाददृष्टान्तप्रदर्शनात् जानास्येव चन्द्रमसि यादृशी चन्द्रिकाप्रसादयोर्वृत्तिः। तादृश्येव रामे सीतालक्ष्मणयोरिति वाक्यशेषः। **सरयूः**। **अम्बा इति**। प्रिये इत्यध्याहारः। मे अम्बा मातृः शुश्रूषमाणा सेवमाना सती कतिचिच्छरदः वर्षाणि नय गमय। चतुर्दशवर्षाणीत्युक्ते क्षणमपि विरहमसहमाना कथं तावत्कालं तिष्ठेदतो वैदग्ध्येन कतिचिदित्युक्तम्। अम्बा इति बहुवचनेन कैकेय्या अपि संग्रहः। तेन रामस्यातिक्षमावत्त्वं सूचितम्। इदं रामोक्तमाकर्ण्य यथा स्वजनानां करोपनीतैः शीतशीकरासारैः सिक्तापि न प्रबुद्धा, तथा तेन प्रकारेण मूर्च्छिता। **वनमिति**। हे, वने उदके जातं वनजं कमलं तत्पत्रे इव अक्षिणी यस्यास्तत्सम्बुद्धिः। वा अथवा सहैव

१. तौ हि तस्येत्यादिः सरयूभाषणे पाठः। २. स्वकरोपनीतमिति पाठः।

इत्यनेन रामवचनामृतेनैव।

गङ्गा—उचितमिदं जानकीस्नेहस्य।

यमुना—अवि णाम रामलक्खणाणं वि कोवि संवादो संवुत्तो।

सरयूः—अथ किम्। इदमुक्तो हि रामचन्द्रेण लक्ष्मणः—

'गमय वत्स निमील्य विलोचने
कतिचिदत्र निमेषसमाः समाः।
अपि च मामिव शीलसुशीतलं
शुभरतं भरतं परिशीलय ॥ ७ ॥

इदमुक्तं च लक्ष्मणेन—'अये रघुनाथ,

त्वया समं मे चत्वारि यामा एव युगान्यपि।
चतुर्दश समाः स्थातुं विना मन्वन्तराणि मे ॥ ८ ॥

अपि च।

त्वया मम समेतस्य कल्पा अपि समासमाः।
भवता विप्रयुक्तस्य कल्पकल्पः क्षणोऽपि मे ॥ ९ ॥

---

१. अपि नाम रामलक्ष्मणयोरपि कोऽपि संवादः संवृत्तः।

---

मया सहैव वनमरण्यं समागच्छ इति रामवचनमेवामृतं तेनैव प्रबुद्धा इति सम्बध्यते ॥ ६ ॥ **सरयूः। गमयेति**। वत्स लक्ष्मण विलोचने नेत्रे निमील्य कतिचित्समाः संवत्सराणि अत्र अयोध्यायां निमेषसमाः निमेषतुल्याः गमय। अपि च शीलेन स्वभावेन सुतरां शीतलं अनुग्रम्, शुभे सत्कर्मणि रतमासक्तं भरतं तदाख्यकैकेयीपुत्रं मामिव परिशीलयाऽनुवर्तस्व। यमकालङ्कारः। द्रुतविलम्बितं वृत्तम् ॥ ७ ॥ **त्वयेति**। त्वया समं मे चत्वारि युगानि कृतत्रेताद्वापरकल्याख्यानि, अपि यामाः प्रहरा एव तत्सदृशानीत्यर्थः। त्वया विना स्थातुं चतुर्दश समा अपि वत्सराण्यपि मे मन्वन्तराणि, दिव्ययुगसप्ततिपरिमितः कालो मन्वन्तरम् (मन्वन्तरन्तु दिव्यानां युगानामेकसप्ततिरित्यमरः) रूपकालङ्कारः ॥ ८ ॥ **त्वया ममेति**। त्वया समेतस्य युक्तस्य मम कल्पा अपि प्रलया अपि समया संवत्सरेण समाः तुल्याः अत्यल्पा इति भाव.। भवता विप्रयुक्तस्य विरहितस्य मे क्षणोऽपि कल्पकल्पः कल्पतुल्यः (ईषदसमाप्ताविति

**गङ्गा**—अपि नाम कौसल्ययापि किंचिच्छिक्षितो रामभद्रः ।

**सरयूः**—अथ किम् । सा हि 'अयि वत्स रामभद्र, सीताम् । इत्यर्धोक्त एव बाष्परुद्धकण्ठीदमुक्तवती—'अथवा वत्स, लक्ष्मणे रक्षितरि को भवान्सीतासमीक्षणस्य । तदिदं तावदभ्यर्थयामि ।

इह दुग्धमुखे वत्स लक्ष्मणे दक्षिणो भव ।
अपि राज्योपभोगेभ्यो यस्य त्वं सहजप्रियः ॥ १० ॥

इदमुक्तं च रामभद्रेण—'अपि मातः, निजजीवितेऽपि दक्षिणेन भवितव्यमित्यपि शिक्षणीयमेव ।

**गङ्गा**—तन्नूनं ततः प्रभृति सहजसौन्दर्यमेवाभरणं वत्सरामस्य ।

**सरयूः**—अन्यदप्येकम् । विमुञ्चन्सकलमाभरणजातमित्थमभ्यर्थितः कौसल्यया रामभद्रः—

'हस्तावलम्बदानाय सीतामाङ्गल्यसंपदः ।
इदं विमुञ्च मा वत्स राम रत्नाङ्गुलीयकम् ॥ ११ ॥'

इदमन्यच्च ते कथयामि । धीरा समाकर्णय ।

**गङ्गा**—कथमेतावदाकर्णितवतीमपि मामधीरामाशङ्कसे ।

**सरयूः**—

निकामं रामस्य प्रमुदितमुखाम्भोरुहरुचे-

---

कल्पप् ) विरोधाभासोऽलंकारः । श्लोकश्छन्दः ॥ ९ ॥ **सरयूः** । **इहेति** । वत्स राम । दुग्धमुखे बाले इह लक्ष्मणे दक्षिणः उदारो भव । यस्य लक्ष्मणस्य त्वं राज्योपभोगेभ्योऽपि सहजप्रियः निसर्गप्रेमास्पदः । असीति शेषः । काव्यलिङ्गमलङ्कारः । श्लोकश्छन्दः ॥ १० ॥ शिक्षणीयमेवेति काकुः । **गङ्गा** । सहजसौन्दर्यं स्वाभाविकं लावण्यम् । **सरयूः** । अन्यत् सौन्दर्यादन्यदपि एकं वर्तत इति शेषः । आभरणजातमलंकारसमूहं विमुञ्चन् रामभद्रः, अभ्यर्थितः याचितः । **हस्तेति** । सीतायाः माङ्गल्यसंपदः सौभाग्यश्रियो हस्तावलम्बदानाय साहाय्यायेत्यर्थः । इदं त्वद्धस्तस्थितं रत्नस्याङ्गुलीयकमूर्मिकां मा विमुञ्च मा जहीहीत्यर्थः । श्लोकश्छन्दः ॥ ११ ॥ धीरेत्यनेनाऽग्रे कथयिष्यमाणवृत्तान्तस्यात्युद्वेगजनकत्वं सूचितम् । **गङ्गा** । एतावत्त्वया कथितमतिकठोरमाकर्णितवतीं श्रुतवतीमपि । **सरयूः** । **निकाममिति** । मातर्गङ्गे सौमित्रिर्लक्ष्मणः निकाममत्यन्तं

---

१. तवेदमिति पाठः । २. मुग्धेति पाठः । ३. मङ्गलेति पाठः ।

जटावल्लीर्मल्लीमुकुलसदृशैर्बाष्पपृषतैः ।
निषिञ्चन्सौमित्रिः कथमपि वितेने खलु यदा
तदा जातं मातः करुणमयमेतज्जगदपि ॥ १२ ॥

**यमुना**—अवि[१] णाम तस्सि समये सीदावि किंवि सिक्खिदा बन्धुअणेण ।

**सरयूः**—अयि देवि, विपरीतमालपसि ।

गहनविपिनवासोत्कण्ठया संप्रयातं
प्रियतममनुयान्त्या तत्क्षणं राजपुत्र्या ।
चरणकमलगुञ्जन्मञ्जुमञ्जीरशब्दैः
स्फुटतरमुपदिष्टा बान्धवाः साधु वृत्तम् ॥ १३ ॥

इदं तु वृत्तम् ।

पुरः कान्तं यान्तं विपिनमनुयान्त्याः सरभसं
तदा[१] तौ सीतायाः किसलयनिभौ वीक्ष्य चरणौ ।

१ अपि नाम तस्मिन्समये सीतापि किमपि शिक्षिता बन्धुजनेन ।

प्रमुदिता आनन्दिता मुखाम्भोरुहस्य वदनकमलस्य रुचिः कान्तिर्यस्य तस्य रामस्य जटाः एव वल्लीर्लतास्ताः, मल्लीमुकुलैः तृणशून्यकुड्मलैः सदृशैः बाष्पपृषतैः अश्रुबिन्दुभिः निषिञ्चन् सन्, कथमपि अनिर्वचनीयं यदा वितेने चक्रे, तदा एतज्जगदपि करुणमयं शोकमयं जातम् । रामचन्द्रजटासंयमनकाले लक्ष्मणविलापेन सर्वं भुवनं शोकाकुलमभूदिति भावः । काव्यलिङ्गमलङ्कारः । शिखरिणी वृत्तम् ॥ १२ ॥ **सरयूः** । देवि यमुने । **गहनेति** । गहने दुरधिगम्ये विपिने कान्तारे वासोत्कण्ठया स्थित्युत्सुकतया संप्रयातं निष्क्रान्तं प्रियतममनुयान्त्याऽनुगच्छन्त्या राजपुत्र्या सीतया तत्क्षणं तस्मिन्क्षणे (कालाध्वनोरिति द्वितीया) चरणकमलयोर्गुञ्जन्तौ रणन्तौ मञ्जुमञ्जीरौ मनोज्ञनूपुरौ तयोः शब्दैः बान्धवा आप्तजनाः साधु वृत्तं सद्वर्तनं स्फुटतरं व्यक्तम्, उपदिष्टाः शिक्षिता इवेत्यध्याहारः । मञ्जीरशब्दमिषेणोपदिशतीवेति भावः । गम्योत्प्रेक्षावृत्त्यनुप्रासालङ्कारौ । मालिनी वृत्तम् ॥ १३ ॥ इदं वक्ष्यमाणम्, तुशब्दः समुच्चये । **पुर इति** । तदा गमनकाले विपिनमरण्यं यान्तं गच्छन्तं कान्तं रामं सरभसं सहर्षं सवेगं वा अनुयान्त्या अनुगच्छन्त्याः सीतायाः तौ प्रत्यक्षतया अनुभूतौ किसलयनिभौ पल्लवसदृशौ चरणौ मुहुः पुनःपुनः वीक्ष्य बन्धुनयनैः शीता

१ तदाद्यविति पाठः ।

मुहुः शीतास्तप्ताः किमपि च मुहुर्बन्धुनयनैः
सं[1]मुन्मुक्ता मुक्तासदृशरुचयो बाष्पकणिकाः ॥ १४ ॥

**गङ्गा**—हर्षविषादयोर्विलसितमेतत् ।

**सरयूः**—इदं बन्धुजनेन शिक्षितो रामचन्द्रः—

'बाला विदेहतनया तरलौ भवन्तौ
दिग्दक्षिणा च रजनीचरचक्रदु[2]ष्टा ।
तद्वत्स वत्सलतयेदमुदाहरामो
मा राम गच्छ नयदक्षिण दक्षिणाशाम् ॥ १५ ॥

**गङ्गा**—ततस्ततः ।

**सरयूः**—ततस्तामेव दिशं प्रति

सुरमुरजगभीरधीरनाद-
द्विगुणगुणध्वनिचापदत्तहस्तः ।
पुरजननयनैः कृतं दधानः
कुवलयदाम जगाम रामभद्रः ॥ १६ ॥

---

गन्तुमसहाऽपि मा गा इति निरुद्धाऽपि पतिभक्त्या तमनुगच्छतीति हर्षेण शीतलाः। तप्ताः कोमलाङ्ग्यननुभूतकान्तारसञ्चारा कथमाभ्यां चरणाभ्यां क्वचित्कण्टकमये क्वचित्कठोरोपलमयेऽरण्यप्रदेशे सञ्चरिष्यतीयमिति दुःखेनोष्णाः मुक्तासदृशरुचय. बाष्पकणिका अश्रुबिन्दवः मुहुः वारंवारं समुन्मुक्ताः विसृष्टाः । काव्यलिङ्गवृत्त्यनुप्रासयमकालङ्काराः । शिखरिणी वृत्तम् ॥ १४ ॥ **गङ्गा** । हर्षविषादयोः सुखदुःखयोर्विलसितं चेष्टितम्, एतत् शीतोष्णबाष्पमोचनरूपम् । **सरयूः** । **बालेति** । हे नयदक्षिण नीतिकुशल राम विदेहतनया सीता बालाऽल्पवयस्का भवन्तौ तरलौ । दक्षिणा च दिक् रजनीचरचक्रेण राक्षससमूहेन दुष्टा । तत्तस्मात् दक्षिणाशां दक्षिणदिशं मा गच्छ इदं वत्से त्वयि वत्सलतया स्नेहेन उदाहरामः कथयामः । अथवा वत्सेति सम्बुद्ध्यन्तं रामविशेषणम् । काव्यलिङ्गयमकालङ्कारौ । वसन्ततिलका वृत्तम् ॥१५॥ **सुरमुरजेति** । सुरमुरजानां देवमृदङ्गानां गभीरो गम्भीरो धीरः प्रसरणशीलश्च यो नादः शब्दः तेन द्विगुणो गुणध्वनिर्ज्याशब्दो यस्य तादृशो यश्चापस्तस्मिन्दत्तावर्पितौ हस्तौ येन स तथोक्तः। यदा नगराद्रामो निरक्रामत्तदाऽऽनन्देन देवा

---

१. समं मुक्ता इति पाठः । २. पुष्टेति पाठः ।

**यमुना**—[१]को उण सो अवसरो मुरमुरअ सद्दस्स।

**गङ्गा**—सखि, न जानासि। गभीरं ध्वनद्भिः खलु मुरमुरजैः किमपि गभीरमेव ध्वनितम्। ( पुनः सविषादम्। ) हा दशरथ, सकलगुणसंपदां भाजन भूत्वापि कथमेकस्य भागधेयस्य भाजनं न जातोऽसि।

**यमुना**—[२]कहं उण सो राआ तुह्मेहिं पसंसीअदि जेण तारिसोऽवि तणओ तुणं विअ मुक्को।

**सरयूः**—शान्तं पापम्।

नरेन्द्रः कैकेयीवचनपरिपाटीविगलितः
क्षणं मोहक्रोधप्रसरभरयोरन्तरचरः।
सुतं चोरग्रस्तो मणिमिव करस्थं न कृपण-
स्तृणानीव प्राणान्पुनरयममुञ्चद्दशरथः॥ १७॥

---

१. कः पुनः सोऽवसरः मुरमुरजशब्दस्य।
२. कथं पुनः स राजा युष्माभिः प्रशंस्यते येन तादृशोऽपि तनयस्तृणमिव मुक्तः।

---

दुन्दुभीन्वादयांचक्रुरिति भाव। पुरजनानां नयनैः कृतं कुवलयदाम इन्दीवरमालाम्, लोकलोचनकान्तेरिन्दीवरसादृश्यादिति भावः। दधानः धरन् रामभद्रः तामेव दिशं दक्षिणदिशं प्रति जगाम। अनुगुणवृत्त्यनुप्रासयमकालंकाराः। प्राविसद्धः स्वगुणोत्कर्षोऽनुगुणः परसन्निधेरिति लक्षणात्। पुष्पिताग्रावृत्तम्॥ १६॥ **यमुना**। मुरजशब्दस्य मृदङ्गध्वनेः कः पुनरवसरः कः प्रस्तावः। **गङ्गा**। गभीरमेव गूढमेव किमपि अनिर्वचनीयं देवकार्यं ध्वनितं व्यञ्जितम्। रामवनवासेन किमपि महत्सुरकार्यं भविष्यतीति मृदङ्गशब्देन सूचितमिति भावः। सकलानां शौर्यादीनां संपदां श्रीणां भाजनं पात्रं भूत्वापि, एकस्य केवलस्य भागधेयस्य दैवस्य भाजनं पात्रम्। केवलदैवेन वञ्चित इति भावः। **सरयूः**। **नरेन्द्र इति**। कैकेय्याः तन्नामकपत्न्याः वचनपरिपाट्या वाक्सरण्या विगलितः विह्वलः नरेन्द्रोऽयं दशरथः क्षणं मोहक्रोधयोर्मूर्च्छारोषयोर्यौ प्रसरभरौ क्रमेण व्याप्तिप्रकर्षौ तयोरन्तरे मध्ये

---

१. एकस्य भाजनमिति पा०।

यमुना—अवि णाम भरदस्स णाणुमदमिदम् ।

सरयूः—अये, भरतस्य मातुलगृहादागतस्य कैकेय्याश्च संवाद एवोत्तरं दास्यति ।

गङ्गा—कीदृशः पुनरसौ ।

सरयूः—

मातस्तातः क्व यातः, सुरपतिभवनं, हा कुतः, पुत्रशोका-
त्कोऽसौ पुत्रश्चतुर्णां त्वमवरजतया यस्य जातः, किमस्य ।
प्राप्तोऽसौ काननान्तं, किमिति, नृपगिरा, किं तथाऽसौ बभाषे,
मद्वाग्बद्धः, फलं ते किमिह, तव धराधीशता, हा हतोऽस्मि ॥ १८ ॥

गङ्गा—( सहर्षम् । ) वत्स भरत, भवसि रामानुजन्मा ।

---

३. अपि नाम भरतस्य नानुमतमिदम् ।

---

चरतीति तथा ( चरेष्ट इति टः ) सन् चोरग्रस्तः कृपणः कदर्यः न केवलं करस्थं मणिं हस्तगतं रत्नम्, पुनः किन्तु, तृणानीव तृणतुल्यामित्यर्थः प्राणान् स इव न केवलं सुतं किन्तु तृणानीव प्राणानपि, अमुञ्चत् अजहात् । यथा चोरगृहीतः कृपणो न केवलं करस्थं मणिं किन्तु तेन सार्धं प्राणानपि त्यजति; तथाऽयमपि कैकेयीवचनगृहीतः न केवलं पुत्रं किन्तु तेन सह प्राणानप्यत्यजदिति भावः । उपमालङ्कारः । शिखरिणी वृत्तम् ॥ १७ ॥ **यमुना** । अपि नामेति संभावनायाम्, इदं कैकेयीकृत्यं, भरतस्य नानुमतं भवेदिति शेषः । **सरयूः** । **मातरिति** । मातः कैकेयि, तातो दशरथः क्व यातः कुत्र गतः अयं भरतप्रश्नः, सुरपतिभवनं परलोकं यातः इदं कैकेय्युत्तरम् । हेति खेदे । कुतः कस्माद्धेतोरिति प्रश्नः, पुत्रशोकादित्युत्तरम्, कोऽसौ पुत्र इति प्र०, चतुर्णां मध्ये पुत्रचतुष्टयमध्ये यस्य पुत्रस्य त्वमवरजतया अनुजतया जातोऽसि अर्थाद्रामस्येति भावः, इदमुत्तरम् । अस्य रामस्य किं जातमिति प्र०, असौ काननान्तं वनवासं प्राप्तः गतः इत्यु०, असौ राजा तथा वनं गच्छेति किं किमर्थं बभाषे इति प्र०, मद्वाग्बद्धः मम वचनाधीन इत्यु०, इह अस्मिन् कृत्ये ते तव किं फलं प्रयोजनमिति प्र०, तव धराधीशता यौवराज्यमित्यु० । हा हतोस्मीति भरतः। काव्यलिङ्गमलङ्कारः। स्रग्धरा वृत्तम् ॥ १८ ॥

**सरयूः**—

रामे प्राप्ते वनान्ते कथमपि भरतश्चेतनां प्राप्य तातं
नीत्वा देवेन्द्रलोकं मुनिजनवचनादूर्ध्वदेहक्रियाभिः ।
भ्रातुः शोकाभितप्तः स्वजनपरिवृतः पालयामास नन्दि-
ग्रामे तिष्ठन्नयोध्यां रघुपतिपुनरागामिभोगाय वीरः ॥ १९ ॥

**यमुना**—तदो तदो ।

**सरयूः**—अहमेतावदेव जानामि । ततः परं तद्वृत्तान्तनिरूपणाय निजजलकमलवनवासी कोऽपि कलहंसः प्रस्थापितो मया ।

( प्रविश्य । )

**कलहंसः**—देव्यः, इदं नमो वः ।

**तिस्रः**—अयि कमलावतंस कलहंस, मङ्गलमन्दिरं भव ।

**गङ्गा**—अये, कथय तावद्वत्सानां मे प्रथमतः प्रभृति पथि चरितानि ।

१. ततस्ततः ।

**सरयूः । राम इति ।** रामे वनान्ते प्राप्ते वीरो भरतः कथमपि गरीयसा प्रयत्नेनेत्यर्थः । ( ज्ञानहेतुविवक्षायामप्यादिकथमव्ययम् । कथमादि तथाप्यन्तं यत्नगौरवबाढयोरित्युज्ज्वलः ) चेतनां प्राप्य संज्ञां लब्ध्वा, मुनिजनाना वसिष्ठादीनां वचनात् ऊर्ध्वदेहक्रियाभिर्मृतस्वर्गादिप्राप्त्यर्थं श्राद्धपिण्डदानादिकर्मभिः तातं दशरथं देवेन्द्रलोकं स्वर्गं नीत्वा, भ्रातू रामस्य शोकाभितप्तः शुचा ग्रस्तः स्वजनैः कौसल्यादिभिः परिवृतो वेष्टितः नन्दिग्रामे तत्संज्ञकायोध्यानिकटग्रामटिकायां तिष्ठन् सन् रघुपते रामस्य पुनरागामिने अग्रेभाविने भोगाय राज्योपभोगार्थं नतु स्वकृते इति भाव.। अयोध्यां रघुकुलराजधानीं पालयामास । स्रग्धरा वृत्तम् ॥ १९ ॥ **सरयूः ।** तद्वृत्तान्तस्य रामप्रवृत्तेर्निरूपणाय अवलोकनाय कोपि कलहंसः । अनेन कलहंसप्रवेशः सूचितः । **कलहंसः ।** देव्यः गङ्गायमुनासरय्वः इदं संबोधनम् । **तिस्रः ।** गङ्गाद्याः । कमलानामवतंस भूषण हंस मङ्गलमन्दिरं कल्याणास्पदम् । वत्सानां रामादीनां प्रथमतः प्रभृति आदित आरभ्य ( अपादाने पञ्चमीति सूत्रे कार्तिक्याः प्रभृतीति भाष्यप्रयोगात्प्रभृति—

१. भोगायेति पाठः ।

हंसः—

विघ्नानिवानुसरतो विनिवार्य पौरा-
नग्रे स्वयं नय इवैष जगाम रामः ।
एनं विभूतिरिव साऽनुजगाम सीता
तां लक्ष्मणस्तु सुखलाभ इवान्वगच्छत्[1] ॥ २० ॥

गङ्गा—ततस्ततः ।

हंसः—ततः कियत्यपि दूरे पथिकलोकेनेदमुक्तस्ते वत्सवर्गः—

पन्थाः समः सिकतिलो मृदुशाद्वला भू-
र्वेतस्वती सरिदियं शिशिरा न दूरे ।
अग्रे चकास्ति सरसी च कुमुद्वतीयं
कादम्बकूजितकरम्बितहंसनादा ॥ २१ ॥

अन्यच्च ।

तरुरयमितः शीतच्छायः स्रवन्मधुशीकरः
सरिदियमितः स्वल्पस्वच्छप्रवाहमनोहरा ।

---

शब्दयोगे पञ्चमी ) । हंसः । **विघ्नानिति** । अनुसरतोऽनुगच्छतो पौरान् नगरजनान् विघ्नानिव प्रत्यूहानिव विनिवार्य निवर्त्य स्वयं नय इव साक्षान्नीतिरिव एष रामः अग्रे पुरस्ताज्जगाम । एनं नयमिव रामं विभूतिरिव ऐश्वर्यमिव सा सीता अनुजगाम । ताञ्च विभूतिमिव सीताञ्च सुखलाभ इव लक्ष्मणः अन्वगच्छत् ॥ उपमैकावल्यलङ्कारौ । वसन्ततिलका वृत्तम् ॥ २० ॥ **पन्था इति** । सिकतिलो वालुकावान्, ( देशे लुबिलचौ चेतीलच् ) समः न तु निम्नोन्नतः, मृदुशाद्वला कोमलतृणवती भूः भूमिः, वेतस्वती वेत्रवती (कुमुदनडवेतसेभ्य इति ड्मतुप्)शिशिरा शीतला इयं सरित् नदी न दूरे,निकटे एवेत्यर्थः। कादम्बानां कलहंसानां कूजितेन करम्बिता मिश्रिताः हंसनादा यस्यां तादृशी कुमुद्वती सितकमलवतीयं सरसी अग्रे पुरोभागे चकास्ति । इदं पन्था इति श्लोकोक्तं ते वत्सवर्गः पथिकजनेनोक्त इति पूर्ववाक्येन संबन्धः। अनेन पथः सुगमत्वं, पथिकजनस्य रामचन्द्रादीनामुपरि वात्सल्यञ्च सूचितम् । स्वभावोक्तिरलङ्कारः । वसन्ततिलका वृत्तम् ॥ २१ ॥ **तरुरिति** । स्रवन्तो गलन्तो मधुशीकराः पुष्परसबिन्दवो यस्मात्तथोक्तः शीता छाया यस्य तादृशः तरुर्वृक्षोऽयं इतः अस्मिन् मार्गे वर्तत इति शेषः।

---

१. इवानुगच्छदिति पाठः ।

इदमिदमितः स्निग्धामोदं मुहुर्मधुरध्वन-
न्मधुकरवधूमुग्धाभोगं वनं सरसीरुहाम् ॥ २२ ॥

गङ्गा—अहो, अध्वश्रमशमनानि पथिकजनवचनानि ।

यमुना—तदो तदो ।

हंसः—ततः प्रियतममनुगच्छन्ती जानकी
भीतं विलोक्य हरिणं करुणार्द्रचित्ता ।
पत्युर्निजेन पिदधे धनुरंशुकेन ।
केदारसीम्नि सदयं च यवप्ररोह-
मादाय साधु विदधे श्रवणावतंसम् ॥ २३ ॥

अन्यच्च ।

तटभुवि सरसीनां सैकते निम्नगानां
परिसरमपहातुं चक्रवाकीं प्रियस्य ।
क्षणमपि न समर्था लोलमालोकयन्ती
पथि जनकतनूजा प्राप हर्षं शुचं च ॥ २४ ॥

---

१. ततस्ततः ।

---

स्वल्पेन स्वच्छप्रवाहेण निर्मलस्रोतसा मनोहरा इयेयं सरिदितोऽस्ति। स्निग्धः प्रीतिकरः आमोदो सुगन्धो यस्मिन् तत, मुहुः मधुरं ध्वनन्तीभिः गुञ्जन्तीभिर्मधुकरवधूभिर्मुग्धः सुन्दरः आभोगो यस्य तथोक्तम्, सरसीरुहां कमलानां वनं काननमितोऽस्तीति पथिकेनोक्त इति पूर्वत्रान्वयः । हरिणी वृत्तम् ॥ २२ ॥ **गङ्गा** । अध्वनः मार्गस्य श्रमशमनानि क्लान्तिहारीणि । **हंस** । **भीतमिति** । भीतं हरिणं विलोक्य करुणार्द्रं दयार्द्रं चित्तं यस्यास्तादृशी सती पत्यू रामस्य धनुः निजेन स्वकीयेनांशुकेन वस्त्रेण पिदधे आच्छादयांचकार । केदारसीम्नि क्षेत्रप्रदेशे सदयं यथा तथा यवस्य प्ररोहमङ्कुरमादाय गृहीत्वा साधु सुन्दरं श्रवणावतंसं कर्णभूषणं विदधे चकार । अत्र अवतंसपदेनैव कर्णभूषणरूपार्थलाभे कर्णपदं सान्निध्यबोधनार्थम् । उक्तञ्च सप्तमोल्लासे **काव्यप्रकाशादौ** । कर्णावतंसादिपदे कर्णादिध्वनिनिर्मितिः । सन्निधानादिबोधार्थमिति । छेकानुप्रासालङ्कारः । वसन्ततिलका वृत्तम् ॥ २३ ॥ **तटभुवीति** । सरसीनां कासाराणां तटभुवि कूलप्रदेशे, निम्नगानां नदीनां सैकते वालुकायुक्तदेशे ( सिकताशर्कराभ्यां चेत्यण् ) प्रियस्य पत्युः परिसरं पर्यन्तदेशं क्षणमपि तावत्कालमपि परिहातुं त्यक्तुं

**गङ्गा**—एवमनुकम्पनीयवत्सला मे जानकी । (पुनः सस्नेहम् ।) अपि तावत्पथिकनीतिशीतलानि मे वत्सानां शीलानि ।

**हंसः**—कीदृशी पुनः पथिकनीतिः ।

**गङ्गा**—

यावत्कर्णे तपति तपनस्तावदेव प्रयाणं
विश्रामश्च प्रसरति रवेरंशुजाले कराले ।
यात्रोद्योगः पुनरपि रवेर्लम्बमाने विमाने
यावन्मीलत्यथ कमलिनी तावदावासबन्धः ॥ २५ ॥

**हंसः**—भगवति, अनवस्थितमिदं नित्यपथिकानाम् ।

**गङ्गा**—हन्त, कथं कठोरातपस्पर्शमपि जानन्ति जानकीललिताङ्गानि ।

**हंसः**—अलं कातरतया ।

अपि तपति पतङ्गे चण्डचण्डैर्मयूखैः
पथि जनकतनूजा नैव संतापमाप ।

---

न समर्थौ चक्रवाकौ, पथि लोलं सतृष्णं आलोकयन्ती जनकतनूजा हर्षं तयोर्निरतिशयप्रेमदर्शनाद्धर्षः, शुचं च एतादृशावप्येतौ रात्रौ वियोगदुःखपीडितौ रजनीमतिवाहयिष्यत इति दुःखञ्च माप । काव्यलिङ्गमलंकारः । मालिनी वृत्तम् ॥ २४ ॥ **गङ्गा** । अनुकम्पनीयेषु दयार्हेषु वत्सला प्रेमवती । शीलानि वर्तनानि पथिकानां अध्वगानां नीत्या व्यवहृत्या शीतलानि शिशिराणि । **यावदिति** । तपनः सूर्यो यावत्कर्णे तपति तावदेव तावत्कालपर्यन्तमेव प्रयाणं गमनं, रवेः कराले तीक्ष्णे अंशुजाले किरणवृन्दे प्रसरति प्रसर्पति सति विश्रामो विश्रान्तिः, रवेर्विमाने वाहने लम्बमाने अस्ताभिमुखे इत्यर्थः । पुनरपि यात्रोद्योगो गमनयत्नः, अथ अनन्तरं यावत्कमलिनी मीलति सङ्कुचति तावत् आवासबन्धः वसतिः । एतेन न रात्रौ नाऽपि प्रखरातपे मार्गं चरेदिति पथिकनीतिरिति प्रदर्शितम् । मन्दाक्रान्ता वृत्तम् ॥ २५ ॥ **हंसः** । इदं भवदुक्तमनवस्थितमनियतम् । **गङ्गा** । हन्तेति खेदे । जानक्याः ललितानि सुकुमाराण्यङ्गानि । **हंसः** **अपीति** । पतङ्गे सूर्ये चण्डादपि चण्डैः अतितीक्ष्णैरित्यर्थः। मयूखैः किरणैः तपति सत्यपि पथि मार्गे जनकतनूजा सीता

**गङ्गा**—( सकौतुकम् । )कथमिव ।

**हंसः**—

अपरिचितनिमेषालोकमालोकयन्ती
कुवलयदलदामश्याममङ्गं प्रियस्य ॥ २६ ॥

**गङ्गा**—प्रियतमस्नेहशीलतया सीतया न केवलमात्मा वयमपि जीविताः ।

**सरयूः**—पालिताश्च ।

**हंसः**—

अप्युच्चण्डैस्तपनकिरणैस्तापितायां पृथिव्या-
मप्यन्येषां कठिनवपुषां दुर्गमे मार्गसीम्नि ।
प्रेमार्द्रेण प्रगुणितधृतिश्चेतसा शीतशीता-
न्मेने सीता प्रियतमपदैरङ्कितान्भूमिभागान् ॥ २७ ॥

**यमुना**—अइ ताद दिनअर, कहं णिअकुडुम्बेवि णिक्करुणो सि संवुत्तो ।

**सरयूः**—अयि देवि वसुधे, कथं निजसुतायामपि सीतायामेवं निर्दयासि संवृत्ता ।

---

१. अयि तात दिनकर, कथं निजकुटुम्बेऽपि निष्करुणोऽसि संवृत्तः ।

---

सन्तापं नैवाप । अपरिचिता विस्मृता निमेषा पक्ष्ममीलनोन्मीलनव्यापारा यस्मिंस्तादृशः आलोको दर्शनं यस्मिन्कर्मणि यथा तथा, प्रियस्य रामस्य कुवलयदलानां नीलकमलपत्राणां दामेव मालेव श्याम अङ्गमालोकयन्ती सतीति पूर्ववाक्येन सम्बध्यते । काव्यलिङ्गालङ्कारः । मालिनी वृत्तम् ॥ २६॥ **हंसः** । **अपीति** । उच्चण्डैः प्रखरैस्तपनस्य भानोः किरणैः तापितायामत्युष्णीकृतायां पृथिव्यामपि भूमावपि तथा अन्येषामितरेषां कठिनवपुषां दुर्गमे दुःखेन गमनार्हे कण्टकोपलमये इत्यर्थः । मार्गसीम्नि अध्वप्रदेशेऽपि प्रेमार्द्रेण चेतसा प्रगुणिता प्रवृद्धा धृतिस्तुष्टिर्यस्यास्तादृशी सीता प्रियतमस्य रामस्य पदैश्चरणैरङ्कितान् चिह्नितान् भूमिभागान् शीतशीतान् अत्यन्तशीतलान्मेने । काव्यलिङ्गमलङ्कारः । मन्दाक्रान्ता वृत्तम् ॥ २७ ॥ **यमुना** । निष्करुणः पृथिवीतापनेनेति भावः । **सरयूः** । निर्दया कण्टकोपलावृतत्वादिति भावः ।

**गङ्गा**—( विहस्य । )अलमनयोरुपालम्भनेन । न खलु स्नेहानुगुणप्रवृत्तयो महाभूतवृत्तयः ।

**हंसः**—

कान्तेनाथ प्रणयमधुरं किंचिदाचञ्चलेन
श्रान्ता श्रान्ता जनकतनया वल्कलस्याञ्चलेन ।
चक्रे वीतश्रमजलकणस्निग्धमुग्धाननश्रीः
श्रान्तः श्रान्तः स पुनरनया लोचनस्याञ्चलेन ॥ २८ ॥

**गङ्गा**—अहो, कमनीयता विनिमयस्य ।

**यमुना**—तदो तदो ।

**हंसः**—ततः

प्रत्यासन्ने भवति निलये संप्रयाता पुरस्ता-
त्तूर्णं क्षिप्तैः कतिपयपदैश्चापमादाय हस्तात् ।

---

१. ततस्ततः ।

---

**गङ्गा** ।अनयोः सूर्यपृथिव्योः । महाभूतानां पृथिव्यप्तेजोवाय्वाकाशानां वृत्तयः वर्तनानि स्नेहानुगुणा प्रेमानुसारिणी प्रवृत्तिः प्रवर्तनं यासां तादृश्यो न भवन्तीत्यर्थः । महान्तो हि स्वपरेषु समदर्शिन इति भाव· । **हंसः** । **कान्तेति** । अथ तापितभूसञ्चरणानन्तरं श्रान्ता श्रान्ता अतिक्रान्ता जनकतनया सीता कान्तेन रामेण, प्रणयमधुरं यथा तथा किञ्चिदाचञ्चलेन ईषच्चरलेन वल्कलस्य वस्त्रस्याञ्चलेनाग्रेण वीतैः गतैः श्रमजलकणैः स्वेदबिन्दुभिः यत् स्निग्धं तेजः तेन मुग्धा सुन्दरा आननश्रीः मुखशोभा यस्या यस्य च तादृशी तादृशश्च ( स्निग्धस्तु मसृणे सान्द्रे रम्ये क्लीबे च तेजसीति शब्दार्णवे) चक्रे।आतपसञ्चारोत्पन्नस्वेदबिन्दवः वल्कलाञ्चलोपवीजनेन परिहृता इति भावः। अनया सीतया पुनः श्रान्तः श्रान्तः स रामः लोचनस्याञ्चलेन कटाक्षवीक्षणेनेत्यर्थः । वीतश्र० मुग्धाननश्रीश्चक्रे। अर्थः प्राग्वत् । अन्योन्यमलङ्कारः।अन्योन्यं नाम यत्र स्यादुपकार· परस्परमिति लक्षणात् । मन्दाक्रान्ता वृत्तम् ॥ २८ ॥ **प्रत्यासन्न इति** । निलये वासस्थाने प्रत्यासन्ने समीपे सति, तूर्णं सत्वरं क्षिप्तैः प्रेरितै· कतिपयपदैः पुरस्तादग्रे संप्रयाता गता सती हस्तादर्थात्का-

श्रान्तं कान्तं नवकिसलयैः सानुजं वीजयन्ती
जाता सीता समुचितविधिप्रक्रियावैजयन्ती ॥ २९ ॥

( पुनः सकौतुकम्। ) इदमन्यच्च सरसपेशलं कथयामि ते ।

जनकतनयाहस्तन्यस्तैर्मुहुर्नवपल्लवैः
शिशिरमसृणस्तत्कालं यः समेति समीरणः ।
प्रशममनुना स्वेदोद्भूतं जगाम कपोलयोः
सलिलमनयोः शोकोद्भूतं शशाम न नेत्रयोः ॥ ३० ॥

अपि च ।

कृतः स्थानेस्थाने विहितवरिवस्यापरिकरः ।
सुमित्रापुत्रेण श्रमशमनशीतो रघुपतिः ।
असावेतेनापि क्षणविरहबाष्पाञ्चितदृशा
कृतालोकश्चक्रे गलितसकलायासशिशिरः ॥ ३१ ॥

---

न्तस्य चापमादाय गृहीत्वा श्रान्तं सानुजं सलक्ष्मणं कान्तं रामं नवकिसलयैः नूतनपल्लवैर्वीजयन्ती सीता समुचितानां योग्यानां विधीनामुपचाराणां प्रक्रियायां करणे वैजयन्तीव केतनमिव जाता । केतनं यथोच्चस्थाने दृश्यते तथेयमपि समुचितकरणे सर्वासामुपरि जातेति भावः । काव्यलिङ्गयमकानुप्रासालङ्काराः । मन्दाक्रान्ता वृत्तम् ॥ १९ ॥ सरसं रसयुक्तं पेशलं चारु । जनकेति । जनकतनयायाः सीतायाः हस्तन्यस्तैः करस्थापितैर्नवपल्लवैस्तत्कालं तस्मिन्काले यः शिशिरेण शीतस्पर्शेन मसृणो लिप्तः समीरणो वायुर्मुहुः शश्वत् समेत्यागच्छति, अमुना समीरेण कपोलतलयोः स्वेदेन घर्मेणोद्भूतमुत्पन्नं सलिलं प्रशमं नाशं जगाम, नेत्रयोः शोकोद्भूतं न शशाम । पल्लववायुना बहिःश्रमपरिहारेऽपि सीताकृतपरिचर्यासमुद्भूतमन्तर्दुःखं न शशामेति भावः । परिसंख्यालङ्कारः । हरिणी वृत्तम् ॥ ३० ॥ कृत इति । सुमित्रापुत्रेण लक्ष्मणेन रघुपती रामः स्थानेस्थाने प्रतिस्थानं ( वीप्सायां द्विर्भावः ) विहितः कृतो वरिवस्यानां शुश्रूषाणां परिकरः आरम्भो यस्य ( यत्नारम्भौ परिकराविति त्रिकाण्डशेषः ) अत एव श्रमशमनेन शीतः शीतलः कृतः । एतेनापि रामेणाप्यसौ लक्ष्मणः क्षणविरहेण तावत्कालवियोगेन बाष्पैरश्रुभिरञ्चितया व्याप्तया दृशा लोचनेन कृत आलोको दर्शनं यस्य तादृशः अत एव गलितसकलायासेन नष्टसमग्रक्लान्त्या शिशिरश्चक्रे ।

**सरयूः**—कियतां पुनरह्नां परिवर्तेन रघुराष्ट्रमतिक्रान्तं वत्सैः ।

**हंसः**—अयि, कथमजानती वर्तसे रघूणामाधिपत्यम् ।

एते हि स्वशरावनम्रनिखिलक्ष्मापालमौलिज्वल-
न्माणिक्यस्फुरदंशुमांसलपदप्रेङ्खन्नखज्योतिषः ।
दूरोन्मुक्तचतुःसमुद्रलहरीविक्षिप्तशुक्तिस्खल-
न्मुक्तापङ्क्तिविनिर्मितैकवलयं भूमण्डलं भुञ्जते ॥ ३२ ॥

उत्तरकोसलास्त्रिचतुरैरेवाहोभिरतिक्रान्ताः । अथ पुरमथनमौलिमालती मालां मन्दाकिनीमचिरेण च कलिन्दगिरिकरिकपोलमदवारिधारां कालिन्दीमप्यतिक्रान्ताः ।

**गङ्गा**—( यमुनां प्रति । ) सखि, तदिदं यत्कथितवत्यसि ।

---

रामस्य स्ववियोगासहिष्णुत्वं दृष्ट्वा लक्ष्मणो गतश्रमोऽभूदिति भावः । अन्योन्यमलङ्कारः । शिखरिणी वृत्तम् ॥ ३१ ॥ **सरयूः** । कियतामह्नां दिवसानां परिवर्तनेन क्रमणेन रघुराष्ट्रं रघुस्वामिकदेशम् । **हंसः** । आधिपत्यं स्वामित्वमजानती सती । **एते इति** । एते राघवाः स्वशरेण स्वबाणेन स्वर-सेनेति पाठे स्ववीर्येणेत्यर्थः ( वीर्ये गुणे रागे द्रवे रस इत्यमरः ) अवन-म्राणां प्रह्वीभूतानां क्ष्मापालानां मौलिषु किरीटेषु ज्वलतां दीप्यमानानां माणिक्यानां रत्नविशेषाणां स्फुरदंशुभिः इतस्ततः प्रसरत्कान्तिभिः मांसलं पुष्टं पदेषु प्रेङ्खतां चलतां नखानां ज्योतिः प्रभा येषां ते तथोक्ताः, दूरोन्मु-क्ताभिश्चतुःसमुद्राणां लहरीभिस्तरङ्गैः विक्षिप्ताभ्यः पर्यस्ताभ्यः शुक्तिभ्यः स्खलन्तीभिः निर्गच्छन्तीभिर्मुक्तापङ्क्तिभिः विनिर्मितं रचितं एकवलयमेककटकं यस्य तादृशं, भूमण्डलं धरणिप्रदेशं भुञ्जते उपभुञ्जते । पालनार्थे तु परस्मै-पदप्रसङ्गः । भुजोऽनवन इत्यनवनभिन्नार्थ एवात्मनेपदविधानात् ॥ अनु-गुणवृत्त्यनुप्रासालङ्कारौ । प्राक्सिद्धः स्वगुणोत्कर्षोऽनुगुणः परसन्निधेरिति लक्षणात् ॥ शार्दूलविक्रीडितं वृत्तम् ॥ ३२ ॥ उत्तरकोसलास्तन्नामकरघुजनपदाः त्रिभिश्चतुर्भिर्वा त्रिचतुरैः ( संख्ययाव्ययेति बहुव्रीहिः ) अतिक्रान्ता उल्लङ्घि-ताः । पुरमथनस्य शिवस्य मालौ धम्मिल्ले मालतीमालां मन्दाकिनीं गङ्गां अचि-रेण च सत्वरमेव कलिन्दगिरिस्तदाख्यपर्वत एव करी तस्य कपोलमन्दवारिधारां कपोलस्थदानजलसन्ततिं कालिन्दीं यमुनाम् । **गङ्गा** । यत् द्वावपि तरुणौ एका चक्रवाकस्तनीत्यादि पूर्वोक्तं, तत् तदेवेदं हंसेन कथितं, अतस्त्वदुक्तं

---

१. स्वरसेति पा० ।

**सरयूः**—

तपनसुतया देव्या यद्वा भगीरथकन्यया
चपलविपुलैर्वीचीहस्तैश्चिरादपि किं कृतम् ।
ललितलवलीभङ्गैरङ्गैर्वनं चलिता सखी
जनकतनया पाणौ धृत्वा न यद्विनिवारिता ॥ ३३ ॥

**गङ्गा**—( विहस्य । ) सखि, कथं परोक्ष इव समक्षेऽपि नितान्तमुपालम्भसे ।

**यमुना**—तंदो तदो ।

**हंसः**—ततश्च शबरशरदलितविन्ध्यकरिकुम्भतटीविमुक्तमुक्ताफलमकरकोरेकिततीरलतावितानपरिच्छदां शर्मदां नर्मदामतीत्याचिरेण चपलकर्णाञ्चलपरिमिलितमदकरिकपोलचलितसहचरसमागममुदितमधुकरवधूमधुरसरसकुसुमकेसरं गोदावरीपरिसरं प्रयाताः ।

---

१. ततस्ततः

---

न मिथ्येति भावः । **सरयूः । तपनेति** । ललितां हृद्यां लवलीं तन्नामकलतां भञ्जन्ति अभिभवन्ति तैः कान्त्या लवलीजेतृभिरिति भावः । अङ्गैरुपलक्षिता सती पतिव्रता सीता वनं चलिता प्रस्थिता सती पाणौ करे धृत्वा यद्यस्मान्न निवारिता न प्रतिषिद्धा, तत्तस्माद्देव्या तपनसुतया यमुनया, यद्वा अथवा भगीरथकन्यया भागीरथ्या चपलैश्चञ्चलैर्विपुलैर्विशालैश्च वीचयस्तरङ्गा एव हस्तास्तैः चिरादपि बहुकालेनापि किंकृतं नकिमपीत्यर्थः । काव्यलिङ्गालङ्कारः । हरिणी वृत्तम् ॥ ३३ ॥ **गङ्गा** । परोक्षे इव अप्रत्यक्षे इव ( प्रतिपरिसमनुभ्य इत्यच् । परोक्षेलिङिति निपातनात्परस्योकारादेश ।तृतीयासप्तम्योरित्यलुक्) **हंसः** । शबराणां म्लेच्छविशेषाणां शरदलिताभ्यः बाणविदीर्णाभ्यः विन्ध्यकरिणां तदाख्यगिरिचरगजानां कुम्भतटीभ्यः गण्डस्थलीभ्यो विमुक्तमुक्ताफलमकरैश्च्युतमौक्तिकगणैः कोरकितानां सञ्जातकलिकानां तीरलतानां वितानान्येव विस्तारा एव परिच्छदः परिवारो यस्यास्तां शर्मदां सुखदां नर्मदामतीत्योल्लङ्घ्याचिरेणाल्पकालेन, चपलकर्णाञ्चलैः चञ्चलश्रवणप्रान्तैः परिमिलितेभ्यः सम्बद्धेभ्यः करिकपोलेभ्यः चलितानां निर्गतानां सहचराणां प्रियाणां समागमेन

---

१. विपुलेति पा० । २. तारकितेति पा० ।

**यमुना**—[1]हद्धि हद्धि । तत्थ हि लङ्केसरबहिणीत्तणेण प-मत्ता सुप्पणहा णाम रक्खसी परिभमइ ।

**हंसः**—अतिप्रमत्तेति वक्तव्यम् । सा हि सौमित्रिशरदलितनि-जनासिरुकाधिरसीधुरसमास्वादितवती ।

**गङ्गा**—( सातङ्कम् । ) तदाकर्ण्य । किं प्रतिपन्नं जनस्थानवासिना निशाचरचक्रेण ।

**हंसः**—करकलितकरालकुन्तकरवालकार्मुकेण निशाचरचक्रेण रामं प्रति प्रचलितम् ।

**गङ्गा**—ततस्ततः ।

**हंसः**—ततश्चेदं विज्ञप्तः सौमित्रिणा रामभद्रः—'आर्य, अयं मे

नक्तंचरेन्द्रभगिनीसुकुमारनासा-
निर्मुक्तरक्तलवलिप्तशितैकधारः ।
उत्कण्ठते कठिनराक्षसकण्ठजानां
पानाय कर्दमसृजामसृजां कृपाणः ॥ ३४ ॥

---

१. हा धिक् धिक् । तत्र हि लङ्केश्वरभगिनीत्वेन प्रमत्ता शूर्पणखा नाम राक्षसी परिभ्रमति ।

---

संयोगेन मुदिता हृष्टाः मधुकरवधूनां भ्रमरीणां मधुराणि प्रियाणि ( स्वादुप्रियौ तु मधुरावित्यमर) सरसानि समकरन्दानि यानि कुसुमानि प्रसूनानि तेषां केसरः किञ्जल्का यस्मिस्तं गोदावर्याः परिसरं पर्यन्तदेशम् । **यमुना**। शूर्पाणीव नखानि यस्याःसा शूर्पणखा (पूर्वपदात्संज्ञायामिति णत्वम् ) । **हंसः** । सौमित्रिशरेण द-लितायाश्छिन्नायाः निजनासिकाया रुधिरमेव सीधुर्मद्यं तस्य रसं द्रवमास्वा-दितवती । तस्या नासिकां लक्ष्मणोऽच्छिनदिति भावः । **गङ्गा** । निशाचरच-क्रेण राक्षसवृन्देन किं प्रतिपन्नमङ्गीकृतम् । **हंसः** । करकलितानि हस्तधृतानि करालानि भीषणानि. कुन्तकरवालकार्मुकाणि प्रासकृपाणधनूंषि येन।**नक्तञ्च-रेन्द्रेति** । नक्तंचरेन्द्रस्य रावणस्य भगिन्या. शूर्पणखाया. नासारुधिरलवैः ना-सिकाशोणितबिन्दुभिः लिप्ता दिग्धा शिता तीक्ष्णा एका केवला धारा यस्य तादृशोऽयं मे कृपाणः कठिनेषु कठोरेषु राक्षसकण्ठेषु जातानाम्(सप्तम्यां जनेर्ड-इति डः)कर्दमं पङ्कं सृजन्ति तेषामसृजां रुधिराणां पानाय प्राशनायोत्कण्ठते अभि-लषति । शूर्पणखानासिकारुधिरेण प्रत्युत्पन्नरुधिरभक्षणरुचिरयं बहलरुधिरपान-मभिलषतीति भावः । यमकानुप्रासालङ्कारौ । वसन्ततिलका वृत्तम् ॥ ३४ ॥

---

१. क्षरणंति पा० । २. रुधिरसीकरमिति०

इदमुक्तं च रामभद्रेण—'वत्स, अस्त्येतत् । किंतु प्रकृतिभीरुः खल्वबलाजनः । तेन हि जानकीसनाथगर्भां पर्णशालामेव समुत्खातकरवालः पालयतु भवान् । अयमहमचिरात्– 'इत्यर्धोक्त एव निशाचरचक्रं प्रति प्रचलितः संमिलितश्च ।

**गङ्गा**—( सत्रासम् । ) अनन्तरं किं वृत्तम् ।

**हंसः**—

अथाहूतस्तादृक्समरजयसंरम्भरभस-
प्रसर्पद्गम्भीरध्वनिगरिमगर्जद्दशदिशम् ।
मुहूर्तात्सौमित्रिः

**सरयूः**—तत्किं रामेण ।

**हंसः**—नहि नहि ।

**सरयूः**—अयि देवि भागीरथि, त्रायस्व मां नूनं निशाचरचक्रेणेति वक्ष्यति ।

**हंसः**—

विपिनचरनक्तंचरचमू-
वधक्रीडाकिंचिन्मुकुलितरुषा रामधनुषा ॥ ३५ ॥

---

जानक्या सनाथो युक्तो गर्भोन्तःप्रदेशो यस्याः । समुत्खातः कोशादुद्धृतः करवालो येन तादृशः, पालयतु रक्षतु । **हंसः** । **अथेति** । अथ राक्षससंमेलनानन्तरं मुहूर्तात्सौमित्रिर्लक्ष्मणः तादृश्यनिर्वाच्ये समरे रणे यो जयोऽर्थाद्रामस्य तद्विषये यः संरम्भस्य क्रोधस्य रभसो वेगः आवेशः तेन प्रसर्पत इतस्ततो व्यामुवतः गम्भीरध्वनेर्गभीरशब्दस्य गरिम्णा गुरुत्वेन ( पृथ्वादिभ्य इतीमनच् ) गर्जन्त्यः दश दिशा यस्मिन्कर्मणि यथा तथा आहूतः आकारितः । **सरयूः** । **त्रायस्वेति** । रामं पराभूय, निशाचरचक्रेण लक्ष्मण आहूत इति शङ्कया त्रायस्वेत्युक्तिः । **हंसः** । विपिनचराणामरण्यसंचारिणां नक्तंचरचमूनां राक्षसबलानां वध एव क्रीडा तया किञ्चिन्मुकुलिता ईषत्सङ्कुचिता रुट् क्रोधो यस्य तेन रामधनुषा आहूत इति सम्बन्धः । अनुप्रासालङ्कारः । शिखरिणी वृत्तम् ॥ ३५ ॥

---

१. दिशेति पा० ।

सरयूः—दिष्ट्या जीवितास्मि । सेयं प्रथमदर्शिततीव्रातपा पीयूषवृष्टिः ।

यमुना—तदो तदो ।

हंसः—ततः प्रमुदितमुनिजनशतसमुद्भूतसाधुवादश्रवणविनोदेन कतिचिदहानि नयन्ति स्म ।

अथाविरासीत्कुरुविन्दलोचनो
द्रुमान्तरे विद्रुमशृङ्गशोभितः ।
विभक्तमुक्तामयचित्रमण्डनो
मनोपहारी हरिणो हिरण्मयः ॥ ३६ ॥

गङ्गा—( स्वगतम् । ) नूनमयनर्थाङ्कुरः । ( प्रकाशम् । ) ततस्ततः ।

हंसः—

भ्रूवल्लीविजितमनोजचारुचाप-
श्चापश्रीजितयुवतीमनोरमभ्रूः ।
सीतायास्तमनुससार लोचनान्तः
कान्तश्च स्फुरदसितोत्पलाभिरामः ॥ ३७ ॥

---

१. ततस्तत. ।

---

हंसः । प्रमुदितानां हृष्टानां मुनिजनानां शतैः, शतशब्दोऽत्र बहुत्वबोधकः । समुद्भूतस्योत्पन्नस्य साधुवादस्य साधुसाध्वितिवचनस्य श्रवणेन यो विनोदः कौतूहलम् ( कौतूहलं विनोदः स्यादिति हलायुधः ) तेन ( हेताविति तृतीया)। अथेति । कुरुविन्दस्य रत्नविशेषस्य लोचने यस्य तादृशः, अथवा कुरुविन्द इव लोचने यस्य सः । एवमग्रेऽपि । विद्रुमस्य प्रवालस्य शृङ्गाभ्यां शोभितः। विभक्तानि पृथक्स्थितानि परस्परमसंपृक्तानीति भावः मुक्तामयानि मौक्तिकप्रचुराणि चित्राणि तिलकानि भूषणानि यस्य, मनांस्यपहरति तच्छीलः, हिरण्मयः स्वर्णमयो हरिण. द्रुमान्तरे वृक्षमध्ये आविरासीत् प्रादुरभूत् । अनुप्रासालङ्कारः । वंशस्थं वृत्तम् ॥ ३६ ॥ भ्रूवल्लीति । भ्रूवल्ल्या भ्रुकुट्या विजितः मनोजस्य मदनस्य चारू रुचिरश्चापो येन, भ्रुवो वक्रत्वाच्चापसाम्यमिति भावः । सीतायाः लोचनान्तः कटाक्षः तं मृगमनुससार अनुजगाम । सीता मृगमपश्यदिति भावः । चापश्रिया धनुःशोभया जिता युवत्याः मनोरमा भ्रूर्येन तादृशः असितोत्पलमिव नीलकमलमिवाभिरामः कान्तो रामश्च

ततः

त्रासातुरेण हरिणेन सहैव तेन
दूरं प्रयाति हृदये जनकात्मजायाः ।
सौमित्रिराश्रमपदात्कृतचापपाणि-
र्द्राङ्निर्जगाम च विवेश च कोऽपि भिक्षुः ॥ ३८ ॥

**गङ्गा**—ततस्ततः ।

**हंसः**—ततः

इतो बाणं रामः क्षिपति हरिणे मुक्तकरुणः
सचापः सौमित्रिः स्वजनमनुयाति द्रुतमितः ।
इतः सीताभिक्षामुपनयति भिक्षोः करतले
त्रयं व्योम्नि प्रेङ्खन्युगपदहमालोकयमिदम् ॥ ३९ ॥

**सरयूः**—ततस्ततः ।

**हंसः**—ततः

कनकहरिणगात्रे बाणपातावलोका-
द्विमुखहृदयवृत्तिर्लोचने संनिमील्य ।

---

तमनुससारेति सम्बन्धः । यथासंख्यतुल्ययोगिताऽनुप्रासालङ्काराः । प्रहर्षिणी वृत्तम् ॥ म्नौ ज्रौ गस्त्रिदशयतिः प्रहर्षिणीयमिति लक्षणात् ॥ ३७ ॥ **त्रासातुरेणेति** । त्रासातुरेण भीतिपीडितेन तेन हिरण्मयेन हरिणेन सहैव जनकात्मजायाः हृदये दूरं प्रयाति सति, सौमित्रिर्लक्ष्मणः कृतश्चापः पाणौ येन तादृशः सन् आश्रमपदात्पर्णशालास्थानात् द्राग्झटिति निर्जगाम च, कोऽप्यपरिचितो भिक्षुर्विवेश च । सहोक्तिसमुच्चयालङ्कारौ । वसन्ततिलका वृत्तम् ॥ ३८ ॥ **इत इति** । इतोऽत्र रामः मुक्ता करुणा येन तादृशः सन् हरिणे बाणं क्षिपति मुञ्चति, इतः सौमित्रिः सचापः सन् द्रुतं शीघ्रं स्वजनं राममनुयाति अनुसरति, इति सीता भिक्षोः करतले भिक्षामुपनयति, इदं पूर्वोक्तक्रियात्रयं व्योम्न्याकाशे प्रेङ्खन्नहं युगपदेकसमये आलोकयमपश्यम् । समुच्चयालङ्कारः । शिखरिणी वृत्तम् ॥ ३९ ॥ **कनकेति** । अयि सरयु, कनकहरिणस्य गात्रे शरीरे बाणपातस्यावलोकात्प्रेक्षणाद्धेतोः विमुखहृदयवृत्तिः पराङ्मुखचित्तवृत्तिः सन्, अतिरम्यहरिणसुकुमारतनौ कठो-

कथयितुमयि चेदं रामवृत्तान्तजातं
सरयु तव तटान्तं तूर्णमेवावतीर्णः ॥ ४० ॥

तदनुजानीत मां देव्यः, सलिलावगाहनाय । श्रान्तोऽस्मि ।

तिस्रः—

विहरास्मिन्रमणीये शुचिपयसि स्मेरनीरजे सरसि ।
पुरतरुणीचरणरणन्मणिनूपुरकूजितोत्कुतुकः ॥ ४१ ॥

( हंसः प्रणम्य निष्क्रान्तः । )

गङ्गा—सखि सरयु, अनेन वृत्तान्तक्रमेण कातरं मे मनः ।

सरयूः—अलं कातरतया । नन्वनेन हि नूपुरोद्देदेन स्मृतं मया, यत्किल वनगमनोद्यतां जानकीमिदमुक्तवती करकलितनूपुरद्वया पतिव्रता सीमन्तिनीरत्नमरुन्धती ।

अधिचरणममू चमूरुनेत्रे
मृदुरणितौ मणिनूपुरौ विधेहि ।
अहरपि विरहं न यन्महिम्ना
हरिणदृशः सह वल्लभैर्लभन्ते ॥ ४२ ॥

---

ररामशरपतनदर्शनादिति भावः । लोचने सन्निमील्य इदं रामवृत्तान्तस्य जातं सङ्घं कथयितुं च तूर्णमेव सत्वरमेव तव तटान्तमवतीर्णः । अनुप्रासालङ्कारः । मालिनी वृत्तम् ॥ ४० ॥ देव्यः । गङ्गाद्याः तिस्रः । विहरेति । शुचिपयसि शुद्धजले, स्मेराणि फुल्लानि नीरजानि कमलानि यस्मिन् रमणीयेऽस्मिन्सरसि, पुरतरुणीनां पौरयुवतीनां चरणेषु रणन्ति शब्दायमानानि यानि मणिनूपुराणि रत्नमञ्जीराणि तेषां कूजितेषूत्कुतुकः उद्गतकौतूहलः सन् विहर संक्रीडस्व । अनुप्रासालङ्कारः । आर्या वृत्तम् ॥ ४१ ॥ गङ्गा । वृत्तान्तस्य हरिणभिक्षुवृत्तान्तस्य क्रमेण अनुक्रमेण । सरयूः । अनेन प्रसङ्गप्राप्तेन नूपुरोद्भेदेन नूपुरप्रस्तावेन । सीमन्तिनीषु स्त्रीषु रत्नं श्रेष्ठा पतिव्रता साध्वी अरुन्धती वसिष्ठपत्नी करकलितं हस्तधृतं नूपुरद्वयं यया तादृशी सती वनगमने उद्यतां प्रवृत्तां जानकीमिदं वक्ष्यमाणम् । अधिचरणमिति । हे चमूरुनेत्रे कुरङ्गनयने यन्महिम्ना हरिणदृशः वल्लभैः प्रियैः सह एकमप्यहः विरहं वियोगं न लभन्ते तादृशौ मृदु कोमलं रणितं

कृतवती च तथा जानकी ।

**गङ्गा**—इदानीं किमपि निर्वृतास्मि । सत्यवादिनी हि मे सखी वसिष्ठगृहमेधिनी । तदागच्छत । इमं वृत्तान्तं रघुकुलवत्सलाय सागराय निवेदयामः । ( इति परिक्रामन्ति । )

**गङ्गा**—( सविस्मयम् । ) अहो, प्रवाहवेगातिशयात्तत्क्षणादेव दूरमुपयाताः स्मो यदयमदूर एव गोदावरीसहचरः सागरः किमपि समालपन्नालोक्यते कल्लोलिनीकान्तः ।

(ततः प्रविशति गोदावरीसहचरः सागरः ।

**सागरः**—ततस्ततः ।

**सरयूः**—कथमिहापि किमपि वृत्तान्तशेषः प्रस्तूयते ।

**यमुना**—अवि णाम तं जेव्व हविस्सदि जं किर हंसेण णावगअम् ।

**गोदावरी**—ततः

रामोन्मुक्तैकबाणप्रणिहतहृदयः काञ्चनाङ्गः कुरङ्गः
सद्यो मारीचनामाऽजनि रजनिचरः सान्द्ररक्ताक्तवक्षाः ।
भिक्षुः सोऽपि क्षणार्धान्मणिखचितचलत्कुण्डलश्रेणिशोभा-
वीचीखेलत्कपोलस्फुरितदशशिराः कुम्भकर्णाग्रजोऽभूत् ॥ ४३ ॥

---

१. अपि नाम तदेव भविष्यति यत्किल हंसेन नावगतम् ।

---

ययोस्तावम् मणिनूपुरौ चरणयोरित्यधिचरणम् (विभक्त्यर्थेऽव्ययीभावः) विधेहि कुरु इत्युक्तवतीति पूर्वेण संबन्धः। काव्यलिङ्गमलङ्कारः। पुष्पिताग्रा वृत्तम्॥४२॥ **गङ्गा** । वसिष्ठस्य गृहमेधिनी पत्नी । परिक्रामन्ति सर्वा इत्यध्याहारः । **गङ्गा** । गोदावरीसहचरः गोदावरीसमेतः , कल्लोलिनीनां नदीनां कान्तः स्वामी । **गोदावरी** । **रामोन्मुक्तेति** । रामोन्मुक्तेनैकबाणेन प्रणिहत भिन्न हृदयं यस्य सः काञ्चनाङ्गः कुरङ्गो हरिणः, सद्यस्तत्क्षणे सान्द्रेण घनेन रक्तेनाक्तं लिप्तं वक्षो हृदयं यस्य तादृशो मारीचनामा राक्षसोऽजनि प्रादुरभूत् । ( दीपजनेति चिण् , जनिवध्योरिति वृद्धिनिषेधः )। स भिक्षुरपि क्षणार्धात् मणिखचितानां रत्नमिश्रितानां चलत्कुण्डलानां श्रेण्याः पङ्क्तेः शोभावीचिभिः कान्तिमयूखैः खेलद्भिर्विलसद्भिः कपोलैः स्फुरितानि उद्भासितानि दश शिरांसि मस्तकानि यस्य तथोक्तः कुम्भकर्णाग्रजो रावणोऽभूत्। विरोधाभासोऽलङ्कारः। स्रग्धरा वृत्तम्॥४३॥

**गङ्गा**—हा, हतास्मि । ( विमृश्य । ) अथवास्ति तन्मणिनूपुरद्वयम् ।

**सागरः**—अपि नाम मम वधूटिका स्पृष्टा निशाचरेण ।

**गोदावरी**—न स्पृष्टा ।

**सागरः**—कथमिव ।

**गोदावरी**—तथा हि ।

रजनिचरकराग्रस्पर्शसंपातविघ्नं
रचयितुमनुसूयाहस्तदत्ताङ्गरागात्[१] ।
बहलमनलपुञ्जः पिञ्जरज्योतिरुद्य-
न्कुवलयदलशीतां[२] संवृणोति स्म सीताम् ॥ ४४ ॥

**सागरः**—अहो, अत्रिपत्न्यास्तपःप्रभावः ।

**गोदावरी**—ततो वरुणमन्त्रचिन्तनाहूतनूतनबलाहकाञ्चलनिचुलितपाणिरस्पृशदेव

हा राम हा रमण हा जगदेकवीर
हा नाथ हा रघुपते किमुपेक्षसे माम् ।
इत्थं विदेहतनयां मुहुरालपन्ती-
मादाय राक्षसपतिर्नभसा जगाम ॥ ४५ ॥

**सरयूः**—अयि भागीरथि, कथमस्मद्भागधेयादरुन्धतीवाचोऽपि मृषा भविष्यन्ति ।

---

वधूटिका स्नुषा सीता । **गोदावरी** । **रजनिचरेति** । रजनिचराणां राक्षसानां कराग्रस्पर्शस्य यः सम्पातः सम्बन्धः तस्य विघ्नं रचयितुं कर्तुमनुसूयाहस्ताभ्यां दत्तादङ्गरागाद्विलेपनात्पिञ्जरं पीतरक्तम् । ( पीतरक्तस्तु पिञ्जर इति हैमः ) ज्योतिर्यस्य तादृशोऽनलपुञ्जः अग्निचयः, कुवलयदलानीव कमलपत्राणीव शीतां शीतलाम् । "अनेनाग्निवेष्टनेऽपि तस्या व्यथाभावः सूचितः"। बहलमत्यन्तं संवृणोति स्म आच्छादयति स्म (लट् स्मे इति लट्) । अनुप्रासालङ्कारः । मालिनी वृत्तम् ॥ ४४ ॥ **सागरः** । अत्रिपत्न्या अरुन्धत्याः । **गोदावरी** । वरुणमन्त्रस्य चिन्तनेनाहूतानां नूतनानां बलाहकानां मेघानामञ्चलेन प्रान्तेन निचुलितौ छादितौ पाणी यस्य सः । **हा रामेति** सुगमोर्थः **सरयूः** । अस्मद्भागधेयादस्माकं दुर्दैवादरुन्धतीवाचोऽपि "अधिचरणमम्

---

१. रागामिति पा० । २. ( स्कुवलयेति पा० ।

**गङ्गा**—नहि नहि ।

**सागरः**—(सविषादम्) ततः ।

**गोदावरी**—ततः शैलशिखराधिवासिना विहङ्गराजेन जटायुना पन्थानमवरुध्येदमुक्तो राक्षसेन्द्रः—

'आः पापिन्पश्यतो मे रघुतिलकवधूं चोरवृत्त्यापहर्तुं
सीतां शीतांशुलेखामिव गिरिशशिरःशायिनीमुद्यतोऽसि ।
एष च्छित्त्वा शिरांसि प्रखरनखमुखैर्दीप्तचूडाम[1]णीनि
त्वामद्याहं गरुत्मानुरगमिव सुधाकाङ्क्षिणं संहरामि ॥ ४६ ॥'

**गङ्गा**—स एष नूपुरप्रसादः ।

**सागरः**—(सहर्षम् ।) ततस्ततः ।

**गोदावरी**—

नखैस्तदीयैः कुलिशात्कठोरै-
र्भिन्दद्भिरङ्गानि निशाचरस्य ।
रथः स हेमाभरणो बभञ्जे
[2]नोजानकीलाभमनोरथोऽस्य ॥ ४७ ॥

---

इत्यादिपूर्वोक्ताः" मृषा भविष्यन्ति मञ्जीरसत्त्वेऽपि रामवियोगादिति भावः **गोदावरी**। विहायसि गच्छन्तीति विहङ्गाः ( गमेः सुपि वाच्य इति खच्, विहायसो विह च, खच्च डिद्वेति डित्त्वाट्टिलोपः ) तेषां राजा विहङ्गराजः तेन पक्षिश्रेष्ठेनेत्यर्थः । **आः पापिन्निति** । आ इति क्रोधे, पापिन् रावण पश्यतो मे पश्यन्तं मामनादृत्येत्यर्थः । ( षष्ठी चानादर इति षष्ठी ) गिरिशस्य शङ्करस्य शिरसि शेतेऽसौ ( ताच्छील्ये णिनिः ) तां शीतांशुलेखां चन्द्रकलामिव, रघुतिलकस्य रामस्य वधूं पत्नीं सीतां चोरवृत्त्या चौर्यकर्मणाऽपहर्तुमुद्यतोऽसि । एषोऽहमद्य दीप्ताः प्रकाशिताः चूडामणयः शिरोरत्नानि येषु तानि तव शिरांसि प्रखरैस्तीक्ष्णैर्नखमुखैः नखाग्रैः "न तु नखानि च मुखश्चेति द्वन्द्वः,तथा सति प्राण्यङ्गत्वादेकवद्भावः स्यात्" छित्त्वा गरुत्मान् गरुडः सुधाममृतं काङ्क्षते तच्छीलः तं उरगमिव पन्नगमिव त्वां संहरामि हन्मीत्यर्थः । उपमावृत्त्यनुप्रासालङ्कारौ। स्रग्धरा वृत्तम् ॥ ४६ ॥ **नखैरिति** । कुलिशाद्वज्रात्कठोरैरत एव निशाचरस्य रावणस्याङ्गानि भिन्दद्भिर्विदारयद्भिस्तदीयैर्जटायुसम्बन्धिभिर्नखैः सहेमाभरणः हिरण्यालङ्कारसहितो रथ एव बभञ्जे भग्नः । अस्य रावणस्य जानकीलाभस्य मनोरथः सङ्कल्पः नो बभञ्जे । परिसंख्यालङ्कारः । उपजातिवृत्तम्॥४७॥

---

१. मणीभिरिति मणिमिति च पाठान्तरम् । २. न जानकीति पाठः ।

**सागरः**—ततः ।

**गोदावरी**—ततश्च निशितनखनिस्त्रिंशनिर्घातभैरवे समरसंरम्भे संभ्रमकातरायां रावणैककरस्थितायां च जानक्यां

तस्याः क्वणन्किमपि नूपुर एक एव
क्रन्दन्निवातिकरुणं चरणात्पृथिव्याम् ।

**गङ्गा**—हा, अधुना निराशाः स्मः ।

**गोदावरी**—

आस्तिष्ठतिष्ठ निहतोऽसि खलेति जल्प-
न्दूराज्जटायुरपि खड्गहतः पपात ॥ ४८ ॥

**सागरः**—हा वत्से जानकि, अधुना नीतासि निशाचरेण । (इति मूर्च्छति ।)

**गङ्गाः**—( उपसृत्यांशुकान्तेन वीजयन्ती । ) अये रघुकुलवत्सल, समाश्वसिहि समाश्वसिहि ।

**सागरः**—कथमिह गङ्गापि ।

**गङ्गा**—यमुनासरय्वौ च ।

**सागरः**—तन्मां मिलिताः सर्वा एव धारयत । अयमहं हतोऽस्मि शोकस्रोतसा ।

**गङ्गा**—अलमतिकातरतया । यत. ।

प्रायो दुरन्तपर्यन्ताः संपदोऽपि दुरात्मनाम् ।
भवन्ति च सुखोदर्का विपदोऽपि महात्मनाम् ॥ ४९ ॥

---

निशितानां तीक्ष्णानां नखानां, निस्त्रिंशस्य खड्गस्य च क्रमाज्जटायुरावणयोरिति भावः । निर्घातैः प्रहारैर्भैरवे भीषणे समरसंरम्भे युद्धसंवेगे । **तस्या इति** । तस्याः सीतायाश्चरणादेक एव नूपुरः अतिकरुणं क्रन्दन्निवाक्रोशन्निवकिमप्यनिर्वचनीयं क्वणन् सन् पृथिव्यां पपात । **गङ्गा** । निराशाः, अरुन्धतीदत्तनूपुरपतनादिति भावः । **गोदावरी** । आः खल नीच तिष्ठतिष्ठ ( वाक्यादेरामन्त्रितस्येति कोपे द्वित्वम् ) निहतोसि मयेति शेषः। इति दूराज्जल्पन् जटायुरपि खड्गहतः सन् पृथिव्यां पपात । तुल्ययोगितालङ्कारः । वसन्ततिलका वृत्तम् ॥ ४८ ॥ **गङ्गा** । **प्राय इति** । दुरात्मनां दुष्टाशयानां सम्पदोऽपि श्रियोऽपि दुरन्तो दुष्परिणामः

---

१. तस्माच्चरणा दिति पा० । २. क्वणत्किमपीति पा० । १. हीति पा० ।

**सरयूः**—सखि गोदावरी, अपि जानासि नूपुरवृत्तान्तम्।

**गोदावरी**—अथ किम्। कथितमेव वनदेवतया—'तमादाय कोऽपि कपिः ऋष्यमूकसंमुखं गतः' इति।

**सागरः**—रामभद्रस्य तु को वृत्तान्तः।

**गोदावरी**—रामभद्रोऽपि सीताविरहविह्वलः ;सौमित्रिणा धार्यमाणस्तामेव दिशं प्रतस्थे।

(नेपथ्ये।)

सखि कालिन्दि, वर्धसे।

**यमुना**—का उण इमाइं सूईसलाआविद्धाइं मह णहाइं अलत्तअरसेण सिञ्चदि।

(प्रविश्य।)

**तुङ्गभद्रा**—जयतु जयतु नदीनाथः।

**सागरः**—कथं पुनर्वर्धते कालिन्दी।

**तुङ्गभद्रा**—भ्रातुः सुग्रीवस्य चक्रवर्तिपदलाभेन।

**यमुना**—दाणिं चन्दणचण्डातपलिम्पन्तपासजुअला वट्टामि।

**सागरः**—कथं पुनर्वालिपालितापि कपिराज्यलक्ष्मीः सुग्रीवमनुसंक्रान्ता।

**तुङ्गभद्रा**—कथमद्यापि वालिकथा।

**सागरः**—कथमिव।

---

१. का पुनरिमानि सूचीशलाकाविद्धानि मम नखान्यलक्तकरसेन सिञ्चति।

२. इदानीं चन्दनचण्डातपलिप्यमानपार्श्वयुगला वर्ते।

---

पर्यन्ते निकटे यासां तादृश्यः च परं महात्मनां साधूनां विपदोऽपि सुखमुदर्कमुत्तरफलं यासां तादृश्यो भवन्ति। अप्रस्तुतप्रशंसालङ्कारः। श्लोकश्छन्दः॥४९॥ **यमुना**। सूच्येव शलाका तया विद्धानि क्षतानि नखानि अलक्तकरसेन लाक्षारसेन सिञ्चति। लाक्षायाः व्रणरोपकत्वादिति भावः। उक्तञ्च लाक्षागुणदोषप्रकरणे **निघण्टरत्नाकरे**। कुष्ठं व्रणञ्च त्वग्दोषं दाहञ्चैव विनाशयेदिति। **सुश्रुते**ऽपि। मञ्जिष्ठोशीरलाक्षाश्चेत्युपक्रम्य यथालाभं समाहृत्य तैलमेभिर्वि-

**तुङ्गभद्रा**—ननु नूपुरप्रदादनविश्वासिते[1] रामचन्द्रे[2] आत्मानं सुग्रीवं च समर्पयता हनूमता तथा व्यवसितं यथा-

सहेलं हत्वैनं हरिणमिव हैमं रघुपतिः
कपीनां साम्राज्ये प्रणतमभिषिञ्चन्रविसुतम्[3] ।
अपि ध्वंसाच्छत्रोर्नृपतिमपि चक्रे फलभुजा-[4]
मपि प्रीतं चक्रे निजकुलगरिष्ठं दिनकरम्[5] ॥ ५० ॥

**सागरः**—ततः किं वृत्तम् ।

**तुङ्गभद्रा**—ततः सुग्रीवेणापि

परिम्लानां मालामिव ललितसौरभ्यरहिता-
मपि स्थाने स्थाने विचिनुत वधूटीं दिनमणेः ।
इति स्वेनैवोक्ताः कुमुदनलनीलाङ्गदमुखा
हनूमत्संयुक्ता दिशि दिशि नियुक्ताः कपिभटाः ॥ ५१ ॥

**सागरः**—इदानीमुज्जीवितोऽस्मि ।

**गोदावरी**—किं भवानेव । नन्विदानीमखिलोऽपि जीवितो जनः ।

**सागरः**—एवमेतत् । सकलजनमनःसाधारणी हि रामचन्द्रमा-

---

पाचयेत् । सद्यो व्रणानां सर्वेषामदुष्टानान्तु रोपणमिति । **तुङ्गभद्रा** । नूपुरप्रदानेन विश्वासिते प्रत्यायिते । तथा व्यवसित अनुष्ठितम् । **सहेलमिति** । रघुपती रामः हैमं हरिणमिव कनकमृगमिव एनं वालिनं हत्वा, प्रणतं नम्रं रविसुतं सुग्रीवं कपीनां मर्कटानां साम्राज्ये सार्वभौमपदे अभिषिञ्चन् सन्, शत्रोर्वालिनो ध्वंसान्नाशात् फलभुजां कपीनां नृपतिं राजानमपि चक्रे, निजकुलस्य स्ववंशस्य गरिष्ठमतिपूज्यं दिनकरं सूर्यमपि यथा प्रीतं प्रसन्नञ्चक्रे, तथा व्यवसितमिति पूर्वेणान्वयः । तुल्ययोगिताकाव्यलिङ्गालङ्कारौ । शिखरिणी वृत्तम् ॥ ५० ॥ **परिम्लानामिति** । परिम्लानामतिम्लानामत एव ललितेनेप्सितेन सौरभ्येण सौगन्ध्येन, सीतापक्षे तु मनोज्ञत्वेन रहिताम् ( सौरभ्यन्तु मनोज्ञत्वे सौगन्ध्ये इति मेदिनी ) मालामिव पुष्पमालामिव दिनमणेः सूर्यस्य वधूटीं स्नुषां सीतामित्यर्थः । स्थानेस्थाने प्रतिस्थानम् ( वीप्सायां द्विर्वचनम् ) विचिनुत अन्विष्यतेति स्वेनैव सुग्रीवेणैवोक्ताः कुमुदनलनीलाङ्गदा मुखे अग्रभागे येषां ते हनूमता संयुक्ताः कपिभटाः दिशिदिशि प्रतिदिशं सुग्रीवेणापि नियुक्ताः प्रेषिता इत्यर्थः । उपमालङ्कारः । शिखरिणी वृत्तम् ॥ ५१ ॥ **सागरः** । राम-

---

१. विश्वासितेनेति पा० । २. रामचन्द्रेणेति पा० । ३. स्वसुतमिति पा० । ४. फलभुजामिति पा० । ५. दिनमणिमिति पा० ।

धुरी। नन्विहैव पश्य।

नेदीयसी हि सरयूस्तपनोद्भवेयं
भागीरथीयमुदयः सगरान्ममापि।
इत्यन्वयाद्रघुकुले यदि पक्षपात-
स्तद्वत्सला किमिति वामपि चित्तवृत्ति ॥ ५२ ॥

(ऊर्ध्वमवलोक्य। सविस्मयम्।)

विलासैर्दम्भोलेर्दलितगरुतः सर्वगिरयः
स चैको मैनाकः पयसि मम मग्नो निवसति।
अये कोऽयं शैलः स्फुरदमितगव्यूतिमहिमा
हिमाद्रिर्विन्ध्यो वा लघुतरगतिर्लङ्घयति माम् ॥ ५३ ॥

तदागच्छत। निरूपयामस्तावत्कोऽयमिति।

(इति निष्क्रान्ताः सर्वे।)

## इति पञ्चमोऽङ्कः।

---

चन्द्रस्य माधुरी माधुर्यं हृदयङ्गमत्वमित्यर्थः। सकलजनमनसा साधारणी समानेत्यर्थः। तत्र प्रमाणं दर्शयति नन्विहैवेत्यादिना। नेदीयसीति। सरयूः नेदीयसी अतिनिकटवर्तिनी (अन्तिकबाढयोरिति नेदादेशः) अनेन सम्बन्धो वर्णितः। इयं यमुना तपनोद्भवा सूर्यतनया रामस्यापि सूर्यवंशोद्भववादनयोरपि सम्बन्धः। इयं गङ्गा भागीरथी रामपूर्वजभगीरथसम्बन्धिनी (तस्येदमित्यण्। टिड्ढेति ङीप्) ममाप्युदय उत्पत्तिः सगरात् तन्नामकरामपूर्वजात् इति पूर्वोक्तप्रकारेणान्वयात्सम्बन्धाद्रघुकुलेऽस्माकं यदि पक्षपातः, तर्हि वामपि युवयोरपि गोदातुङ्गभद्रयोरित्यर्थः,। चित्तवृत्तिः किमिति वत्सला प्रेमवती। यतः सम्बन्धाभावेऽपि भवत्योर्वात्सल्यमतः सकलजनेति पूर्वोक्तं युक्तमेवेति भावः। अनुमानालङ्कारः। वसन्ततिलका वृत्तम् ॥ ५२ ॥ विलासैरिति। दम्भोलेर्वज्रस्य विलासैश्चेष्टितैः सर्वे च ते गिरयश्च सर्वगिरयः दलिताश्छिन्ना. गरुत. पक्षा येषां तादृशाः वर्तन्त इति शेषः। पक्षसहितस्तु एको मैनाकः तन्नामकपर्वतः स च मम पयस्युदके मग्नः सन्निवसति तिष्ठति। अये इति संभ्रमे। स्फुरन्त्यमितगव्यूतिभिः असङ्ख्यक्रोशयुगपरिमितविस्तारैर्महिमा माहात्म्यं यस्य तादृशः लघुतरगतिः शीघ्रतरगतिः सन् मां लङ्घयति अयं हिमाद्रिर्विन्ध्यो वा कः शैलो भवेदिति शेषः। अनेन हनुमत्कृतमब्धिलङ्घनं सूचितम्। सन्देहालङ्कारः। शिखरिणी वृत्तम् ॥ ५३ ॥

**समाप्तोऽयं पञ्चमोऽङ्कः ॥**

---

१. किमपीति पा०।

# षष्ठोऽङ्कः ।

——:※:——

( ततः प्रविशतो रामलक्ष्मणौ । )

**रामः**—

सौमित्रे, ननु सेव्यतां तरुतलं चण्डांशुरुज्जृम्भते

**लक्ष्मणः**—

चण्डांशोर्निशि का कथा रघुपते चन्द्रोऽयमुन्मीलति ।

**रामः**—

वत्सैतद्विदितं कथं नु भवता

**लक्ष्मणः**—

धत्ते कुरङ्गं यतः

**रामः**—

क्वासि प्रेयसि हा कुरङ्गनयने चन्द्रानने जानकि ॥ १ ॥

(पुनर्विलोक्य । ) हन्त । संतापेन प्रतारितोऽस्मि । कथमयं गगनतलाधिरोही रोहिणीहृदय[1]नन्दनश्चन्द्रः । ( चन्द्रं प्रति । )

---

षष्ठोऽङ्कः ।

कविरिदानीमत्राङ्के रामस्य जानकीवियोगजनितदशां वर्णयिष्यन् रामलक्ष्मणयोः प्रवेशमादौ दर्शयति ततः प्रविशत इत्यादिना । **रामः** । **सौमित्र इति** । सौमित्रे लक्ष्मण तरुतलं ननु सेव्यताम् । ननुरत्रावधारणार्थकः । तत्र कारणमाह । चण्डांशुः सूर्यः उज्जृम्भते उदेति । **लक्ष्मणः** । हे रघुपते राम निशि रात्रौ चण्डांशोः का कथा का वार्ता । उदयासम्भवादिति भावः । अयं दृश्यमानश्चन्द्र उन्मीलति उदयते । **रामः** । वत्स सौमित्रे एतत् चन्द्र एवायं न तु सूर्य इति भवता त्वया कथं विदितं ज्ञातम् । नुः प्रश्नार्थकः । **लक्ष्मणः** । यतो यस्मात्कुरङ्गं हरिणं धत्ते धरति । अतः चन्द्रोऽयं न तु सूर्य इति भावः । **रामः** । हा कुरङ्गनयने हरिणाक्षि चन्द्रानने इन्दुमुखि जानकि क्वासि । अत्र उन्मादस्मृतिदशे वर्णिते । उक्तञ्च **साहित्यदर्पणे** । अभिलाषश्चिन्तास्मृतिगुणकथनोद्वेगसम्प्रलापाश्च ॥ उन्मादोऽथ व्याधिर्जडतास्मृतिरिति दशात्र कामदशा इति । तत्रोन्मादश्चापरिच्छेद इत्यादिविशेषलक्षणं च । अनुमानस्मृत्यलङ्कारौ । अनुमानं तदुक्तं यत्साध्यसाधनयोर्वच इति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ १ ॥ प्रतारितोऽस्मि वञ्चितोऽस्मि । गगनतलमधिरोहति तच्छील. । रोहिण्यास्तन्नामक-

---

१. रोहिणीरमण इति पा० ।

रजनिकर करास्ते बान्धवाः कैरवाणां
सकलभुवनचेष्टाजागरूका जयन्ति ।
न कथयसि कथं तत्कुत्र सा जानकी मे
त्वमपि[1] मृगसहायः किञ्च[2] नक्तचरोऽसि ॥ २ ॥

लक्ष्मणः—( स्वगतम् । ) कथमयमभिषङ्गतरङ्गस्तरलीकरोत्यार्यमानसम् । तदन्यतो नयामि । ( प्रकाशम् । ) आर्य, अयमितो विलोक्यतां चपलचञ्चुपुटाचान्तशीतकर[3]किरणशीकरश्चकोरः ।

रामः—( चकोरं प्रति । )

तन्मे[4] विदेहतनयावदनं निवेद्य
भ्रातश्चकोर कुरु मां चरितार्थवृत्तिम्[5] ।

---

पत्न्या हृदयनन्दनश्चित्ततोषकः । **रजनिकरेति** । हे रजनिकर चन्द्र कैरवाणां बान्धवाः मित्राणि विकाशकत्वादिति भावः । ते तव कराः सकलभुवनानां चेष्टासु व्यापारेषु जागरूकाः सावधानाः साक्षिण इति यावत् । उक्तञ्च । आदित्यचन्द्रावनिलोऽनलश्च द्यौर्भूमिरापो हृदयं यमश्च । अहश्च रात्रिश्च उभे च सन्ध्ये धर्मोऽपि जानाति नरस्य वृत्तमिति । चन्द्रस्य साक्षित्वं किरणद्वारा बोध्यम् । जयन्ति सर्वोत्कर्षेण वर्तन्ते । तत् तस्मात् सा मे जानकी कुत्र वर्तत इति शेषः। तत् कथं न कथयसि पूर्वार्थमाक्षिपति । **त्वमिति** । त्वमपि मृगसहायो हरिणयुक्तः किञ्च अपि च नक्तञ्चरोसि निशाचरोसि । अतः मृगसहायनक्तञ्चरहृतां प्रियां न कथयसीति भावः । परिकराक्षेपानुप्रासालङ्काराः । मालिनी वृत्तम् ॥ २ ॥ **लक्ष्मणः** । अभिषङ्गतरङ्गो दुःखोर्मिः आर्यमानसं रामहृदयं तरलीकरोति चञ्चलीकरोति । चपलचञ्चुपुटेन आचान्ता पीताः शीतकरकिरणानां चन्द्रमयूखानां शीकराः अम्बुकणा. येन तादृशोऽयं चकोरः । चकोराणां चन्द्रिकाप्राशनं कविसमयसिद्धम् । उक्तञ्च दर्पणे । ज्योत्स्ना पेया चकोरैरिति । **रामः** । **तन्म इति** । हे भ्रात. चकोर, भ्रातरित्यनुनयार्थम् । कान्तायाः प्रमदायाः सखा इति षष्ठीतत्पुरुषः ( राजाहःसखिभ्य इति टच् ) तेन, कान्तया सार्धमिति भावः । भवता त्वया शशिनं चन्द्रं विहाय त्यक्त्वा यदीययोः सीतासंब-

---

१. त्वमसीति पा० । २. किन्त्विति पा० । ३. शीतकरशीकर इति पा० । ४. हंहो इति पा० । ५. चित्तमिति पा० ।

पीता यदीयकमनीयकपोलकान्तिः
कान्तासखेन भवता शशिनं विहाय ॥ ३ ॥

लक्ष्मणः—आर्य, इयमितो विलोक्यतां शरत्कृशा निशाकरकिरणानुकारितरङ्गा तरङ्गिणी ।

रामः—( विलोक्य । )

कल्लोलिनि त्वमिव सापि कुरङ्गनेत्रा
नूनं किमप्यनुदिनं कृशिमानमेति ।
एतावदस्ति भवतीह निसर्गशीता
सीता पुनर्वहति कामपि तापमुद्राम् ॥ ४ ॥

लक्ष्मणः—इतो विलोक्यतामनिद्रनीलनलिननिलीनोऽयमलिनीनाथः ।

रामः—( विलोक्य । )[४]

उन्मीलन्नयनान्तकान्तिलहरीनिष्पीतयोः केवला-

---

न्थिनोः कमनीयकपोलयोः कान्तिः शोभा पीता प्राशिता, तदनुभूतं विदेहतनयाया जानक्या वदनं निवेद्य, मां चरितार्थां कृतकृत्या वृत्तिर्जीवनं यस्य तादृशं कुरु । त्वत्प्रदर्शितसीतामुखं प्रेक्ष्य कृतार्थो भवामीति भावः । काव्यलिङ्गच्छेकवृत्त्यनुप्रासालङ्काराः । वसन्ततिलका वृत्तम् ॥ ३ ॥ लक्ष्मणः । निशाकरस्य चन्द्रस्य किरणान् अनुकुर्वन्ति तच्छीला, अतिधवला इत्यर्थः । तरङ्गा वीचयो यस्यास्तादृशी तरङ्गिणी नदी । रामः । कल्लोलिनीति । हे कल्लोलिनि तरङ्गिणि त्वमिव सा कुरङ्गनेत्रापि हरिणाक्षी सीतापि अनुदिनं प्रतिदिवसं किमप्यनिर्वचनीयं कृशिमानं कृशत्वम् ( र ऋतो हलादेरिति रत्वम् ) एति प्राप्नोति । भवती त्वं निसर्गेण प्रकृत्या शीता, जलमयत्वाज्जलस्य शीतस्पर्शवत्त्वादिति भावः । इहास्मिन् प्रदेशे वर्तसे । सीता पुनः " इह नास्ति कुत्र वर्तेत इति गूढम्" कामपि तापमुद्रां सन्तापचिह्नं वहति । एतावदियत् उभयोरन्तरमिति शेषः । अस्ति । व्यतिरेकवृत्त्यनुप्रासावलङ्कारौ । वसन्ततिलका वृत्तम् ॥ ४ ॥ लक्ष्मणः । अनिद्रे विकसिते नीलनलिनीवने विलीनोऽन्तर्हितोऽलिनीनाथः भ्रमरः । रामः । उन्मीलदिति । भ्रातः

---

१. तरङ्गेति पाठः । २. हि इति पाठः । ३. नीलनलिनीवनविलीन इति पाठः । ४. ( विलोक्य । ) अये, कोऽयं विहङ्ग इत्यधिकः पाठः ।

दामोदादवधारणीयवपुषोः कान्तासखेन क्षणम् ।
यत्कर्णोत्पलयोः स्थितेन भवता किंचित्समुद्गुञ्जितं
आतस्तिष्ठति कुत्र तत्कथय मे कान्तं प्रियाया मुखम् ॥ ५ ॥

**लक्ष्मणः**—( सातङ्कम् । ) अपीमं न विलोकयेदार्यः ।

**रामः**—( विलोक्य । ) अये, कोऽयं विहङ्गः ।

योऽयं बहिः कलितकुङ्कुमरेणुराग-
मन्तस्तु संभृतदयं हृदयं दधानः ।
पारेतरङ्गिणि मुहुः करुणं रटन्ती-
मालोकते सहचरी न तु संनिधत्ते ॥ ६ ॥

( विमृश्य । ) नूनमयं वल्लभाविरहविदारितहृदयो वराकश्चक्रवाकः ।

---

उन्मीलन्तीभिर्विकसन्तीभिर्नयनान्तयोरपाङ्गयोः कान्तिलहरीभिः प्रभातरङ्गै-र्निष्पीतयोः प्राशितयोः "अपाङ्गकान्तेरतिनैल्यात्तत्र मग्नयोरिति भावः" । केवलादामोदादुत्कटगन्धमात्रात् अवधारणीयं निश्चेयं वपुर्ययोस्तादृशयोः, यस्याः सीतायाः कर्णोत्पलयोरुपरि क्षण तावत्काल स्थितेन कान्तासखेन प्रियासहायेन भवता किञ्चिदीषत् समुद्गुञ्जितं शब्दितं, तत्त्वयानुभूतं मे प्रियायाः कान्तं हृद्यं मुखं कुत्र, वर्तत इति शेषः कथय । उन्मीलितालङ्कारः । भेदवैशिष्ट्ययोः स्फूर्तावुन्मीलितविशेषकाविति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ५ ॥ **लक्ष्मणः** । इममपि पुरो दृश्यमानं चक्रवाकमपि न विलोकयेत् न पश्यतु ( विधौ लिङ् ) स्वप्रियाविरहिणमेनं दृष्ट्वाऽतिदुःखी भवेदिति भावः । **रामः** । **योऽयमिति** । योऽयं बहिः कलितोऽङ्गीकृतः कुङ्कुमरेणोः काश्मीरजचूर्णस्य रागोऽरुणिमा येन तादृशम्, अन्तस्तु अन्तरे सम्भृता पूर्णा दया यस्मिन् तत्, हृदयमन्तःकरणं दधानः, तरङ्गिण्याः नद्याः पारे परतीरे ( पारेमध्ये षष्ठ्या वेत्यव्ययीभावः ) मुहुः पुनःपुनः करुणं यथा तथा रटन्तीमाक्रोशन्तीं सहचरीं प्रियामालोकते वीक्षते, न तु सान्निधत्ते निकटे गन्तुं न शक्नोतीति भावः । कोऽयं विहङ्ग इति पूर्वेणान्वयः । स्वभावोक्तिच्छेकानुप्रासालङ्कारौ । वसन्ततिलका वृत्तम् ॥ ६ ॥ अयं वल्लभायाः प्रियायाश्चक्रवाक्याः विरहेण वियोगेन विदारितं भिन्नं हृदयं यस्य तादृशः,

**लक्ष्मणः**—अहो प्रमादः ।

**रामः**—नूनमयमेकः समदुःखतया समानशीलो मे । अथवा कुतोऽस्य मम च समानशीलता ।

अयमुदयति चन्द्रे विप्रयोगं प्रियायाः
श्रयति, तपति सूर्ये सङ्गमङ्गीकरोति ।
मम तु जनकपुत्रीविप्रयुक्तस्य यातं
शतमधिकमपीदं चन्द्रसूर्योदयानाम् ॥ ७ ॥

**लक्ष्मणः**—आर्य, इह तावन्मुकुलितकमलिनीपरिसरानुसारिणि कलहंसे दीयतां दृष्टिः ।

**रामः**—( विलोक्य । )

निजनखशिखालेखालीढस्फुरत्कमलस्तनी
विरलमधुपश्रेणीगीतां चलन्कलहंसकः ।
अकरुणशशिप्रेङ्खत्पादप्रहारविमूर्च्छिता-
महह नलिनीं क्लान्तक्लान्तां मुहुर्मुहुरीक्षते ॥ ८ ॥

---

वराकः शोच्यः (वराकः शोच्यरणयोरिति हेमचन्द्रः) । **लक्ष्मणः**। अहो प्रमादः यं न पश्यत्वार्य इति मनस्यकरवन्तमेवायं विलोकितवानिति प्रमाद इति भावः । **रामः** । समं दुःखं प्रियाविरहजं यस्य तस्य भावस्तत्ता तया । असमानशीलतां दर्शयति । **अयमिति** । अयं चक्रवाकः चन्द्रे उदयति प्रियायाः विप्रयोगं विश्लेषं श्रयति, सूर्ये तपति सङ्गमङ्गीकरोति, जनकपुत्रीविप्रयुक्तस्य सीताविश्लिष्टस्य मम तु चन्द्रसूर्ययोरुदयानां शतं तावती संख्या अधिकमपि, शतादप्यधिकमित्यर्थः।यातं गतम्, अतः कुतः समानशीलतेति भावः । व्यतिरेकच्छेकानुप्रासालङ्कारौ । मालिनी वृत्तम् ॥७॥ **रामः** । **निजेति** । चलन् गच्छन् कलहंसकः निजनखशिखानां स्वनखाग्राणां लेखया राज्या आलीढान्यास्वादितानि स्फुरन्ति प्रकाशमानानि कमलान्येव स्तना यस्यास्तां, विरलमल्पं मधुपश्रेण्याः भ्रमरचयस्य गीतं गानं यस्यां संकोचेनेति भावः । तादृशीं नलिनीं कमलिनीमकरुणस्य निर्घृणस्य शशिन इन्दोः प्रेङ्खत्पादाना प्रसरदंशूनां प्रहारेण ताडनेन विमूर्च्छितां मुह्यन्तीमत एव क्लान्तक्लान्तामति-

---

१. निरतेति पाठः। २. क्लान्तां कान्त इति पाठः ।

(विमृश्य।) वरमेवंविधानामपि सहचरीजनानुकम्पया कोमलं चेतो न तु निसर्गकठिनस्य रामस्य।

लक्ष्मणः—(स्वगतम्।) कथमिदानीमप्यस्य चेतसि जानकीयमिन्द्रजालमुन्मीलति।

(नेपथ्ये।)

सखे रत्नशेखर, चिराद्दृश्यसे।

लक्ष्मणः—(आकर्ण्य।) किमेतत्।

(पुनर्नेपथ्ये।)

वयस्य चम्पकापीड, एवमेतत्। मया हीयन्तं समयमखिलमायानिधेर्मयनाम्नो दानवस्य पुत्रीं निजसहोदरीं मन्दोदरीमनुवर्तितुं लङ्कायां कृतालयाच्चित्ररूपनाम्नो दानवात्सकलामिन्द्रजालकलामाददानेन स्थितम्।

लक्ष्मणः—नूनमयं कृतकर्णकौतुकामोदः कयोरपि विद्याधरयोः संवादः।

(पुनर्नेपथ्ये।)

सखे रत्नशेखर, तन्मे धारयसि निजकलादर्शनमिति।

---

ग्लानां तां मुहुर्मुहुर्वारंवारमीक्षते पश्यति। अहहेति खेदे। अनेन निष्करुणनायकपादताडनपरिम्लानां नायिकां विलोकयतः कस्यचिदुपनायकस्य वृत्तान्तो ध्वन्यते। समासोक्तिवृत्त्यनुप्रासालङ्कारौ। हरिणी वृत्तम्॥ ८॥ एवंविधानामपि तिर्यग्जातिभुवामपि सहचरीजनेष्वनुकम्पया, चेतोऽन्तःकरणं कोमलम्, अतः वरं श्रेष्ठं, रामस्य चेतो न तु वरमित्यर्थः। लक्ष्मणः। जानकीयं सीतासम्बन्धि (वृद्धाच्छ इति च्छः)। इन्द्रजालं मायाविद्या मिथ्याकल्पनेति भावः। समुन्मीलति प्रादुर्भवति। अनेनैन्द्रजालिकप्रवेशः सूचितः। मया रत्नशेखरेण अखिलमायानिधेः समस्तमायाविद्याश्रयस्य सहोदरीं भगिनीमनुवर्तितुमनुसर्तुम्। कृतालयात्कृतभवनात्, सकलां समग्राम्। लक्ष्मणः। कृतौ कर्णयोः श्रवणयोः कौतुकामोदौ कुतूहलानन्दौ येन तादृशः कयोरपि विद्याधरयोः संवादः संलापः। (पुनर्नेपथ्ये)। मे मह्यं निजकलादर्शनं

---

१. जानकीमयमिति पाठः। २. पथिकयोरिति पाठः।

( पुनर्नेपथ्ये । )

वयस्य चम्पकापीड,

अप्सुरसुरनिशाचरोरगाणा-
मपि नरकिंनरसिद्धचारणानाम्।
सकलजनविलोकनैकचित्रं
स्फुटमिह कस्य विजृम्भतां चरित्रम् ॥ ९ ॥

अथवा किमन्येन। लङ्कानुभूतमेव नूतनं किमपि सरसरमणीयं चरित-मुपदर्शयामि ते।

**लक्ष्मणः**—आर्य, इतोऽवधार्यताम्। नन्विदमयत्नोपनीतं प्रेक्षणीयम्

**रामः**—( अनाकर्णितकेन। )

देवि त्वदीयमणिनूपुरजृम्भमाण-
कोलाहलोत्तरलहंसकुलाकुलासु।

---

स्वाभ्यस्तेन्द्रजालकलाविष्करणं धारयसि ऋणत्वेन वहासि ( धारेरुत्तमर्ण इति संप्रदानत्वम्। तथा च शाकुन्तले कालिदासः। वृक्षसेचनके द्वे धारयसि म इति। त्वयैकदा मत्पुरत इन्द्रजालमाविष्करणीयमिति भावः। **असुरेति**। असुरा दैत्याः सुराः देवाः निशाचराः राक्षसाः उरगाः पन्नगाश्चेती-तरेतरद्वन्द्वः तेषां, नरा मानवाः किन्नरास्तुरङ्गवदनाः सिद्धा देवयोनयः चारणा देवविशेषाश्चेत्यत्रापि द्वन्द्वः, तेषामपि मध्ये कस्य पुरुषस्य सकलजनानां निखि-ललोकानां विलोकनायैकमद्वितीयं चित्रमाश्चर्यजनकं चरित्रं विजृम्भतां विस्फुरतु। एतेषां मध्ये कस्य चरित्रं दर्शयामि ते इति भावः। छेकवृत्त्यनुप्रासाल-ङ्कारौ। पुष्पिताग्रा वृत्तम्॥ ९॥ लङ्कायामनुभूतं प्रेक्षितं, सरसं च तद्रमणीयञ्च। अथवा सरसानां रसिकानां रमणीयम्। **लक्ष्मणः**। अवधार्यतामवधानं दीयताम्। अयत्नोपनीतं विना यत्नेन प्राप्तम्। प्रेक्षणीयं वर्तत इति शेषः। **रामः**। **देवीति**। देवि वैदेहि सीते त्वदीयाभ्यां त्वत्सम्बन्धिभ्यां मणिनूपुराभ्यां रत्नमञ्जीराभ्यां जृम्भ-माणेनोद्गच्छता कोलाहलेन कलकलेनोत्तरलैश्चञ्चलैर्हंसकुलैः आकुलासु

---

१. भुजङ्गवारणानामिति पाठः। २. विजृम्भते इति पाठः।

वैदेहि लक्ष्मणपदाम्बुजलाञ्छितासु[1]
गोदावरीपुलिनभूमिषु देहि दृष्टिम् ॥ १० ॥

**लक्ष्मणः**—क्व पुनरिह वैदेही, क्व वा गोदावरी ।

**रामः**—( विमृश्य । ) कथं प्रतारितोऽस्मि मतिविभ्रमेण ।(विचिन्त्य।) अथवा कृतार्थीकृतोऽस्मि । अनेन हि मे

गोदावरीतीरतपोवनेषु
सौमित्रिसीतापरिपूर्णपार्श्वः ।
मुदा निमेषानिव यान्यनैषं
दिनानि तान्येव पुनः कृतानि[2] ॥ ११ ॥

( पुनः सप्रत्याशम् । ) अपि नाम

तान्येव पक्ष्मलदृशो वचनामृतानि
भूयोऽपि कर्णचुलकैरहमापिबेयम् ।
यैर्मामदर्शयदसौ विकसत्[3]प्रमोदा
गोदावरीकमलवीचिविचेष्टितानि ॥ १२ ॥

---

व्यग्रासु, तथा लक्ष्मणस्य पदाम्बुजैः लाञ्छितासु चिह्नितासु गोदावर्याः पुलिनभूमिषु जलोत्थितभूमिषु दृष्टिं देहि, अवलोकयेत्यर्थः । अनेनोन्माददशा सूचिता । यमकवृत्त्यनुप्रासालङ्कारौ । वसन्ततिलका वृत्तम् ॥ १० ॥ **रामः** । हि यस्मात् अनेन मतिविभ्रमेण मे मम । **गोदावरीति** । गोदावर्यास्तीरतपोवनेषु सौमित्रिसीताभ्यां लक्ष्मणजानकीभ्यां परिपूर्णोऽविरहितः पार्श्वो निकटप्रदेशो यस्य तादृशः सन् यानि दिनानि मुदा हर्षेण निमेषानिव अनैषं तान्येव दिनानि पुनः कृतानि संपादितानि । भाविकालङ्कारः । प्रत्यक्षा इव यद्भावाः क्रियन्ते भूतभाविनः । तद्भाविकमिति लक्षणात् । उपजाति वृत्तम् ॥ ११ ॥ **तान्येवेति** । विकसन् विजृम्भमाणः प्रमोदो हर्षो यस्यास्तादृशी असौ सीता यैर्वचनामृतैर्गोदावर्याः कमलानां वीचीनाञ्च विचेष्टितानि विलसितानि माम-दर्शयत्, पक्ष्मलदृशः सीताया इत्यर्थः । तान्येव पुराऽनुभूतानि वचनामृतान्येव अहं भूयोऽपि पुनरपि कर्णचुलकैः श्रवणपुटैः अपिनामेति संभावनायाम्।आपि-बेयम् । प्रार्थनायां लोट् । रूपकालङ्कारः । वसन्ततिलका वृत्तम् ॥ १२ ॥

---

१. पदाङ्कितसैकतास्विति पाठः । २. स्मृतानीति पाठः । ३. विकचेति पाठः ।

( नेपथ्ये । )

तुह सुहअ उक्खिवन्ती तरङ्गसिअचामरं रहुमिअङ्क ।
धवलकमलादपत्तं धारइ गोलाणई सहत्थेण ॥ १३ ॥

रामः—( सहर्षम् । ) अये, स एवायं प्रियतमायाः समालापः । तथा हि ।

परिमितकमनीयः कोमलो वाग्विलासः
सरसमधुरकाकुस्वीकृता कापि लेखा ।
ध्वनिरपि च विपञ्चीपञ्चमस्यानुवादी
श्रुतिरपि कलकण्ठीकण्ठसंवादभूमिः ॥ १४ ॥

तत्कुत्र पुनः प्रेयसी । ( विलोक्य । ) तत्कथमयमदृष्टचन्द्रलेखश्चन्द्रालोकः ।

---

१. तव सुभग उत्क्षिपन्ती तरङ्गशीतचामरं रघुमृगाङ्क ।
धवलकमलातपत्रं धारयति गोदानदी स्वहस्तेन ॥

---

नेपथ्ये । तुहेति सुभग सुन्दर रघुमृगाङ्क रघुवंशचन्द्र तव गोदानदी स्वहस्तेन निजकरेण तरङ्गा एव सितचामरं शुभ्रमकीर्णकमुत्क्षिपन्ती सती ऊर्ध्वं प्रेरयन्ती सती धवलकमलं कुमुदमेव आतपत्रं छत्रं धारयति । रूपकालङ्कारः । गीतिवृत्तम् । आर्यापूर्वार्धसमं द्वितीयमपि भवति यत्र हंसगते ॥ छन्दोविदस्तदानीं गीतिं तामममृतवाणि भाषन्त इति श्रुतबोधोक्तेः ॥ १३ ॥ रामः । स एव प्रागनुभूतएवाऽयं तुह सुभगेत्यादिदर्शितः। परिमितेति । यस्या वाग्विलासः भाषणशैली परिमितः नियमितः, कमनीयो हृद्यः, कोमलो मृदुलश्च । कापि लेखा वाक्पङ्क्तिः सरसया शृङ्गारादिरसयुक्तयात एव मधुरया काका भिन्नकण्ठध्वनिना (भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयत इत्यभिधानरत्नमाला) स्वीकृताङ्गीऽकृता । यत्रयत्र येनयेन स्वरेण येनयेन रसेन वोच्चरणीयं तथोक्तवतीत्यर्थः । ध्वनिरपि शब्दोऽपि विपञ्च्याः वीणायाः पञ्चमस्य तदाख्यस्वरस्य ( निषादर्षभगान्धारषड्जमध्यमधैवताः ॥ पञ्चमश्चेत्यमी सप्त तन्त्रीकण्ठोत्थिताः स्वरा इत्यमरः ) अनुवदति तच्छीलोऽनुवादी ( ताच्छील्ये णिनिः ) तत्सदृश इत्यर्थः । श्रुतिः स्वरावयवलक्षणः शब्दविशेषः । तदुक्तम्।प्रथमश्रवणाच्छब्दः श्रूयते ह्रस्वमात्रकः॥सा श्रुतिः सम्परिज्ञेया स्वरावयवलक्षणेति । साऽपि कलकण्ठया मयूर्याः कण्ठसंवादभूमिः कण्ठसादृश्याधिष्ठानम् । उपमावृत्त्यनुप्रासयमकालङ्काराः । मालिनी वृत्तम् ॥ १४ ॥

( ततः प्रविशति यथा निरूपयिष्यमाणा जानकी । )

रामः—( ससंभ्रमम् । ) प्राप्तेयं प्रेयसी । ( इति गन्तुमिच्छति । )

लक्ष्मणः—( रामं हस्ते धृत्वा । ) अलमिह संभ्रमेण । विद्याधरोपनीतमिन्द्रजालकं खल्वेतत् ।

रामः—( निर्वर्ण्य । ) अये, क एष संनिवेशविशेषः । तथा हि ।

एकेनालम्बितेयं शिथिलभुजलताशोभिना शाखिशाखा
हस्तेनान्येन चायं दिनकरकिरणक्लान्तकान्तिः कपोलः ।
एष स्रस्तो नितम्बे लुलति कचभरस्त्यक्तकाञ्चीकलापे
नेत्रोत्सङ्गे च बाष्पस्तबकनवकणैः पक्ष्मला पक्ष्मलेखा ॥१५॥

(पुनर्विभाव्य।) नूनमियमशोकशाखिशाखां सखीमिवावलम्ब्य निद्रामुपागता । तथा हि ।

आमीलन्नवनीलनीरजतुलामालम्बते लोचनं
शैथिल्यं नवमल्लिकासहचरैरङ्गैरपि स्वीकृतम् ।

(पुनर्विमृश्य । ) नूनमनया त्वदयप्रमोददायी कोऽपि स्वप्नो दृष्टः । तथा हि ।

आलापादधरः स्फुरन्कलयति प्रेङ्खत्प्रवालोपमा-
मानन्दप्रभवाश्च बाष्पकणिका मुक्ताश्रियं बिभ्रति ॥१६॥

---

रामः । सन्निवेशविशेषोऽवयवविन्यासविशेषः । एकेनेति । शिथिलया बाहुलतया शोभते तच्छीलः तेन एकेन हस्तेन इयं शाखिशाखा तरुशाखा अवलम्बिताऽऽश्रिता, अन्येन इतरेण च दिनकरकिरणैः सूर्यांशुभिः क्लान्ता ग्लाना कान्तिस्तेजो यस्य सः, कपोलो गण्डोऽवलम्बितः, त्यक्तो गलितः काञ्चीकलापः रशनाभूषणं येन तस्मिन्नितम्बे कटिपश्चाद्भागे एष कचभरः केशकलापः स्रस्तः सन् लुलति, इतस्ततश्चलतीत्यर्थः । नेत्रोत्सङ्गे नयनप्रदेशे पक्ष्मणा नेत्ररोम्णां ( पक्ष्म स्यान्नेत्ररोमाणीति शारदीनाममाला ) लेखा पङ्क्तिर्बाष्पस्तबकानामश्रुभराणां नवकणैर्नूतनाबिन्दुभिः पक्ष्माण्यस्याः सन्तीति ( सिध्मादित्वाल्लच् ) तादृशी, बाष्पकणैः पक्ष्मोपरि पक्ष्मान्तरोत्पत्तिरिव दृश्यत इति भावः । छेकवृत्त्यनुप्रासावलङ्कारौ । स्रग्धरा वृत्तम् ॥ १५ ॥ अशोकशाखिशाखामशोकतरुशाखाम् । आमीलदिति । अस्या लोचनं नयनं जात्येकवचनम् । आमीलतः सङ्कुचतः नवनीलनीरजस्य नूतनेन्दीवरस्य तुला साम्यमालम्बते आश्रयति, नवमल्लिकायाः सहचरैस्तुल्यैः, कोमलै-

---

१. कुचभरेति पाठः । २. स्फेति पाठः ।

**सीता**—( उन्मील्य लोचने । ) हद्धि हद्धि । अण्णारिसो मे जीअलोओ गोलाणई कहिं सा, णीलुप्पलसामलो कहिं रामो, लङ्का कहिं वा हद्धि रामेक्कजीविदा सीदा । ( इति मूर्च्छति । )

**रामः**—अयि वसुधे,

यां वै[1] गर्भे त्रिजगदबलारत्नभूतां दधाना
लब्धान्वर्था[2] जगति भवती रत्नगर्भा बभूव ।
तामुत्सङ्गे तव विलुठितां[3] वीक्षमाणाऽपि[4] सीतां
द्रागदीर्णासीर्न[5] कथमथवा देवि सर्वंसहासि ॥ १७ ॥

तदेनामभ्यर्थयामि तावदस्याः समुद्बोधनाय । अथवा किमभ्यर्थनया ।

---

१. हा धिक् हा धिक् । अन्यादृशो मे जीवलोको गोदानदी क्व सा, नीलोत्पलश्यामलः क्व रामः, लङ्का क्व वा, हा धिक् रामैकजीविता सीता ।

---

रित्यर्थः । अङ्गैरपि शैथिल्यं शिथिलत्वं स्वीकृतम्, अधर ओष्ठः आलापाद्भाषणात् प्रेङ्खतः कम्पमानस्य प्रवालस्य विद्रुमस्योपमां तुलां कलयत्यङ्गीकरोति, आनन्दप्रभवा हर्षोद्भूता बाष्पकणिकाश्च नयनजलबिन्दवश्च मुक्ताश्रियं मौक्तिकशोभां बिभ्रति धत्ते । काव्यलिङ्गनिदर्शनोपमालङ्काराः । शार्दूलविक्रीडितम् ॥ १६ ॥ **रामः । यामिति** । अयि वसुधे वसुन्धरे, रत्नगर्भा भवती त्रिजगदबलासु जगत्त्रयललनासु रत्नभूतां रत्नवत्स्थितां श्रेष्ठामित्यर्थः । या सीतां गर्भे कुक्षौ दधाना सती, जगति लोके लब्धः प्राप्तोऽन्वर्थो रत्नगर्भेतिनाम्नो यौगिकार्थो यया तादृशी बभूव । सीतारूपरत्नधारणेनेति भावः । ( युष्मदुपपदाभावान्न मध्यमपुरुषः । ) तां सीतां तवोत्सङ्गेऽङ्के विलुठितामितस्ततः परिवृत्तां वीक्षमाणाऽपि पश्यन्त्यपि द्राक् सपदि कथं न दीर्णा स्फुटिता आसीः । अथवा देवि सर्वं सकलं साध्वसाधु वा सहत इति सर्वंसहा ( पचादित्वादच् ) तादृशी असि अतो युक्तमेव त्वया चरितमिति भावः । निरुक्त्याक्षेपावलङ्कारौ । निरुक्तिर्योगतो नाम्नामन्यार्थत्वप्रकल्पनमिति लक्षणात् । मन्दाक्रान्ता वृत्तम् ॥ १७ ॥ एनां भूमिमस्याः सीतायाः समुद्बोधनाय मूर्च्छानिरासाय ।

---

१. गर्भेणेति पाठः । २. लब्धार्थत्वाज्जेति पाठः । ३. विलुलितामिति पाठः । ४. चेति पाठः । ५. न्नेति पाठः ।

निजामपि सुतां सीतां नेयमुद्बोधयिष्यति।
निजेऽप्यपत्ये करुणा कठिनप्रकृतेः कुतः॥ १८॥

तदेनं तावदभ्यर्थयामि।

स्निग्धाशोकद्रुम निजसखीं तूर्णमुद्बोधयैनां
सिक्त्वा सिक्त्वा किसलयकरस्रंसिना शीकरेण।
एतस्याः किं नयनकमलस्यन्दिभिः सान्द्रसान्द्रै-
र्बाष्पोत्पीडैरनुदिनमपि त्वं न सिक्तालवालः॥ १९॥

कथमनाकर्णितकेन मत्याख्यातमनेन। अये, कृतघ्नता पलाशिनः। (विलोक्य।) कथं प्रकृतिप्रियंवदाया मे प्रियायाः सखीजनोऽपि न कश्चिदिह।

(प्रविश्य।)

**त्रिजटा**—जानकि, समाश्वसिहि समाश्वसिहि।

**सीता**—(समाश्वस्य।) कहं पिअसही मे तिअडा।

---

१. कथं प्रियसखी मे त्रिजटा।

---

**निजामिति।** निजामपि स्वीयामपि सुतां पुत्रीं सीतामियं भूमिर्नोद्बोधयिष्यति न प्रबोधयिष्यति। कठिनप्रकृतेर्निष्ठुरस्वभावस्य निजेऽपत्येऽपि स्वकीयेऽर्भकेऽपि करुणा दया कुतः नैवेत्यर्थः। अर्थान्तरन्यासालङ्कारः॥ १८॥ तत् अवनिर्यस्मात् सीतां नोद्बोधयति तस्मात्, एनमशोकतरुमभ्यर्थयामि प्रार्थयामि। **स्निग्धेति।** स्निग्धाशोकद्रुम प्रीतिमदशोकतरो, अनेन स्ववक्ष्यमाणकार्यक्षमत्वं द्योतितम्। एनां निजसखीमिकत्रोभयोर्बहुकालस्थित्या सखीत्वं सीतां किसलयान्येव करास्तेभ्यः स्रंसिना गलता शीकरेणाम्बुकणेन सिक्त्वा सिक्त्वा मुहुर्मुहुर्निषिच्य, तूर्णं सत्वरमुद्बोधय प्रबोधय। लोकेऽपि हि मूर्च्छितान् जलकणसेचनैरेव प्रबोधयन्तीति प्रसिद्धमेव। उपकारं स्मरयति। त्वमपि तस्याः नयनकमलात्स्यन्दिभिः क्षरद्भिः सान्द्रसान्द्रैरतिघनैः बाष्पोत्पीडैरश्रुचयैरनुदिनं प्रत्यहं सिक्तमालवालमावापो यस्य तादृशो न किमिति काकुः। अपि तु सिक्त एवेत्यर्थः। अत इदानीं त्वमपि प्रत्युपकारं कुर्वीति भावः। काव्यलिङ्गमलङ्कारः। मन्दाक्रान्ता वृत्तम्॥ १९॥ पलाशिनो वृक्षस्य। प्रकृत्या स्वभावेन प्रियंवदायाः मधुरभाषिण्याः, अनेन मैत्रीयोग्यता सूचिता (प्रियवशे

त्रिजटा—सखि, अनया ते मधुरया मुखरेखया तर्कयामि यत्किल प्रियं किमपि दृष्टवती ।

सीता—अत्थि दाणिं हि मए सिविणअम्मि सअं गोलाणईए सहत्थकलिदतरङ्गचामरधवलकमलादवत्ताए परिचरिज्जन्तो अज्जउत्तो दिट्ठो[1] ।

त्रिजटा—तर्हि वर्धसे । सुखस्वप्नः खल्वसौ ।

सीता—हला, केरिसो मे रामेक्कचित्ताए सिविणअम्मि विस्सासो[2] ।

त्रिजटा—तत्किं चिन्तास्वप्न इति संभावयसि । नहि । चिन्तास्वप्नोऽपि[1] नैवमचुम्बितावगाही भवति ।

सीता—किं उण अचुम्बिदम्[3] ।

त्रिजटा—यन्न संभाव्यते ।

१. अस्तीदानीं हि मया स्वप्ने स्वयंगोदानद्या स्वहस्तकलिततरङ्गचामरधवलकमलातपत्रया परिचर्यमाण आर्यपुत्रो दृष्टः ।

२. हला कीदृशो मे रामैकचित्तायाः स्वप्ने विश्वासः ।

३. किं पुनरचुम्बितम् ।

वदः खजिति खच् ) त्रिजटा । अनया दृश्यमानया ते तव मुखरेखया वदनाभोगेन ( रेखा स्यादल्पके छद्मन्याभोगोल्लेखयोरपीति हैम )। सीता । स्वहस्तकलितानि निजकरधृतानि तरङ्गा ऊर्मय एव चामराणि प्रकीर्णानि धवलकमलान्येवातपत्राणि छत्राणि यया तया गोदानद्या परिचर्यमाणः सेव्यमानः आर्यपुत्रः रामः। सर्वस्त्रीभिः पतिर्वाच्य आर्यपुत्रेति यौवन इत्युक्तेः। इदानीमधुना मया स्वप्ने दृष्टोऽस्ति । त्रिजटा । सुखबोधकश्चासौ स्वप्नश्चेति मध्यमपदलोपी समासः । सीता । रामैकचित्ताया राममात्रमनस्कायाः कीदृशः स्वप्ने विश्वासः, नैवेत्यर्थः । अविरतध्यानेन निद्राया अभावात्स्वप्ने न प्रत्ययो ममेति भावः । त्रिजटा । चिन्तास्वप्नः आध्यानजनितस्वप्न इति संभावयसि तर्कयसि, नहि चिन्तास्वप्नः एवं त्वदुक्तप्रकारेण अचुम्बितमवितर्कितमवगाहते तच्छीलस्तादृशः, अपूर्व इति भावः । त्रिजटा । यन्न सम्भाव्यते जनै-

१. स्वप्नोऽप्यचुम्बितावगाहीति पाठः ।

**सीता**—

जं णक्खु संभावीअदि तं पि हला अत्थि अत्थ लोअम्मि ।
जं जीवइ जणअसुदा अपुलोअन्तीवि राममुहचन्दम् ॥ २० ॥

ता किं इमिणा सिविणएण जीविदेण वा । उवेक्खिदह्मि अज्जउत्तेण ।

**रामः**—शान्तं पापम् । अयि प्रिये, त्वद्द्यस्थितापि मे कथमजानती वर्तसे त्वद्द्यवृत्तिम् ।

**सीता**—अहवा किंति हरमुउडमिअङ्के कलङ्कं आरोपइस्सम् । जाणामि अज्जउत्तो अज्जवि अकलिदउत्तन्तो मे ।

**रामः**—प्रिये, इदानीमुचितमनुसंदधासि ।

**सीता**—( विमृश्य । ) कहं ।

वाआलेणवि कहिदा णाहं णाहस्स णेउररएण ।

---

१. यत्र खलु संभाव्यते तदपि हला अस्त्यत्र लोके ।
यज्जीवति जनकसुता अनालोकयन्त्यपि राममुखचन्द्रम् ॥
तत्किमनेन स्वप्नेन जीवितेन वा । उपेक्षितास्म्यार्यपुत्रेण ।

२. अथवा किमिति हरमुकुटमृगाङ्के कलङ्कमारोपयिष्ये । जानाम्यार्यपुत्रोऽद्याप्यकलितवृत्तान्तो मे ।

३. कथम् ।
वाचालेनापि कथिता नाहं नाथस्य नूपुररवेण ।

---

रिति शेषः । **सीता । जमिति** । हला सखि त्रिजटे यत् न सम्भाव्यते मनसापि न चिन्त्यते तदपि अत्रास्मिँल्लोके जगति अस्ति । तदेव द्रढयति **यदिति** । यत् यस्मात् जनकसुताऽहमिति भाव । रामचन्द्रमुखमनालोकयन्त्यपि अपश्यन्त्यपि जीवति । तदसम्भाव्यमपि सम्भवतीति नैवात्र स्वप्ने विश्वसिमीति भाव । अर्थान्तरन्यासालङ्कारः । गीतिर्वृत्तम् ॥ २० ॥ यस्मादार्यपुत्रेण रामेण उपेक्षितास्मि । तत् तस्मात् अनेन स्वप्नेन जीवितेन वा किं किं प्रयोजनम्, न किमपीत्यर्थः । **रामः** । अनुसंदधासि उपपादयसि । **सीता । वाचालेनेति** । वाचालेन मुखरेण नूपुररवेणापि मञ्जीरशब्देनापि नाथस्य रामस्याहं न कथिता । इतो गता एवं तस्या· दशेति नोक्ता

---

१. रामचन्द्रमुहमिति पा० ।

अहवा विहिविहुरबलात्तेणवि मूअत्तणं पत्तम् ॥ २१ ॥

( नेपथ्ये । )

अये लङ्कानिवासिनः, सावधानमवस्थीयताम् । नन्वितः

प्राकारमुन्नतमसीमबलो विलङ्घ्य

प्राप्तो रुषारुणितदृक्कपिवीर उच्चैः ।

( आकर्ण्य सर्वे त्रासं नाटयन्ति । )

( पुनर्नेपथ्ये । )

अये लङ्काधिवासिनः अलं त्रासेन ।

तत्संमुखं प्रचलति स्वयमक्षनामा

नन्वेष राक्षसपतेः कुपितः कुमारः ॥ २२ ॥

**सीता**—कहं उण सह महीदलेण वेवदि व्व असोअवणम् ।

**त्रिजटा**—( विमृश्य । )

तुहिनकरमयूखैर्दीप्तकंदर्पदर्प-

स्तपनकुलवधूटीं त्वामयं मुक्तलज्जः ।

---

१. अथवा विधिविधुरबलात्तेनापि मूकत्वं प्राप्तम् ।

२. कथं पुनः सह महीधरेण वेपत इवाशोकवनम् ।

---

किमिति विचारः । अथवा विधिविधुरबलात् प्रतिकूलदैववशात् ( कडारादित्वाद्विधुरपदस्य परनिपातः ) तेनापि नूपुरेणापि मूकत्वं निःशब्दत्वं प्राप्तं भवेदिति शेषः । स यद्यकथयिष्यत्तर्हि नार्यपुत्रोऽद्यपर्यन्तं व्यलम्बयिष्यदिति भावः । सन्देहालङ्कारः । आर्या वृत्तम् ॥ ५१ ॥ **प्राकारमिति** । असीममपरिमितं बलं सामर्थ्यं यस्य सः, क्रोधेन अरुणिते रक्ते दृशौ यस्य तादृशः, उच्चैरुन्नतः कपिवीरो वानरभटः, अथवा उच्चैरिति प्राकारविशेषणम् । प्राकारं सालमुल्लङ्घ्योत्तीर्य, इतोऽत्र लङ्कायां प्राप्तः । ननु राक्षसपते रावणस्य एष कुमारः पुत्रः अक्षनामा कुपितः क्रुद्धः सन् तत्संमुखं वानराभिमुखं स्वयं प्रचलति निर्गच्छति । वृत्त्यनुप्रासालङ्कारः । वसन्ततिलका वृत्तम् ॥ २२ ॥ **सीता** । अशोकवनं महीधरेण त्रिकूटेन लङ्कायास्त्रिकूटपर्वतशिरःस्थितत्वात् तेन सह । **त्रिजटा** । **तुहिनेति** । अयमयमिति चापले द्विर्भावः । लङ्काधिनाथो रावणः तुहिनकरस्य हिमांशोर्मयूखैर्गभस्तिभिः दीप्तः प्रज्वलितः कन्दर्पदर्पो मन्मथमदो यस्याऽत एव मुक्त-

---

१. उभे इति पाठः । २. नाट्यत इति पाठः ।

अयमयमनुनेतुं रामचन्द्रैकचित्ता-
मपि स विपिनवीथीमेति लङ्काधिनाथः ॥ २३ ॥

( सीता त्रासं नाटयति । )

( ततः प्रविशति रावणः । )

( सीता पराङ्मुखी तिष्ठति । )

**रावणः**—अयि जानकि,

कंदर्पज्वरवेदनापरिपतद्बाष्पस्रुतिक्षालितं
स्वर्गस्त्रीकुचकुम्भकुङ्कुमरजस्त्यक्तोपरोधोज्ज्वलम् ।
एतत्त्वां सुरदन्तिदन्तशिखरोल्लेखाङ्कविख्यापित-
प्रस्फूर्जच्चतुरन्तविश्वविजयं वक्षःस्थलं याचते ॥ २४ ॥

**सीता**—( अनाकर्णितकेन । ) अवि णाम पुणोवि रामचन्दमुहचन्दं पुलोवइस्सम्[1] ।

**त्रिजटा**—जानकि, एवं प्रलापिनि लङ्केश्वरे कर्णावधानमपि तावद्देहि ।

**रामः**—साधु त्रिजटे, यत्प्रलाप इत्युक्तवत्यसि ।

---

१. अपि नाम पुनरपि रामचन्द्रमुखचन्द्रं विलोकयिष्ये ।

---

लज्जस्त्यक्तत्रपः सन्, तपनकुलस्य रविवंशस्य वधूटीं स्नुषाम्, रामचन्द्रे एव एकं केवलं चित्तं यस्यास्तादृशीमपि त्वामनुनेतुं प्रसादयितुं विपिनवीथीं वनपङ्क्तिं एत्यागच्छति । यमकालङ्कारः । मालिनी वृत्तम् ॥ २३ ॥ **रावणः**। **कन्दर्पेति**। कन्दर्पज्वरवेदनया कामज्वरव्यथया परिपततां गलतां बाष्पाणामश्रूणां स्रुत्या प्रस्रवणेन क्षालितं धौतं, स्वर्गस्त्रीणां सुरलोककामिनीनां कुचकुम्भयोः स्तनकलशयोः कुङ्कुमरजसः काश्मीरजधूलेः त्यक्तः उपरोधः अन्तरायो येन तादृशमत एव उज्ज्वलम् । स्वर्गाङ्गनाकुचाश्लेषप्रत्याख्यानेन निर्दोषमिति भावः । सुरदन्तिन ऐरावतस्य दन्तशिखरैर्दशनाग्रैर्ये उल्लेखाः घर्षणानि तेषामङ्कैश्चिह्नैः विख्यापितः प्रकाशितः, प्रस्फूर्जन् स्फुरन् चतुरन्तविश्वस्य चतुर्दिगन्तजगतः विजयो जयो येन तादृशं वक्षस्थलं त्वां याचते प्रार्थयते । छेकानुप्रासालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २४ ॥ **त्रिजटा**। एवं पूर्वोक्तरीत्या प्रलापिनि जल्पिनि। **रामः**। प्रलाप इत्युक्तवत्यासि

---

१. स्वर्गश्रीति पाठः । २. स्तेयापराधेति पाठः ।

रावणः—

यत्संतुष्टवतः पुरा पुरभिदश्छेदोत्सवच्छेदिनो
न क्रोधादनमन्नवोद्गतशिरःश्रेणौ नमन्त्यामपि ।
एतत्तद्दशमं शिरो मम नमत्त्वत्पादपाथोजयो-
रव्याजं मिथिलेन्द्रपुत्रि भवतीं प्रेमातुरं याचते ॥ २५ ॥

सीता—( संस्कृतमाश्रित्य । )

निजे पाणौ कृत्वा कमलललतिका बालमुकुलं
ययोश्चक्रे गुञ्जन्मधुपमवतंसं रघुपतिः ।
अपीमौ कर्णौ मे वचनमिदमाकर्ण्य न कथं
विशीर्णौ युक्तं वा चरितमिदमन्तःकुटिलयोः ॥ २६ ॥

रावणः—अयि जानकि, अवलोकनमात्रेणापि तावन्मां संभावय ।

---

तत्साधु समीचीनम् ( प्रलापोऽनर्थकं वच इत्यमरः ) । रावणः । यदिति । पुरा तपश्चरणावसरे सन्तुष्टवतः हृष्टवतः अत एव छेदोत्सवच्छेदिनः कर्तनोत्सवध्वंसिनः पुरभिदः पुरारेः शङ्करस्य, नवोद्गतशिरसां नूतनोत्पन्नमस्तकानां श्रेणौ पङ्क्तौ नमन्त्यामपि यद्दशमं शिरः क्रोधात्स्वकर्तनप्रतिषेधकोपात् न अनमत् तत् यच्छङ्करस्याऽपि नाऽनमत्तत्, एतत्पुरःस्थितं मम प्रेमातुरं दशमं शिरः त्वत्पादपाथोजयोस्त्वच्चरणकमलयोः अव्याजं निष्कपटं 'यथा तथा नमत् सत्, भो मिथिलेन्द्रपुत्रि सीते भवतीं त्वां याचते । वृत्त्यनुप्रासालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ २५ ॥ सीता । ( संस्कृतमाश्रित्य ) यद्यपि योषितां प्राकृतभाषैव, तथापि क्वचिद्वैदग्ध्यार्थं संस्कृतभाषादरणम् । तदुक्तं साहित्यदर्पणे । योषित्सखी बाला वेश्या कितवाप्सरसां तथा॥ वैदग्ध्यार्थं प्रदातव्यं संस्कृतं चान्तरान्तरेति । निज इति । रघुपती रामः गुञ्जन्तः कूजन्तो मधुपाः षट्पदा यस्मिन् तादृशं कमलल्तिकाया बालं मुकुलं कुड्मलं ययो कर्णयोरवतंसं कर्णपूरं चक्रे कृतवान् । तौ इमौ कर्णौ इदं भवदुक्तं वचनमाकर्ण्य श्रुत्वा कथं न विशीर्णौ । अपिः प्रश्नार्थकः । वा अथवा अन्तोऽन्तरे कुटिलयोर्वक्रयोरनयोरिदं चरितमाचरणं युक्तमुचितम् । आक्षे-

---

१. छन्देसि पाठः । २. बकुलेति पाठः ।

**सीता**—अये निशाचर, न तावत्प्रार्थनाभङ्गलाघवात्कथं राघवादपि न बिभेषि।

**रावणः**—अयि, क एष राघवो नाम यं किल जनो राम इति जल्पति। ( विहस्य। )

कामः कियानसिलतानिहितैकबाहु-
क्रीडार्दितत्रिभुवनस्य दशाननस्य।
रामस्तु केवलमयं सुमुखि त्वदर्थे
मां हन्ति हन्त न चिरान्निशितैः शरौघैः ॥ २७ ॥

**सीता**—( इममेव श्लोकं पठित्वा। ) सत्यमेतत्।

**रावणः**—( स्वगतम्। ) कथमन्यदेव किमप्युक्तवानस्मि। ( तदेव विपरीतं पठित्वा। ) अयि जानकि, तावन्मां जीवय नयनामृतेन।

**सीता**—तदा त्वामपि लङ्केश, विलोकयिष्यति जानकी।

**रावणः**—समत्याशम्। ) तत्कथय समयम्। अयं हि

मन्दोदरीमपि विमुञ्चति राज्यमेत-
दप्युन्मदं तव पदाब्जतले करोति

---

पवृत्त्यनुप्रासावलङ्कारौ। शिखरिणी वृत्तम् ॥ २६ ॥ **सीता**। प्रार्थनाया याञ्चाया भङ्गादनङ्गीकाराल्लाघवं तस्मान्न तावत्परं राघवादपि रामादपि कथं न बिभेषि। एतेन रामस्य शूरतमत्वं ध्वनितम्। **रावण**। **काम इति**। असिलता कृपाणो निहिता स्थापिता यस्मिन् ( प्रहरणार्थेभ्यः परे निष्ठासप्तम्याविति परनिपातः) तादृशो य एकः केवलो बाहुर्भुजस्तस्य क्रीडयार्दितं पीडितं त्रिभुवनं लोकत्रयं येन तस्य दशाननस्य दशमुखस्य मे कामो मन्मथः कियान् किम्प्रमाणः, तस्य कियती मात्रेत्यर्थः। अतो न मदनाद्भीतिरिति भावः। किन्तु सुमुखि सीते त्वदर्थे त्वन्निमित्त केवलमयं रामः न चिरादल्पकालेन निशितैस्तीक्ष्णैः शरौघैर्बाणचयैर्मां हन्ति, हनिष्यतीत्यर्थः। वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यदर्थे लट्। अत्र भ्रंशो नाम नाट्यालङ्कारः। दृप्तादीनां भवेद्भ्रंशो वाच्यादन्यतरद्वच इति **दर्पणोक्तेः**। छेकवृत्त्यनुप्रासालङ्कारौ। वसन्ततिलका वृत्तम्॥२७॥ **रावणः**। ( तदेव पूर्वोक्तपद्यमेव विपरीतं रामकामशब्दयोर्विपर्यासेन। **मन्दोदरीमिति**। अयं दशास्यो रावणः, हे सुमुखि सीते त्वदर्थे तव प्राप्त्यर्थं मन्दोदरीमपि तदाख्यमहिषीमपि विमुञ्चति त्यजति। उन्मदं मोहकमेतद्राज्यमपि तव

---

१. अपीति पाठः। २. एतावदिति पाठः। ३. अये इति पाठः।

किं जल्पितेन बहुना सुमुखि त्वदर्थे
स्वान्युच्छिनत्त्यपि शिरांसि पुनर्दशास्यः ॥ २८ ॥

**सीता**—यदि खद्योतभासापि समुन्मीलति पद्मिनी ।

**रावणः**—( सक्रोधम् । ) आः पापे, यावत्किल तपनखद्योतयोस्तावदेवान्तरं रामरावणयोः । तदियं हन्यसे । ( इति खड्गमुत्पाटयति । )

**रामः**—( सकरुणम् )

हा जानकि त्वमधुनासि कथं भवित्री

( सविचिकित्सम् । )

धिग्दैवतं तव सुदारुण एष पाकः ।

( सक्रोधम् । )

आः पाप राक्षसकुलाधम संहतोऽसि

( ससम्भ्रमम् । )

हे वत्स लक्ष्मण धनुर्धनुरेष कालः ॥ २९ ॥

---

पदाब्जतले चरणकमलाध प्रदेशे करोति । सर्वं राज्यं यथा मच्चरणाराधकं तथा त्वच्चरणाराधकं यथा भवेत्तथा करोमीति भावः । बहुना जल्पितेन बहुभाषणेन किं, न किमपि प्रयोजनमिति भाव । त्वदर्थे स्वानि निजानि शिरांस्यपि पुनर्द्वितीयवारमुच्छिनत्ति कृन्तति । वसन्ततिलका वृत्तम् ॥ २८ ॥ **सीता** । यदि खद्योतभासापि ज्योतिरिङ्गणकान्त्यापि पद्मिनी नलिनी उन्मीलति विकसति, तदा त्वां जानकी विलोकयिष्यतीति पूर्ववाक्येन सम्बन्धः । **रावणः** । उत्पाटयति कोशादुद्धरति । **रामः** । **हेति** । जानकि सीते अधुना सम्प्रति त्वं कथं भवित्री असि । का तव गतिर्भवेदिति भावः । हेति खेदे (सविचिकित्सम्) सविकल्पम्, दैवतं देवतां प्रति धिक् (उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु इत्यनेन धिग्योगे द्वितीया ) निन्दायाः कारणमाह तवेत्यादिना । तव एष दृश्यमानः पाकः परिणामः 'सुदारुणोतिघोरः एतादृक्समये कापि देवतास्मात्संकटान्न परिपालयति त्वामतो दैवतं धिगिति भावः । धिग्दैवतं तवेतिपाठे भो दैव भागधेय यस्मात्तव एष सुदारुणः पाकः परिणामः तत् तस्मात् त्वां धिगस्तु इत्यर्थ । (सक्रोधम्) आः पाप पापिन् (पापशब्दादर्शआद्यच्) राक्षसकुलेऽधम नीच रावण, संहतोसि, मयेति शेषः । ससंभ्रमं सत्वरं हे वत्स लक्ष्मण धनुर्धनुः ( संभ्रमेण प्रवृत्तौ यथेष्टमनेकधा प्रयोगो न्यायसिद्ध इति द्वित्वम् ।

---

१. अपीति पाठः । २. यदियमिति पाठः । ३. संहत इति पाठः ।

लक्ष्मणः—आर्य, किमिदमैन्द्रजालिकविलोकनादलीकमेव संभ्रम्यते।

रावणः—अयि जानकि, अयमसावुदीर्णकरवालः[1] कालभुजङ्गः। तदिदानीमपि दशकण्ठभुजाश्लेषभेषजमनुजानीहि।

**सीता—**

विरम विरम रक्षः किं मुधाजल्पितेन
स्पृशति नहि मदीयं कण्ठसीमानमन्यः।
रघुपतिभुजदण्डादुत्पलश्यामकान्ते-
र्दशमुख भवदीयान्निष्कृपाद्वा कृपाणात्॥ ३० ॥

रावणः—किमतः परं कालक्षेपेण। तदहमिदानीमस्याः कण्ठरुधिरेण कालिकामर्चयामि। (इति खड्गधारां परामृशति।)

---

आनयेति शेषः। हेतुमाह एष कालः तस्यैषोऽवसरः। हन्तुमुद्यतोऽस्ति-प्रियामिषः अत सत्वरं धनुर्देहीति भावः। करुणवीरयोः सन्धेर्भावसन्धिः। वसन्ततिलका वृत्तम्॥ २९ ॥ **लक्ष्मणः**। अलीकमेव मुधैव किं संभ्रम्यते कुतस्त्वर्यते। **रावणः**। अयमसौ उदीर्णः कोशादुद्धृतः करवालः खड्गः कालभुजङ्गः कृष्णसर्पः, तस्मिन्दशति यथा नोज्जीवति तथा खड्गस्पर्शे जीवनं नेति भावः। दशकण्ठभुजाश्लेषः रावणबाह्वालिङ्गनमेव भेषजमौषधमनुजानीह्यनुमन्यस्व। औषधेन सर्पबाधा यथा न भवति तथा मदङ्गीकरणेन कृपाणबाधा नास्तीति भावः। **सीता**। **विरमेति**। रक्षः राक्षस मुधाजल्पितेन वृथाभाषणेन किम्? न किमपि प्रयोजनमिति भावः। विरमविरम जल्पितादिति शेषः। अतःपरं मा वादीरित्यर्थः (वाक्यादेरामन्त्रितस्येति कोपे द्विर्भावः।) हि यतः उत्पलस्येन्दीवरस्येव श्यामा कृष्णा कान्तिर्भा यस्य, इदं विशेषणं कृपाणेऽपि योज्यम्। तादृशाद्रघुपतेर्भुजदण्डात् वा अथवा निष्कृपान्निर्घृणात् भवदीयात्त्वत्संबन्धिनः कृपाणात् खड्गादन्यः (अन्याराादितरर्ते इति सूत्रेण पञ्चमी) मदीयां मत्संबन्धिनीं कण्ठसीमानं न स्पृशति, स्प्रष्टुं नार्हतीत्यर्थः। विकल्पालङ्कारः। विरोधे तुल्यबलयोर्विकल्पालंकृतिर्मतेति लक्षणात्। मालिनी वृत्तम्॥ ३० ॥ **रावणः**। कालिकां दुर्गां देवीं। तस्या रुधिरमियत्वा-

---

१. उदीर्णकरालकरवाल इति पाठः।

**रामः**—अहह।

विधिरकरुणः स्फीतस्फीतं तमः परिजृम्भते
जलधिसलिले मग्नं विश्वं युगं परिवर्तते।
कुवलयदलस्रक्संश्लेषोत्सवैकपदे पदं
यदयमदयः सीताकण्ठे करोति कृपाणकः॥ ३१॥

(पुनर्विभाव्य।) हन्त भोः,

चान्द्रीं लेखां दशति दशनैर्दारुणः सैंहिकेयो
नव्यां वल्लीं दवदहनकश्चान्दनीं दन्दहीति।
अप्युन्मत्तः कुवलयमयीं मालिकामालुनीते
मूलादुन्मूलयति नलिनीं दुष्टहस्ती करेण॥ ३२॥

**सीता**—

चन्द्रहास हर मे परितापं
रामचन्द्रविरहानलजातम्।

---

दिति भावः। **रामः**। **विधिरिति**। यद्यतः अदयो निर्घृणः कृपाणको कुत्सितरावणकरवालः (कुत्सिते कन्) कुवलयदलस्रजः उत्पलपत्रमालायाः संश्लेषोत्सवस्य संपर्कोत्सवस्य एकपदे मुख्यस्थाने सीताकण्ठे पदं कर्तनव्यवसायम् (पदं स्थाने इत्युपक्रम्य व्यवसायापदेशयोरिति हैमः) करोति अतो विधिः दैवं अकरुणो निष्कृपः, स्फीतस्फीतं अतिस्फीतमित्यर्थः (स्फायः स्फी निष्ठायामिति स्फी आदेशः, प्रकारे गुणवचनस्येति द्विर्भावे कर्मधारयवद्भावात्सुब्लुक्) तमोऽन्धकार परिजृम्भते विसर्पति, विश्वमखिलं जगत् जलधिसलिले सागरोदके मग्नं लीनमित्यर्थः, युगं परिवर्तते विपर्यस्यति, अहहेति खेदे, अनेन सीताया ऋते सर्वं शून्यमिति सूचितम्। निदर्शनाकाव्यलिङ्गावलंकारौ। हरिणी वृत्तम्॥ ३१॥ **चान्द्रीमिति**। दारुण उग्रः सैंहिकेयः सिंहिकापत्यं राहुः (स्त्रीभ्यो ढगिति ढक्) चान्द्रीं लेखां शशिकलां दशनैर्दन्तैर्दशति, दवदहनकः दावाग्निश्चान्दनीं मलयजाश्रितां वल्लीम् (तस्येदमित्यण्णन्तान्ङीप्) दन्दहीति भृशं दहति (क्रियासमभिहारे यङ्, जपजभदहदशेत्यनेनाभ्यासस्य नुक्) उन्मत्तः कुवलयमयीमुत्पलमयीं मालिकां स्रजमप्यालुनीते आच्छिनत्ति, दुष्टहस्ती मत्तद्विपो नलिनीं कमलिनीं आमूलान्मूलमभिव्याप्य (पञ्चम्यपाङ्परिभिरिति पञ्चमी) करेण शुण्डया उन्मूलयत्युत्पाटयति, तथा च प्रकृते तत्तुल्यो रावणव्यवसाय इति भावः। निदर्शनालङ्कारः मन्दाक्रान्ता वृत्तम्॥३२॥ **सीता**। **चन्द्रहासेति**। चन्द्रहास रावणकृपाण हि यस्मात् त्वं कान्त्या शोभया जितं परा-

त्वं हि कान्तिजितमौक्तिकचूर्णं
धारया वहसि शीतलमम्भः ॥ ३३ ॥

रावणः—कः कोऽत्र भोः । सत्वरं मम करे कपालपात्रमर्प्यतां येनास्याः कण्ठरुधिरं प्रतीच्छामि । (इत्यशोकविटपान्तराले हस्तं प्रसार्य) कथं न्यस्तमेव केनापि मम करतले कपालम् । (विलोक्य।सचमत्कारम्) अये, न कपालमेतत् । किं त्वशस्त्रच्छिन्नं शिर एव कस्यापि । ( विमृश्य । ) कस्य पुनरिदम् । नूनमक्षकुमारस्य ( इति मूर्च्छितः पतति।)

त्रिजटा—अयि लङ्केश्वर, समाश्वसिहि समाश्वसिहि ।

रावणः—(समाश्वस्य । ) नूनमिदं तस्य दुष्टकपेर्विजृम्भितम्। तेन तमेव तावदग्रतः पातयामि । ( इति निष्क्रान्तः । )

रामलक्ष्मणौ—( सहर्षम् । ) अहो संविधानवैदग्धी ।

त्रिजटा— सीतामालिङ्ग्य ।) सखि, पुण्येन जीवितासि ।

सीता—[1]अपुण्णेणेति भणिज्ज ।

त्रिजटा—कथमिव ।

सीता—कहं उण तं अपुण्णं ण होइ जं किर रामचन्दविरहताव-णिव्वापणीए चन्दहासधाराए उवेक्खिदह्मि। ता किं इमिणा जीविदेण। इह दारुसंचअम्मि अग्गिं पज्जालेहि जत्थ इमाइं अङ्गाइं सीअलअम्मि।

---

१. अपुण्येनेति भण ।

२. कथ पुनस्तदपुण्यं न भवति यत्किल रामचन्द्रविरहतापनिर्वापण्या चन्द्रहासधारयोपेक्षितास्मि । तत्किमनेन जीवितेन । इह दारुसचयेऽग्निं प्रज्वा-लय यत्रेमान्यङ्गानि शीतलयामि ।

---

भूतं मौक्तिकचूर्णं मुक्ताक्षोदो येन तादृशं शीतलं हिमं अम्भ उदकं धारया नि-शितमुखेन वहसि धत्से । धाराकान्तेस्तरलताया जलत्वेन लोकेऽपि व्यवहारस्य जागरूकत्वात् । अतो रामचन्द्रस्य विरहानलेन वियोगाग्निना जातम् मे मम प-रितापमसह्यसन्तापं परिहर विनाशय। रामविरहं सोढुमशक्तां मां जहीति भावः। काव्यलिङ्गच्छेकानुप्रासालङ्कारौ । स्वागता वृत्तम् ॥३३॥ कपालं कर्परम्। येन कपालेनास्याः सीतायाः कण्ठरुधिरं गलशोणितं प्रतीच्छामि गृह्णामि । अक्ष-कुमारस्य तदाख्यनिजसुतस्य । रावणः । इदमक्षशिरःकर्तनादिकम्, तस्य दुष्टकपेः, मारुतेरित्यर्थः। विजृम्भितं चेष्टितम्। अग्रत सीताकण्ठच्छेदनात्पूर्वमि-त्यर्थः । रामलक्ष्मणौ । वैदग्धी रचनाचातुरी इन्द्रजालस्येति शेषः । सीता । अपुण्यं पापं कथं न भवति, अपि तु भवत्येव । कारणं दर्शयति। यत्किलेति। रामचन्द्रविरहनिर्वापण्या मन्त्राशनेन विरहोपशमयित्र्या चन्द्रहासधारया रावण-

**त्रिजटा**—शान्तं पापम् । नन्वचिरादेव निजाङ्ककानां

हिमकरकिरणकरम्बितमरकतमयपीनपट्टकप्रतिमे ।
मलयजपरागसरसे[1] रामोरसि तापमपहरसि ॥ ३४ ॥

**सीता**—हला[1], किं इमिणा अलीअजप्पिदेण सच्चं जेव्व अणलपवेसे विवसिदह्मि । ता उवणेहि मे अङ्गालखण्डअम् ।

**रामः**—हन्त भोः, कथमपि शार्दूलमुखान्मुक्तायाः पुनरपि शबरवागुरामवतीर्णायाः कुरङ्गवध्वा भङ्गीमङ्गीकृतवती जानकी ।

**त्रिजटा**—( निर्गत्य प्रविश्य च । ) सखि असुलभानलोऽयं प्रदेशः ।

**रामः**— ( सहर्षम् । ) त्रिजटे, दिष्ट्या रक्षितस्त्वया रामः ।

**सीता**— ( संस्कृतमाश्रित्य । अशोकं प्रति । )

कुरु सकरुणं चेतः श्रीमन्नशोकवनस्पते
दहनकणिकामेकां तावन्मम प्रकटीकुरु ।

---

१. हला, किमनेनालीकजल्पितेन । सत्यमेवानलप्रवेशे व्यवसितास्मि । तदुपनय मेऽङ्गारखण्डकम् ।

---

खड्गनिशितमुखेनोपेक्षितास्मि परित्यक्तास्मि । इहात्र प्रदेशे दारुसञ्चये काष्ठभारे, काष्ठानि समाहृत्य तद्रचिते इत्यर्थः ।ज्वलितेऽग्नौ इमानि विरहानलदग्धानि अङ्गानि शीतलयामि शीतलीकरोमि । अनेन विरहानलस्यैतदग्न्यपेक्षयाऽधिकतापप्रदत्वं सूचितम् । **त्रिजटा । हिमकरेति** । हिमकरस्य शीतकिरणस्य चन्द्रस्य किरणैरंशुभिः करम्बितस्य मिश्रस्य मरकतमयस्य हरिन्मणिप्रचुरस्य पीनपट्टकस्य पीवरपीठस्य प्रतिमोपमा यस्य, मलयजपरागैः चन्दनरजोभिः सरसे रामोरसि रामवक्षस्थले निजाङ्ककानां स्वावयवानां तापम् ( अनुकम्पायां कन् ) संतापमचिरादेवाल्पकालेनैव अपहरसि नाशयसि । उपमालङ्कारः। आर्या वृत्तम् ॥३४॥ **त्रिजटा** । असुलभः दुर्लभोऽनलोऽग्निर्यस्मिंस्तादृशः । **रामः** । रामो रक्षितः अग्निमदत्त्वा सीताजीवितं रक्षन्त्या त्वयाऽहमपि रक्षित इति भावः । **सीता । कुर्विति** । श्रीमन् सुभग अशोकवनस्पते अशोकतरो चेतः चित्तं तावत् साकल्येन सकरुणं सदयं कुरु । करुणोपायन्दर्शयति । मे मम एकां दहन-

---

१. रजसीति पा० ।

ननु विरहिणां संतापाय स्फुटीकुरुते भवा-
न्नवकिसलयश्रेणीव्याजात्कृशानुशिखावलिम् ॥३५॥

( विलोक्य। सहर्षम्।) हला, पेक्ख पेक्ख। निवडिदं दाव इमस्स सिहरादो अङ्गालखण्डअम्। ( इत्युपसृत्य ग्रहीतुमिच्छति। )

**रामः**—

अये कथमशोकोऽपि ममायं शोकतां गतः।

**लक्ष्मणः**—आर्य, अनुपपन्नमिदं यत्किल तरुशिखरमङ्गारखण्डकमुद्गिरति।

**रामः**—

किं न [1]संपादयेद्वत्स रामस्य विधिवैधुरी ॥ ३६॥

(सीताङ्गारखण्डं हस्तेनादत्ते।)

**रामः**--

अनल नलिनकोमले करेऽस्याः
स्फुरदरुणोत्पलकुड्मलोपमः स्याः।

( विमृश्य। )

चरितमुचितमस्ति वा कुतस्ते
ननु भुवने विदितोऽसि कृष्णवर्मा ॥ ३७॥

---

१. हला, पश्य पश्य। निपतितं तावदस्य शिखरादङ्गारखण्डकम्।

---

कणिकां स्फुलिङ्गं प्रकटीकुरु आविष्कुरु। स्फुलिङ्गाविष्करणशक्तिं दर्शयति। भवान् विरहिणां प्रियावियुक्तानां सन्तापाय ( तादर्थ्ये चतुर्थी ) नवकिसलयश्रेण्याः नूतनपल्लवपङ्क्त्याः व्याजात् मिषात् कृशानुशिखावलिं अग्निज्वालापाङ्क्तिं न स्फुटीकुरुते न प्रकटयति (भवच्छब्दयोगान्न मध्यमपुरुषः) नु इति प्रश्ने। काव्यलिङ्गकैतवापह्नुती अलङ्कारौ। हरिणी वृत्तम्॥ ३५॥ **रामः। अये इति**। अयमशोकोऽपि तरुर्मम शोकतां शोकहेतुतां कथं गतः प्राप्तः। न विद्यते शोको यस्मादिति व्युत्पत्त्या शोकाहेतोरशोकस्य शोकहेतुत्वं विरुद्धम्। वत्स लक्ष्मण रामस्य विधिवैधुरी दैवप्रातिकूल्यं किं न सम्पादयेत् अपि तु सर्वं सम्पादयेदेवेति भावः। विरोधाभासालङ्कारः। श्लोकश्छन्दः॥ ३६॥ **अनलेति**। भो अनल अग्ने अस्या जानक्याः नलिनकोमले करे स्फुरतः प्रकाशमानस्य अरुणोत्पलस्य रक्तकमलस्य यत् कुड्मलं तस्योपमा सादृश्यं यस्य तादृशः शीतल इत्यर्थः। स्याः भवेः। वा अथवा ते तव उचितं योग्यं चरितमाचरणं कुतोऽस्ति। ननुरवधारणार्थः भुवने जगति कृष्णः धूमः वर्त्म यस्य तादृशः दुराचार इति ध्वनिः ( कृष्णवर्त्मा विधुन्तुदे। दुराचारे हुताशे चेति

---

१. नोपपादयेदिति पाठः।

**सीता**—( हस्ते गृहीत्वा । सविषादम् । ) कहं मह अपुण्णेण अग्गीवि सीअलो संवुत्तो । ( निपुणं निरूप्य । सचमत्कारम् । ) अये, अङ्गालखण्डअं ण क्खु एदं । अवि उण पम्मराअरअणखण्डअम् ।

**त्रिजटा**—अये, पुण्यवतामग्निरेव रत्नं भवतीति प्रवादः सत्य एव संवृत्तः ।

**सीता**—( पुनर्विलोक्य । ) कहं सा इमा रअणमुद्दिआ । ( पुनः संस्कृतमाश्रित्य । मुद्रिकां प्रति । )

या शैशवावधि मनोरमरामचन्द्र-
हस्ताङ्गुलिप्रणयिनी सुभगा सुवृत्ता ।
अन्येव सा जनकराजसुता कथं नु
लङ्कामुपागतवती मणिमुद्रिकेयम् ॥ ३८ ॥

( पुनः सादरम् । कराङ्गुलिकिसलयेन लालयन्ती । ) अए रअणङ्गुलीअ, अवि दाव कुसलं सलक्खणाण रामचन्दचलणाणं ।

---

१. कथं ममापुण्येनाग्निरपि शीतलः संवृत्तः । अये, अङ्गारखण्डकं न खल्वेतत् । अपि पुनः पद्मरागरत्नखण्डम् ।

२. कथं सेयं रत्नमुद्रिका ।

३. अये रत्नाङ्गुलीयक, अपि तावत्कुशलं सलक्ष्मणयो रामचन्द्रचरणयोः ।

---

कोशात् ) विदितोऽसि ज्ञातोऽसि । आक्षेपालङ्कारः ॥ ३७ ॥ **सीता** । पद्मरागखण्डकं शोणरत्नशकलम् । **त्रिजटा** । प्रवादो लोकवादः । **सीता** । कथं साऽनुभूतपूर्वा इयं रत्नमुद्रिका रत्नाङ्गुलीयकम् । **येति** । या मणिमुद्रिका आशैशवावधि बाल्यावधिमभिव्याप्य ( आङ्मर्यादाभिविध्योरित्यव्ययीभावः ) मनोरमस्य सुन्दरस्य रामचन्द्रस्य हस्ताङ्गुलीषु प्रणयिनी प्रेमवती । बाल्यमारभ्य तदङ्गुलिस्थेत्यर्थः । सुभगा शोभना, सुवृत्ताऽतिवर्तुला । जानकीपक्षे, रामपाणिगृहीतत्वात्तद्धस्ताङ्गुलिप्रणयिनी सुभगा धन्या सुवृत्ता सुचरिता । अन्या मदितरा जनकराजसुतेव जानकीव, सा इयं मणिमुद्रिका रत्नोर्मिका लङ्कां रावणराजधानीं कथं केन प्रकारेण ( किमश्चेति थमुप्रत्ययः ) उपाग-

( पटाक्षेपेण प्रविश्य । )

**हनूमान्**—कुशलं देवि, कुशलम् ।

**सीता**—अमिअमुह, को सि तुमम्[1] ।

**हनूमान्**—

तारापतेरनुचरो रघुनन्दनस्य
दूतः सुतोऽस्मि मरुतः प्रथितो हनूमान् ।
त्वां हन्तुमुद्यतवतो दशकंधरस्य
न्यस्तं करे निभृतमक्षशिरो मयैव ॥ ३९ ॥

**रामः**—अहो, कथमिदं हनूमन्नामधेयस्य मद्भागधेयस्य विलसितमेतत् ।

**लक्ष्मणः**—अहो, सचमत्कारता संविधानस्य ।

**सीता**—अइ[2] भद्दमुह, को उण इमो तारावई ।

**हनूमान्**—

यो वालिनः शौर्यनिधेरमित्रं
त्रैलोक्यबन्धोस्तपनस्य सूनुः ।

१. अमृतमुख, कोऽसि त्वम् ।
२. अयि भद्रमुख, कः पुनरयं तारापतिः ।

तवती माता, नु इति वितर्के । उपमाश्लेषच्छेकानुप्रासालङ्काराः । वसन्ततिलका वृत्तम् ॥ ३८ ॥ **हनूमान्** । **तारापतेरिति** । तारापतेः सुग्रीवस्यानुचरः सहायः, रघुनन्दनस्य रामस्य दूतः सन्देशहरः, हनूमानिति प्रथितः ख्यातः, मरुतः वायोः सुतोऽस्मि । त्वां हन्तुं नाशयितुमुद्यतवतः उद्युक्तस्य दशकन्धरस्य रावणस्य करे पाणौ मयैव अक्षस्य तदाख्यतदात्मजस्य शिरः निभृतं गुप्तं यथा तथा न्यस्तं निक्षिप्तम् । वृत्त्यनुप्रासालङ्कारः । वसन्ततिलका वृत्तम् ॥ ३९ ॥ **रामः** । हनूमानिति नामधेयं नाम यस्य ( भागरूपनामभ्यो धेय इति स्वार्थे धेयप्रत्ययः ) मद्भागधेयस्य मम सुदैवस्य विलसितं चेष्टितम् । **हनूमान्** । **य इति** । यस्तारापतिः शौर्यनिधेः पराक्रमशालिन इत्यर्थः । वालिनस्तदाख्यकपिराजस्यामित्रं शत्रुः ( द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रव इत्यमरः ) त्रैलोक्यबन्धोः लोकत्रयाप्तस्य तपनस्य सूर्यस्य

१ मद्भाग्यस्य इति पाठः ।

रामस्य पादाब्जतलाभिवर्ती
सुग्रीवनामा कपिचक्रवर्ती ॥ ४० ॥

सीता—केण[1] उण नरवाणराणं एरिसं सक्खित्तणं णिम्मिदम् ।

हनूमान्—रामबाणेनैव

वालिने विसृजता धनुरङ्कं
नाकलोकललनाकुचकेलिः ।
तारया सममदीयत चास्मै
वानरेन्द्रपदवीमणिमौलिः ॥ ४१ ॥

सीता—केहेहि[2] दाव । अवि णाम मह मन्दभाइणीए किदे दुब्बलो दाणिं किंपि रहुणाहो ।

हनूमान्—किमपीति किमुच्यते । इदानीं हि

बहुलपक्षशशीव दिने दिने
रघुपतिः कृशतामुपयाति सः ।

सीता—हद्धि[3] हद्धि ।

---

१. केन पुनर्नरवानराणामीदृश सखित्वं निर्मितम् ।

२. कथय तावत् । अपि नाम मम मन्दभागिन्याः कृते दुर्बल इदानीं किमपि रघुनाथः ।

३. हा धिक् हा धिक् ।

---

सूनुः पुत्रः रामस्य पदाब्जतले चरणकमलाधोभागे अभिवर्तते तच्छील. चरणसेवक इत्याशयः । सुग्रीव इति नाम यस्य तादृशः कपिचक्रवर्ती वानरसार्वभौमः । स तारापतिरिति शेषः । छेकानुप्रासालङ्कारः । इन्द्रवज्रा वृत्तम् ॥ ४० ॥ **वालिन इति** । धनुरङ्कं कार्मुकोत्सङ्गं विसृजता त्यक्तवता रामबाणेनैव वालिने तन्नामकसुग्रीवविपक्षाय कपये नाकलोकललनानां स्वर्गाङ्गनानां कुचकेलिः स्तनक्रीडा, अस्मै च सुग्रीवाय च वानरेन्द्र इति कपिश्रेष्ठ इति पदव्येव मणिमौलिः रत्नमुकुटं तारया तन्नामकतत्पत्न्या सममदीयत । नाकलोकेत्यादिना वालिहननं सूचितम् । तुल्ययोगितापर्यायोक्तसहोक्त्यलङ्काराः । स्वागता वृत्तम् ॥ ४१ ॥ **हनुमान्** । **बहुलेति** । स रघुपती रामः बहुलपक्षस्य कृष्णपक्षस्य शशीव चन्द्र इव दिनेदिने प्रतिदिनं कृशतामुपयाति प्राप्नोति । अस्य रामस्य अनुभावस्य तेजोविशेषस्य वंश-

हनूमान्—

कुवलयप्रतिमद्युतिरस्य तु
प्रविकसत्यनुभाववशंवदा ॥ ४२ ॥

सीता—दाणीं किमपि उज्जीविदह्मि[1]।

हनूमान्—अयि देवि, आकर्णय तावद्यत्संदिष्टं देवेन देव्याः।

हिमांशुश्चण्डांशुर्भवति जलदो दावदहनः
सरिद्वीचीवातः कुपितफणिफूत्कारपवनः।
नवा मल्ली भल्ली कुवलयवनं कुन्तगहनं
मम त्वद्विश्लेषात्सुमुखि विपरीतं जगदिदम् ॥ ४३ ॥

अपि च।

कस्याख्याय व्यतिकरमिमं मुक्तदुःखो भवेयं
को जानीते निभृतमुभयोरावयोः स्नेहसारम्।

१. इदानीं किमप्युज्जीवितास्मि।

वदाऽधीना (प्रियवशे वद इति खच्) कुवलयप्रतिमद्युतिस्तु नीलोत्पलतुल्यकान्तिस्तु प्रविकसति अभिवर्धते। अनेन वीर्यातिशयो व्यञ्जितः। उपमालङ्कारः। द्रुतविलम्बितं वृत्तम् ॥ ४२ ॥ **हनूमान्**। देवेन रामेण देव्यास्तव यत्संदिष्टं कथितम्। **हिमांशुरिति**। सुमुखि सुवदने (स्वाङ्गाच्चोपसर्जनादिति ङीष्, अम्बार्थनद्योरिति ह्रस्व.) त्वद्विश्लेषात्त्वद्वियोगात् मम जगद्विपरीतमन्यथैव जातम्। तदेव दर्शयति। हिमांशुश्चन्द्रः चण्डा उग्रा अंशवो मरीचयो यस्य तादृशः सूर्यो भवति। जलदो मेघः दवदहनो दावाग्निः, सरिद्वीचीनां नदीतरङ्गाणां वातो वायुः कुपितानां क्रुद्धानां फणिनां सर्पाणां फूत्कारपवनः निःश्वासमारुतः, नवा मल्ली नूतनमल्लिका भल्ली आयुधविशेषः। अथवा भल्लातकी (भल्लातक्यां स्त्रियां भल्लीति मेदिनी) व्रणोत्पादिनीत्याशयः। कुवलयवनं कुन्तानां प्रासानां गहनं काननं भवतीति सर्वत्र सम्बध्यते। विरोधाभासालङ्कारः। शिखरिणी वृत्तम् ॥ ४३ ॥ **कस्येति**। शशधरमुखि चन्द्रवदने इमं व्यतिकरं त्वद्वियोगजातं व्यसनम् (अथ व्यतिकरः पुंसि व्यसनव्यतिषङ्गयोरिति मेदिनी) कस्य मित्रस्याख्याय निवेद्य मुक्तदुःखस्त्यक्तव्यथो भवेयम्। मित्रनिकटे प्रकटितं दुःखं लघुतरं भवतीति भावः। तथा च **शाकुन्तले कालिदासः**। स्निग्धजनविभक्तं हि दुःखं सह्यवेदनं भवतीति। उभयोरावयोः निभृतं गुप्तं स्नेहसारं प्रेमदार्ढ्यं को जानीते नान्यः कोऽपीत्यर्थः। एकं मे मनः प्रेमतत्त्वं स्नेहरहस्यं

१. नवजलधर इति पाठः। २. निःश्वास इति पाठः। ३. वलभे इति पाठः।

जानात्येकं शशधरमुखि प्रेमतत्त्वं मनो मे
त्वामेवैतच्चिरमनुगतं तत्प्रिये किं करोमि ॥ ४४ ॥
( सीता लज्जते । )

**त्रिजटा**—सखि, त्वमपि रघुपतेः किमपि प्रतिसंदेशं प्रत्यभिज्ञानं च समर्पय ।

**सीता**—इमो मे पडिसंदेसो ।

बहलगलन्तणअणजलणिज्झरपज्जाउलावि मह दिट्ठी ।
तुह सुहअ वअणससहरलावण्णरसं पिपासेदि ॥४५॥

( चूडारत्नमाकृष्य हनूमतः करे समर्पयन्ती । ) अइ चूडारअण,

पक्खालेहिणिअमङ्गं रअणीअरदिट्ठिपसुपंसुलिअम् ।
रहुवइपअणिम्मलणहरअणीअरजोह्णनीरणिअरम्मि ॥ ४६ ॥

१. अयं मे प्रतिसंदेशः ।
बहलगलन्नयनजलनिर्झरपर्याकुलापि मम दृष्टिः ।
तव सुभग वदनशशधरलावण्यरसं पिपासति ॥
अयि चूडारत्न,
२. प्रक्षालय निजमङ्गं रजनिकरदृष्टिपांसुपांसुलितम् ।
रघुपतिपदनिर्मलनखरजनिकरज्यौत्स्ननीरनिकर ॥

जानाति एतत् मनस्त्वामेव भवतीमेव चिरं बहुकालं अनुगतमनुसृत्य गतमत्र मत्साविधे नास्तीत्यर्थः । तत् तस्मात् प्रिये सीते किं करोमि । मन्दाक्रान्ता वृत्तम् ॥४४॥ **सीता** । अयं मे प्रतिसंदेशः । **बलहेति** । मम दृष्टिर्नेत्रं बहलगलद्भिरतिक्षरद्भिः नयनजलनिर्झरैः नेत्रोदकप्रवाहैः पर्याकुलापि व्याकुलापि हे सुभग राम तव वदनमेव शशधरश्चन्द्रस्तस्य लावण्यम् । मुक्ताफलेषु च्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत इत्युक्तलक्षणं तदेव रसो जलं,पिपासति पातुमिच्छति। जलव्याप्ताया अपि दृष्टेर्जलपानेच्छेति विरोधः । विरोधाभासरूपकालङ्कारौ । आर्या वृत्तम् ॥ ४५ ॥ चूडारत्नं केशपाशस्थमणिम् । **प्रक्षालयेति** । रजनिचराणां राक्षसानां दृष्टय एव पांसवो रजांसि तैः पांसुलितम् कलुषितं ( पांसुलशब्दात्तत्करोतीति णिच् ) निजमङ्गं स्वशरीरं रघुपतिपदयो रामचन्द्रचरणयोर्निर्मलनखान्येव रजनीकरा निशाकराश्चन्द्रा इति यावत् । तेषां ज्योत्स्नाना चन्द्रिकाणां समूहो ज्यौत्स्नम् ( तस्य समूह इत्यण् ) भाविनणक्वचिद्वयोन्ये समूहे भावकर्मणोः । अदन्त-

१. सन्देशमिति पाठः । २. विच्छालअ इति पाठः ।

**हनूमान्**—देवि, अनुजानीहि । त्वरयति मां रामचन्द्रचरणदर्शनोत्कण्ठा ।

**सीता**—( सबाष्पगद्गदम् । ) अइ अकारणसिणिद्ध, पडिगदे तुह्मि पुणोवि को मह कहिस्सदि रहुणाहस्स पउत्तिम्[1] ।

**हनूमान्**—अयि देवि, दिष्टया स्मारितोऽस्मि । नन्विदं सदिष्टं देवेनैव देव्याः ।

मा ताम्य तामरसपत्रविशालनेत्रे
विज्ञाप्यते[1] पुनरपि त्वयि मत्प्रवृत्तिः ।
सौमित्रिकार्मुकगुणध्वनिभिर्गभीरै-
स्तैः किं च राक्षसवधूरुदितैरधीरैः ॥ ४७ ॥

( नेपथ्ये । )

हत्वा कथंचिदपि राजकुमारमक्ष
रे वानरापसद कुत्र पलायितोऽसि ।

---

१. अयि अकारणस्निग्ध, प्रतिगते त्वयि पुनरपि को मम कथयिष्यति रघुनाथस्य प्रवृत्तिम् ।

---

प्रत्यया इत्यमरात्समूहार्थकादन्तप्रत्ययान्तस्य क्लीबत्वम् । तदेव निराकरोति वारिचयस्तस्मिन्प्रक्षालय । रूपकालङ्कारः । गीतिर्वृत्तम् ॥ ४६ ॥ **सीता** । अकारणस्निग्ध "कारणेन हि जायन्ते मित्राणि रिपवस्तथा" इत्युक्तत्वादकारणेति । **हनूमान्** । अयि देवि स्मारितोस्मि प्रवृत्तिशब्दोच्चारणेनेति भावः ( चिन्तायां मित्त्वाभावान्न ह्रस्वः । प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मता इत्युक्तेः प्रयोज्यकर्मणि क्तः ) देव्यास्त्वेवदं वक्ष्यमाणं सन्दिष्टमाख्यातम् । **मा ताम्येति** । तामरसपत्रे इव कमलदले इव विशाले नेत्रे यस्यास्तत्संबुद्धिः, तैः पुरानुभूतैः गभीरैः सौमित्रिकार्मुकस्य गुणध्वनिभिर्ज्यानिर्घोषैः । स्वस्य धीरोदात्तत्वात्सौमित्रिरित्युक्तम् । किञ्च अधीरैः दीनैः राक्षसवधूनां रुदितैः तेषां पतिनाशसमुत्थशोकादिति भावः । मत्प्रवृत्तिर्मद्वार्ता त्वयि विज्ञाप्यते सादरं निवेदयिष्यते ( वर्तमानसामीप्ये लट् ) अतो मा ताम्य मा खिद्यस्व । छेकानुप्रासालङ्कारः । वसन्ततिलका वृत्तम् ॥ ४७ ॥ **हत्वेति** । रे वानरापसद कपिपामर कथञ्चिदपि अतिकृच्छ्रेणेत्यर्थः । राजकुमारं राजपुत्रं रावणात्मजमित्यर्थः । अक्षं तदाख्यं हत्वा कुत्र पलायि-

---

१. विख्याप्यते इति पा० ।

त्वां हन्तुमिच्छति दशानन शासनेन
दर्पोद्धतो धृतधनुर्ननु मेघनादः ॥ ४८ ॥

**हनूमान्**—देवि, कृतकार्योऽस्मि । तदलमतःपरमात्मापलापेन । तदिदं प्रणम्यसे आपृच्छ्यसे च ।

**सीता**—अए पवणणन्दण, अणआसेण इमं दुण्णिसाअरसाअरं अदिक्कमेहि ।

**हनूमान्**—अयं मूर्ध्नि गृहीतो देव्याः प्रसादः । ( इति निष्क्रान्तः । )

**सीता**—हला तिअडे, खेअरी भविअ पेक्ख दाव इमस्स उत्तन्तम् ।

**त्रिजटा**—तथा । ( इति निष्क्रान्ता । )

( नेपथ्ये । )

बाणौघानेकवीरः कवलयति रुषा मेघनादेन मुक्तान्

( सर्वे हर्षं नाटयन्ति । )

---

१. अये पवननन्दन, अनायासेनेमं दुर्निशाचरसागरमतिक्रमस्व ।

२. हला त्रिजटे, खेचरीभूत्वा प्रेक्षस्व तावदस्य वृत्तान्तम् ।

---

नोसि क्व गत्वा निलीनोऽसीति भावः । दर्पोद्धतोऽवलेपमत्तो धृतधनुः आत्तधन्वा ( समासान्तविधेरनित्यत्वान्न धनुषश्चेत्यनङ् ) मेघनाद इन्द्रजित् ननु दशाननशासनेन रावणाज्ञयैव ननुरत्रावधारणार्थः । त्वा हन्तुमिच्छति । वृत्त्यनुप्रासालंकारः । वसन्ततिलका वृत्तम् ॥ ४८ ॥ **हनूमान्** । कृतं कार्यं सीतावीक्षणरूपं येन तादृशोऽस्मि अतः परमत ऊर्ध्वं आत्मापलापेन स्वरूपनिह्नवेन अलं स्वरूपनिह्नवो न कार्य इत्यर्थः । एतावत्कालपर्यन्तं कपित्वेन ज्ञातोऽपि न रामदूतत्वेन ज्ञात इदानीं कृतकार्यत्वाद्रामदूतत्वं प्रकटयामीति भावः । **सीता** । पवननन्दन वायुकुमार दुर्निशाचरा दुष्टराक्षसा एव सागरः तमनायासेन सुखेन अतिक्रमस्वोल्लङ्घयेत्याशिषि लोट् । एतान्नाशयेति भावः । **हनूमान्** । देव्यास्तव प्रसादोऽनुग्रहः सुखेनातिक्रमस्वेत्याशीरूपः, मूर्ध्नि मस्तके गृहीतः धृतः । **सीता** । हला सखि खेचरी भूत्वा आकाशचारिणी भूत्वा । **नेपथ्ये** । बन्धदहनादेर्युद्धस्य च प्रत्यक्षं दर्शयितुमनुक्तत्वान्नेपथ्ये इत्युक्तम् । उक्तं च **दर्पणे** । दूराह्वानं वधो युद्धं राज्यदेशादिविप्लवः । संरोधं भोजनं स्नानं सुरतं चानुलेपनम् । अम्बरग्रहणादीनि प्रत्यक्षाणि न निर्दिशेदिति । **बाणौघानिति** । एको मुख्यश्चासौ वीरश्चेति कर्मधारयः ( पूर्वापरप्रथमेति वीरशब्दस्य पूर्वनिपाते प्राप्तेपि बहुलग्रहणादेकशब्दस्य पूर्वनिपातः ) स हनूमान् मेघनादेनेन्द्रजिता रुषा क्रोधेन मुक्तान् त्यक्तान् बाणौघान् शरसमूहान्

---

१. नेक इति पाठः । कलयति च इति पाठः ।

( पुनर्नेपथ्ये । )

बद्धोऽयं राक्षसेन ज्वलदनलशिखादीप्तपुच्छः कृतश्च ।

( सर्वे विषादं नाटयन्ति । )

( पुनर्नेपथ्ये । )

क्रामन्नट्टालिकानामुपरि कृतपदो दन्दहीत्येष लङ्कां

( सर्वे हर्षविषादौ नाटयन्ति । )

( पुनर्नेपथ्ये । )

अक्लान्तोऽयं पयोधेः पयसि शमयति स्वाङ्गलग्नं कृशानुम् ॥ ४९ ॥

सर्वे हर्षं नाटयन्ति । )

( पुनर्नेपथ्ये । )

अहो आश्चर्यमाश्चर्यम् ।

वेलाद्रेरस्य हेलाक्रमणपरिणतस्तुङ्गमाक्रम्य शृङ्गं

मौलिं पूर्वाचलस्य द्युमणिरिव नभो लङ्घयत्यम्बुराशिम् ।

---

कवलयति भक्षयति तृणाय मन्यते इति भावः । हर्षं नाटयन्ति हनूमदुत्कर्षादिति भावः । अयं हनूमान् राक्षसेनेन्द्रजिता बद्धः संयतः, ज्वलतः प्रदीप्यमानस्यानलस्याग्नेः शिखाभिर्दीप्तं पुच्छं लाङ्गूलं यस्य तादृशः कृतश्च, विषादं हनुमत्पक्षीयत्वाद्विषादः । एष हनूमान् अट्टालिकानां क्षौमपङ्क्तीनामुपरि कृते पदे चरणे येन तादृशः क्रामन् संचरमाणः सन्, लङ्कां राक्षसराजधानीं दन्दहीति भृशं दहति ( यङ्लुगन्ताल्लट् जपजभदहेत्यभ्यासस्य नुक् ) हर्षविषादौ दह्यते हनूमानिति विषादः, लङ्कामयं दहतीति हर्षः, अयं हनूमान् क्लान्तोऽग्लानः सन् पयोधेः पयसि समुद्रवारिणि स्वाङ्गलग्नं स्वपुच्छसंसक्तं कृशानुमनलं शमयति निर्वापयति । कारकदीपकालङ्कारः । क्रमिकैकगतानान्तु गुम्फः कारकदीपकमिति लक्षणात् । स्रग्धरा वृत्तम् ॥४९॥ वेलाद्रेरिति । द्युमणिः सूर्यः पूर्वाचलस्योदयगिरेर्मौलिं शिखरमाक्रम्य अधिष्ठाय नभ इवाकाशमिव हेलया लीलया क्रमणे वारिधिपारगमने परिणतो विनम्रः । उड्डानावसरे अवनतेरावश्यकत्वादिति भावः । हनूमान् अस्य वेलाद्रेः समुद्रतटपर्वतस्य त्रिकूटस्य तुङ्गमुच्चं शृङ्गं शिखरमाक्रम्य, वेगप्रोद्भूतेन जवजनितेन वातेन प्रतिहतं ताडित यत्सलिलं तेन उन्मुक्तानामूर्ध्वं क्षिप्तानां गम्भीरगर्भादगाधमध्यप्रदेशाद्व्यक्तीभूतानां प्रादुर्भूतानामुरगेन्द्राणां पन्नगवराणां स्तुतिशतैर्विकसन् विलसन् कीर्तिरिव हारो मुक्तावली यस्य । कीर्तेः शुभ्रत्ववर्णनाद्धारस्तुपकं तादृशः सन्नम्बुराशिं स-

---

१. दाहयामासेति पाठः । २. स्वाङ्गवीतमिति पा० ।

वेगप्रोद्भूतवातप्रतिहतसलिलोन्मुक्तगम्भीरगर्भ-
व्यक्तोभूतोरगेन्द्रस्तुतिशतविकसत्कीर्तिहारो हनूमान् ॥ ५० ॥

**सीता**—( नेपथ्याभिमुखमवलोक्य । ) हला तिअडे, अवतिण्णासि महीअलम् । ता पिअवदाए तुह आलिङ्गेमि अङ्गाइं । ( इति निष्क्रान्ता । )

**रामः**—प्रिये, मामपि प्रतीक्षस्व ।

**लक्ष्मणः**—आर्य, किमिदं लङ्कावृत्तान्तानुसारिणि विद्याधरप्रणीते महेन्द्रजाले पुनः संभ्रम्यते ।

**रामः**—तर्हि दिष्ट्यास्माभिर्निजविक्रमकथापराङ्मुखस्यापि हनूमतश्चरितरहस्यमाकलितम् ।

( नेपथ्ये । )

अये रघुनाथ, अयमसौ

दर्पोद्धतं दधिमुखं तरसा निपीड्य
पीत्वा चिरं मधुवने सरसं मधूनि ।
द्रष्टुं समेति भवतः पदपद्मलीलां
नीलाङ्गदप्रभृतिभिः सहितो हनूमान् ॥ ५१ ॥

**रामः**—वत्स, आकर्णितम् । तदागच्छ । कृतकार्यं हनूमन्तं प्रत्युद्गच्छाव ।

( इति निष्क्रान्ताः सर्वे । )

इति षष्ठोऽङ्कः ।

१. हला त्रिजटे, अवतीर्णासि महीतलम् । तत्प्रियवदायास्तवालिङ्गाम्यङ्गानि ।

मुद्रं लङ्घयति । अत आश्चर्यम् । उपमारूपकच्छेकवृत्त्यनुप्रासालङ्काराः । स्रग्धरा वृत्तम् ॥ ५० ॥ **सीता** प्रियंवदाया हनुमच्छुभचरित्रशंसिन्या इत्यर्थः । **रामः** । निजविक्रमकथायां स्वपराक्रमवर्णने पराङ्मुखस्यापि विमुखस्यापि "इन्द्रोपि लघुतां याति स्वयं प्रख्यापितैर्गुणैरिति" न्यायादित्याशयः । चरितरहस्यं चरित्रतत्त्वमाकलितं ज्ञातम् । **दर्पोद्धतमिति** । अयं पुरो दृश्यमानः असौ हनुमान् दर्पेण गर्वेण उद्धतमुन्मत्तं दधिमुखं सुग्रीवमधुवनरक्षकं तदाख्यकपिं तरसा बलेन निपीड्य संमर्द्य मधुवने माक्षिकारण्ये सरसं प्रीतियुतं यथा स्यात्तथा मधूनि क्षौद्राणि पीत्वा नीलाङ्गदप्रभृतिभिः नीलाङ्गदाख्यवानरादिभिः सहितः समेतः सन् भवतस्तव पदपद्मयोः लीलां सौन्दर्यं द्रष्टुं समेत्यागच्छति । वसन्ततिलका वृत्तम् ॥ ५१ ॥

**समाप्तोऽयं षष्ठोऽङ्कः ॥**

१. स्वरसमिति पाठः ।

## सप्तमोऽङ्कः ।

——×✻×——

( ततः प्रविशति पुलस्त्यशिष्यः । )

**पुलस्त्यशिष्यः**—( परितो विलोक्य । ) अपरिशीलितसंनिवेशोऽस्मि । तत्कथं पृच्छामि तस्य भवनम् । (पुनर्विलोक्य ।) कथमयं लङ्केश्वरमातामहस्य महामन्त्रिणो माल्यवतः परिचारकः करालकः । (उच्चैः ।) सखे करालक, इत इतः ।

( प्रविश्य । )

**करालकः**—मुने, प्रणम्यसे ।

**मुनिः**—समीहितं लभस्व । कथय तावन्मे बिभीषणस्य भवनम् ।

**करालकः**—किं तत्र ।

**मुनिः**—आदिष्टोऽस्मि भगवता पुलस्त्येन कनिष्ठपौलस्त्यस्य कमपि संदेशमुपनेतुम् ।

**करालकः**—न तावदिदानीमिह बिभीषणः ।

**मुनिः**—कथय किमेतत् ।

**करालकः**—एकदाभिप्रणमतो बिभीषणस्य करात्सकौतुकं लिखिताक्षरपङ्क्ति पत्रमेकं गृहीतं लङ्केश्वरेण वाचितं च—

---

**अथ सप्तमोऽङ्कः ।**

अत्रादौ वृत्तवर्तिष्यमाणकथांशनिदर्शनार्थं विष्कम्भकं तावद्दर्शयति । ततः प्रविशतीत्यादिना । **पुलस्त्यशिष्यः** । अपरिशीलितोऽनभ्यस्तः अपरिचित इति यावत् । सन्निवेशो वासस्थानं येन तादृशोऽस्मि । तस्य बिभीषणस्य भवनं गृहं । मातुः पिता मातामहः तस्य ( मातृपितृभ्यां पितरि डामहच्च प्रत्ययः ) महामन्त्रिणोऽमात्यवरस्य माल्यवतः तदाख्यस्य परिचारकः भृत्यः । **मुनिः** । कनिष्ठपौलस्त्यस्य बिभीषणस्य कमपि अन्यत्रानिर्वाच्यं सन्देशं वाचिकमुपनेतुं प्रापयितुं । **करालकः** । इदानीं साम्प्रतं इह लङ्कायां । **करा०** । एकदा एकस्मिन्काले ( सर्वैकान्यकिंयत्तदः काले दा प्रत्ययः ) अभिप्रणमतो नमस्कुर्वतः । लिखिताः

१. लङ्केश्वरमहामन्त्रिण इति पाठः । २. पुलस्त्येन कमपि सन्देशमुपनेतुं पौलस्त्येति पाठः ।

'उदर्कभूतिमिच्छद्भिः सद्भिः खलु न दृश्यते ।
चतुर्थीचन्द्रलेखेव परस्त्रीभालपट्टिका ॥ १ ॥'

मुनिः—अहो, प्रभुविज्ञप्तिचातुरी बिभीषणस्य ।

करालकः—ततो विहस्य लङ्केश्वरेणोक्तम्—'नूनं केनापि भीरुणा भाषितमेतत् । ख्यातं हि यत्किल

परस्त्रीकुचकुम्भेषु कुम्भेषु परदन्तिनाम् ।
निपतन्ति न भीरूणां दृष्टय· शरवृष्टयः ॥ २ ॥'

मुनिः—अहो, निजचित्तवृत्तिभित्तिभूमिकानुसारीणि वाक्चित्राणि लोकस्य ।

करालकः—ततः सप्रणयकोपविषादमिदमाह लङ्केश्वरं बिभीषणः—

---

अक्षरपङ्क्त्यो यस्मिन् तादृशं । उदर्केति । उदर्के उत्तरकाले भूतिं कल्याणं "प्रजानामेव भूत्यर्थमिति रघुवंशे कालिदास· । इच्छद्भिः सद्भि· चतुर्थ्या· शुद्धचतुर्थ्याश्चन्द्रलेखेव शशिकलेव परस्त्रीणां भालपट्टिका ललाटपीठं ( पट्टः पेषणपाषाणेत्युपक्रम्य राजशासनान्तरपीठयोरिति मेदिनी ) न दृश्यते नावलोक्यते । चतुर्थीचन्द्रकलादर्शनं यथा भविष्यत्कालेऽनिष्टजनकं भवति तथा परस्त्रीविलोकनमपि । विलोकनमप्यनिष्टं किमुत स्पर्शनचुम्बनादीति भाव: । चन्द्रकलादर्शननिषेधस्तु स्कान्दे । शुक्लपक्षे चतुर्थ्यान्तु ये पश्यन्ति सदैव हि । मिथ्यापवादमावर्षं प्राप्स्यन्तीह न संशय इति । उपमालङ्कारः । श्लोकश्छन्दः॥१॥मुनिः। प्रभोः स्वामिन· विज्ञप्तिचातुरी निवेदनकौशल्यम्। करा०। परस्त्रीति । भीरूणां कातराणां दृष्टयः शरवृष्टयश्च यथाक्रमं परस्त्रीकुचकुम्भेषु तथा परदन्तिनां द्विषद्गजानां कुम्भेषु गण्डेषु च न निपतन्ति । यथासंख्यमलङ्कारः । श्लोकश्छन्दः ॥ २ ॥ मुनिः । लोकस्य जनस्य वाचो वचनान्येव चित्राणि आलेख्यानि, निजचित्तवृत्ति· स्वकीयमनोवृत्तिरेव भित्तिभूमिका भित्तिप्रदेशः तामनुसरन्ति तच्छीलानि । स्वचित्तवृत्त्यनुसारिणो जनानामालापा इत्याशयः । करालक· । प्रणयेन प्रेम्णा कोपेन विषादेन च सहितं यथा तथा

---

१. विहस्यैकमिति पाठः । २. प्रणयेति पाठः ।

'यस्य त्र्यम्बकमौलिखेलदमलस्वर्लोककल्लोलिनी-
लीलालङ्घनलम्पटेन यशसा दिग्भित्तयः क्षालिताः ।
सोऽपि त्वं जनकाधिराजतनयाबद्धाभिलाषः कथं
हा जातोऽसि पुलस्त्यसंततियशःशीतद्युतेर्लाञ्छनम् ॥ ३ ॥'

**मुनिः**—( सकौतुकम्। ) ततस्ततः ।

**करालकः**—ततश्च ।

कोपपाटलितलोलदृष्टिना
किंचिदुन्नमितखड्गयष्टिना ।
रावणेन नयधर्मभूषण-
स्ताडितो हृदि पदा बिभीषणः ॥ ४ ॥

**मुनिः**—हन्त, नूनं
लङ्केश्वरेण दुष्टेन नयधर्मविभूषणः ।
बिभीषणः स न परं विभवोऽपि पदा हतः ॥ ५ ॥

---

अत्यन्तकीर्तिमत्त्वात् भ्रातृत्वाच्च प्रणयः, परदारलम्पटत्वेन कोपः, पौलस्त्य कुललाञ्छनत्वेन च विषाद इति भावः । इदं वक्ष्यमाणवचनं । यस्येति । यस्य त्र्यम्बकानि चक्षूंषि यस्य तस्य शङ्करस्य ( चक्षुरम्बकमिति शारदीनाममाला ) मौलौ चूडायां खेलन्त्याः चलन्त्या अमलस्वर्लोककल्लोलिन्याः निर्मलवियद्गङ्गाया यल्लीला लङ्घनं क्रीडयैवोत्क्रमणं तस्मिंल्लम्पटेन लोलुपेन यशसा कीर्त्या दिग्भित्तयः क्षालिता धौताः सोऽपि तादृशोऽपि त्वं जनकाधिराजतनयायाम् सीतायां बद्धः अभिलाषः स्पृहा येन तादृशः सन्, पुलस्त्यसन्ततेस्तदभिधानस्वपूर्वजऋषिकुलस्य यशः कीर्तिरेव शीतद्युतिश्चन्द्रस्तस्य लाञ्छनं कलङ्कः कथं जातोऽसि हा इति खेदे । रूपकवृत्त्यनुप्रासावलङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ३ ॥ करालकः । ततः बिभीषणभाषणोत्तरं । कोपेति । कोपेन क्रोधेन पाटलिता अरुणिताः लोलाश्चञ्चलाश्च दृष्टयो नयनानि यस्य तेन, किंचिदीषदुन्नमिता ऊर्ध्वं धृता खड्गयष्टिः करवालो येन, तादृशेन रावणेन, नयो नीतिर्धर्मः पुण्यं तौ भूषणे यस्य स बिभीषणः हृदि वक्षस्थले पदा चरणेन ताडितः । यमकालङ्कारः । रथोद्धता वृत्तम् ॥ ४ ॥ मुनिः । लङ्केश्वरेणेति । दुष्टेन दुरात्मना लङ्केश्वरेण रावणेन नयधर्मौ विभूषणं यस्य तादृशः सः बिभीषणो न, परं नयधर्माभ्यां विभूषयति तादृशः विभवोऽपि ऐश्वर्यमपि पदा

---

१. 'चरणपातः' ।

ततस्ततः ।

**करालकः**—ततः कतिपयपरिवारेण बिभीषणेन लङ्केश्वरं विहाय राम एव समाश्रितः ।

**मुनिः**—( स्वगतम् । ) अनुष्ठितं तर्हि पुलस्त्यसंदेशरहस्यं बिभीषणेन । ( प्रकाशम् । ) भवान्पुनः किमधुना कर्तुकामः ।

**करालकः**—अहमादिष्टोऽस्मि माल्यवता जानकीविरहविक्लवहृदयस्य लङ्केश्वरस्य मनोविनोदनाय केनापि चित्रकरेण विरचितं चित्रपटमिदं तद्गोचरीकरणीयमिति ।

**मुनिः**—( विमृश्य । ) कथमित्थमासन्नशत्रौ लङ्केश्वरे तादृशस्य महामन्त्रिणो माल्यवत एवमुपचरितुमुचितम् । तन्नूनं प्रस्तुतोचितमेव किमप्येतद्भविष्यति ।

( नेपथ्ये । )

रे रे चन्दनमिन्दुमण्डलशिलापट्टे समुद्घृष्यतां
रे रे चामरमुज्ज्वलैः शशिकरैः श्वेतं विनिर्मीयताम् ।

---

हतः । विशेषालङ्कारः । किञ्चिदारम्भतोऽशक्यवस्त्वन्तरकृतिश्च स इति लक्षणात् ॥ ५ ॥ **मुनिः** । पुलस्त्यसन्देशरहस्यं पुलस्त्याज्ञातत्वं । **करालकः** । जानकीविरहेण विक्लवं विक्लवं हृदयं यस्य, मनोविनोदनाय चित्तरञ्जनाय केनापि अज्ञातनामधेयेन तस्य रावणस्य गोचरीकरणीयं प्रत्यक्षीकरणीयं चित्रदर्शनं हि विरहिमनोविनोदनाय भवतीति प्रसिद्धम् । उक्तञ्च **गुणपताकायाम्** । वियोगावस्थासु प्रियजनसदृक्षानुभवनं ततश्चित्रं कर्म स्वपनसमये दर्शनमपि इति । **मुनिः** । आसन्नः शत्रू रामाख्यो यस्य तस्मिंल्लङ्केश्वरे, तादृशस्य महाप्रतिभावत इत्याशयः महामन्त्रिणोऽमात्यवरस्य माल्यवत एवं सीताविरहविनोदनार्थं चित्रदर्शनादिना उपचरितुमुचितमिति काकुः, न योग्यमित्यर्थः । तत्तस्मात्प्रस्तुतोचितमेव प्रकृतकार्यानुरूपमेव । चित्रपटदर्शनापदेशेन सेतुबन्धपूर्वकं रामादीनां लङ्काऽऽगमनादि प्रस्तुतमेव रावणस्य प्रकाशनीयं भवेदिति तर्कयत इत्याशयः । **रे रे इति** । रे रे परिचारका इति सम्बध्यते । इन्दुमण्डलं चन्द्रबिम्बमेव शिलापट्टः पेषणपाषाणस्तस्मिंश्चन्दनं मलयजं समुद्घृष्यतां सम्पिष्यतां रे रे उज्ज्वलैर्निर्मलैः

---

१. चित्रमिदानीमिति पाठः । २. दृग्गो इति पाठः । ३. विहस्येति पाठः ।

रे रे बालमृणालतन्तुलतिकासूत्रेण पाथोजिनी-
पत्रस्थैरुदबिन्दुभिर्मणिमयो हारः समासूत्र्यताम् ॥ ६ ॥

**मुनिः**—( सोपहासमात्मगतम् । ) यादृशोऽयं शीतोपचारस्तादृश एव सीतोपचारो लङ्केश्वरस्य भविष्यतीति । ( प्रकाशम् । ) कथमिदं विरहतप्तस्य दशकंधरस्य शीतोपचारार्थमादिश्यन्ते निशाचराः ।

**करालकः**—खेचराश्च । इदानीं हि

अङ्गं लिम्पति चन्दनेन मृदुभिः शीतद्युतिः स्वैः करैः
किंचिच्चञ्चलतालवृन्तकलनव्यग्रो वसन्तानिलः ।
किञ्चायं नलिनीदलैर्वितनुते तल्पं प्रतीचीपति-
र्देवैरित्थमनङ्गतप्तहृदयो लङ्केश्वरः सेव्यते ॥ ७ ॥

**मुनिः**—( स्वगतम् । ) अये, अलीकवाग्डम्बर निशाचरस्य ।

---

शशिकरैश्चन्द्रकिरणैः श्वेत शुभ्रं चामरं प्रकीर्णकं विनिर्मीयतां विरच्यतां । रे रे बालमृणालानां नूतनबिसानां तन्तव एव लतिकाः तासां सूत्रेण पाथोजिन्याः कमलिन्याः पत्रस्थैः पर्णस्थितैरुदबिन्दुभिर्जलकणैः ( मन्थौदनसक्तुबिन्दुवज्रेत्युदकशब्दस्योदादेशः ) मणिमयो रत्नप्रचुरो हारो मुक्तावली समासूत्र्यता ग्रथ्यताम् । कारकदीपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ६ ॥ **मुनिः** । अयं पूर्वोक्तो रे रे इत्यादिः शीतोपचारः शीतलोपचारः यादृशः असम्भाव्य इत्यर्थः । तादृश एव लङ्केश्वरस्य रावणस्य सीतोपचारः सीतानुनयप्रकारः भविष्यति । यथा चन्द्रबिम्बादौ चन्दनोद्घर्षणादिकमशक्यं तथाऽनुनयादिना सीतावशीकरणमशक्यमिति भावः । **करालकः** । खेचराः देवाः । **अङ्गमिति** । शीतद्युतिश्चन्द्रः मृदुभिः कोमलैः स्वैः स्वकीयैः करैः किरणैः चन्दनेनाङ्गं लङ्केश्वरस्येति प्रकरणाल्लभ्यते । लिम्पति । तथा वसन्तानिलः किञ्चिच्चञ्चलस्य ईषत्तरलस्य तालवृन्तस्य व्यजनस्य कलनं स्वीकारः व्यग्रो व्याकुलः । किञ्च प्रतीचीपतिः पश्चिमदिगधिपतिः, वरुण इत्यर्थः ( इन्द्रो वह्निः पितृपतिर्नैर्ऋतो वरुणो मरुत् । कुबेर ईशः पतयः पूर्वादीनां दिशां क्रमादित्यमरः ) नलिनीदलैः कमलिनीपत्रैः तल्पं शय्यां वितनुते रचयति । इत्थं पूर्वोक्तप्रकारेण देवैश्चन्द्रादिभिरनङ्गेन मदनेन तप्तं हृदयं यस्य तादृशो लङ्केश्वरो रावणः सेव्यते । अत्युक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७ ॥ **मुनिः** । अलीकवाग्डम्बरं

**करालकः**—( नेपथ्याभिमुखमवलोक्य । ) कथमयं, प्रहस्तो राजद्वारमुपसर्पति । तदस्य हस्ते चित्रपटं समर्पयामि[1]। भवानपि समीहितं साधयतु ।

( इति निष्क्रान्तौ । )

**इति विष्कम्भकः**

( ततः प्रविशति रावणश्चित्रपटहस्तः प्रहस्तश्च[2] । )

**रावणः**—( स्वगतम् । )

राजल्ललाटफलका कमनीयकूज-
त्काञ्चीगुणप्रणयिनी धृतकेशपक्षा ।
हा किं करोमि मम सा हृदयं प्रविष्टा
नाराचयष्टिरिव पुष्पशिलीमुखस्य ॥ ८ ॥

( विमृश्य । ) अहो, कथमद्यापि हृताहरणखिन्नां नितान्तकृशधूसराङ्गीमपि जानकीं जनस्थानस्थितामिवाहमखण्डमण्डनां पश्यामि। अथवोचितमिदम् ।

आचान्तकान्तिरुन्निद्रैर्मयूखैरहिमत्विषः ।
धूसरापि कला चान्द्री किं न बध्नाति लोचनम् ॥ ९ ॥

---

मिथ्यावाग्जालं । **करा०** । प्रहस्तः तन्नामा रावणमन्त्री । **विष्कम्भकः** । सङ्कीर्णविष्कम्भकोऽयम् । नीचमध्यमपात्रप्रयुक्तत्वात् । उक्तञ्च **साहित्यदर्पणे** । स तु सङ्कीर्णो नीचमध्यमकल्पित इति । **रावण०** । **राजदिति** । राजच्छोभमानं ललाटफलकं ललाटपट्टं यस्याः, अन्यत्र राजद्दीप्यमानं ललाटे ऊर्ध्वदेशे फलकं शिताग्रं यस्याः कमनीयं यथा तथा कूजन्त्याः ध्वनन्त्याः काञ्च्या गुणे सूत्रे प्रणयिनी प्रेमवती, अन्यत्र कूजद्गुणे ध्वनन्मौर्व्यां प्रणयिनी धृतः केशपक्षो केशकलापो यया, अन्यत्र धृताः पक्षाः पिच्छानि यया (पाशः पक्षश्च हस्तश्च कलापार्थाः कचात्परे इत्यमरः) तादृशी पुष्पशिलीमुखस्य मदनस्य नाराचयष्टिरिव विशिखदण्ड इव सा जानकी मम हृदयमन्तःकरणं वक्षःस्थलं च, प्रविष्टा अतः किं करोमि । हा इति खेदे । उपमालङ्कारः । वसन्ततिलका वृत्तम् ॥ ८ ॥ अखण्डमण्डनां परिपूर्णशोभां । रामसान्निध्यादिति भावः । **आचान्तेति** । अहिमत्विषः सूर्यस्य उन्निद्रैः विकसितैः मयूखैरंशुभिराचान्ता पीता कान्तिर्यस्या अत एव धूसरा ईषत्पाण्डुराचान्द्री चन्द्रसम्बन्धिनी ( तस्येदमित्यण् )

---

१. अर्पयिष्ये इति पाठः । २. चित्रहस्त इति पाठः ।

**प्रहस्तः**—अयि देव, इदमालोक्यतां चित्तविनोदनं चित्रम् ।

**रावणः**—किं पुनरिहालिखितम् ।

**प्रहस्तः**—अयं तावत्तरलतिमिनिकरकरालकल्लोलकोलाहलोज्जागरः सागरः ।

**रावणः**—( विलोक्य । ) किमिदमुत्तरेण तरङ्गमालिनमनुतमालखण्डमाखण्डलधनुःसहस्रानुकारि कपिशयति गगनतलम् ।

**प्रहस्तः**—तदिदं सुग्रीवपालितं कपिकुलम् ।

**रावणः**—( विहस्य । ) अपि वालिपालितमिति वक्तव्यम् । भवतु । किमनेन । कौ पुनरिमौ कार्मुकधरौ ।

**प्रहस्तः**—तावेतौ रामलक्ष्मणौ ययोरग्रजस्य बाणपातविलसितेन सुग्रीवपालितमधुना कपिकुलम् ।

**रावणः**—( अनाकर्णितकेन । ) कः पुनरयं नितान्तकृशकमनीयतनुरमन्दमन्दराघातनिर्मन्थनोत्थिततरलतरङ्गदूरविक्षिप्तः शंकरशिरःशेखराधिरोहणकुतूहली कलानिधिरिव तरङ्गमालिनस्तटभुवमधिशेते ।

---

कला लोचनं नयनं न निबध्नाति किं नाकर्षयति किमिति काकुः अपि तु आकर्षयत्येवेत्यर्थः । यदुपसाधनैरेव शोभते तत्साधनाभावे हीयते यत्प्रकृतिरम्यं तत्कथमपि स्वरूपगुणं न जहातीत्याशयः । अप्रस्तुतप्रशंसालङ्कारः । श्लोकश्छन्दः ॥ ९ ॥ प्रह० । तरलानां चञ्चलानां तिमीनां मीनविशेषाणां निकरेण वृन्देन करालो भयङ्करो यः कल्लोलकोलाहलः महातरङ्गसम्घोषः तेन उज्जागरः उद्बोधः क्षोभ इति यावत्, यस्य, तादृशः । रावणः । तरङ्गाणां मालाः पङ्क्तयः विद्यन्तेऽस्मिन्निति ( व्रीह्यादिभ्यश्चेतीनिः ) तं सागरं उत्तरेण सागरोत्तरभागे इत्यर्थः । ( एनबन्यतरस्यामित्येनप् । एनपा द्वितीयेति द्वितीया ) अनुतमालखण्डं तमालकदम्बसमीपे, ( अनुर्यत्समयेत्यव्ययीभावः ) आखण्डलस्येन्द्रस्य धनुःसहस्रमनुकरोति तच्छीलं सत्, अनेकवर्णयत्त्वादित्याशयः । प्रह० । ययो रामलक्ष्मणयोर्मध्ये अग्रजस्य ज्येष्ठभ्रातुः रामस्येत्यर्थः । बाणपातविलसितेन शरपातनचेष्टया । राव० । अमन्दा महान्तो मन्दराघाता यस्मिंस्तादृशं यन्निर्मन्थनं विलोडनं तेनोत्थितैरुद्गतैः तरलतरङ्गैः दूरे विक्षिप्तः शङ्करशिरःशेखरे हरमौलिशिखरे यत् अधिरोहणं आरोहणं तस्मिन् कुतूहलं विद्यते यस्य तादृशः कलानिधिरिव चन्द्र इव नितान्तमत्यन्तं कृशा तन्वी कमनीय।

---

१. किं पुनरनेनेति पाठः । २. ताविमाविति पाठः ।

**प्रहस्तः**—स एष लङ्कागमनकुतूहली निजकुलगुरुं सागरमुपचरितुं कुशशयनविन्यस्तगात्रः प्रथमो दाशरथिः ।

**रावणः**—( विहस्य । ) कथमित्थमेव जानकीलाभकौतुकः सोऽयमस्मानप्युपचरिष्यति ।

**प्रहस्तः**—इतो विलोक्यतामयं रामनाराचनिर्मुक्तबहलानलहेलातरलदीनमीननिकरपरिवारः पारावारः ।

**रावणः**—कौ पुनरिमौ ज्येष्ठतापसस्य सादरं वानरवीरैः पार्श्वपरिसरमानीयेते ।

**प्रहस्तः**—अयं तावत्सागर एव । अयमपि देवस्यैव-( इत्यर्धोक्ते । ) अथवा किमस्य बन्धुविरोधिनो नामग्रहणेन ।

**रावणः**—कथमयं बिभीषणोऽस्मद्विरोधेन राममाश्रयति । भवतु ।

निशाचरशिरोरत्नरञ्जिताङ्घ्रिसरोरुहः ।
प्रियोऽपि दशकण्ठस्य नैष दर्शनमेष्यति ॥ १० ॥

---

च तनुर्यस्य तादृशोऽयं तरङ्गमालिनः सागरस्य तटभुवं तीरदेशं अधिशेते ( अधिशीङ्स्थासामिति कर्मत्वम् ) । **प्रह०** । स एषः अतिप्रसिद्ध इत्यर्थः । लङ्कागमने कुतूहलं विद्यते यस्य तादृशः, उपचरितुं सेवितुं कुशशयने दर्भास्तरणे विन्यस्तं गात्रं वपुर्येन तादृशः प्रथमो दाशरथिः ज्येष्ठो दशरथात्मजः । **राव०** । इत्थमेव सागरोपचारप्रकारेणैव जानकीलाभे कौतुकं यस्य तादृशः अस्मानपि उपचरिष्यत्याराधयिष्यति । **प्रह०** । रामस्य नाराचेभ्यः बाणेभ्यो निर्मुक्तस्य विसृष्टस्य बहलानलस्य प्रचुराग्नेर्हेलया विलासेन तरलश्चञ्चलो दीनः कृपणश्च मीननिकरः झषचयः परिवारः परिच्छदो यस्य तादृशः । **राव०** । ज्येष्ठतापसस्य रामस्येत्यर्थः । **प्रहस्तः** । विरोधिनः द्वेषिणः । **रावणः** । बिभीषणः तन्नामा मदनुजः । **निशाचरेति** । निशाचराणां शिरोरत्नैर्मस्तकमणिभी रञ्जितेऽङ्घ्रिसरोरुहे चरणकमले यस्य तस्य दशकण्ठस्य ममेत्यर्थः । प्रियोऽपि भ्रातृत्वेनेति भावः । एष बिभीषणः दर्शनं नेष्यति न यास्यति । दर्शनमपि तस्य दुर्लभं किमितरद्भाषणादिकमित्याशयः । अनु-

---

१. एवेति पाठः । २. चिर इति पाठः ।

प्रहस्तः— सत्यमेतत्।

रावणः—( सकौतुकम्।) किं पुनरिदमक्षरपङ्क्तिद्वयम्।

प्रहस्तः—नूनमिदं समुद्रविभीषणौ प्रति लक्ष्मणस्य वचनद्वयं भविष्यति।

रावणः—एकं तावद्वाचय।

प्रहस्तः—( वाचयति।)

'त्रासं मुञ्च समुद्र, कोपदहनो रामस्य पास्यत्ययं
बन्दीभूतसुरेन्द्रसुन्दरदृशामक्ष्णोरमुद्रं पयः।
कामं ते मकरीगणो विहरतामेतस्य लङ्केश्वर-
स्त्रीगण्डस्थलपत्रभङ्गमकरीविध्वंसिनः सायकाः॥ ११॥'

रावणः—अन्यदपि वाचय।

प्रहस्तः—( वाचयति।)

'अद्यैवास्य बिभीषणस्य शरणापन्नस्य मूर्द्धानते-
रानृण्याय ददात्ययं रघुपतिर्लङ्काधिपत्यश्रियम्।

---

प्रासालङ्कारः। श्लोकश्छन्दः॥ १०॥ त्रासं मुञ्चेति। हे समुद्र अयं रामस्य कोपदहनो रोषाग्निः बन्दीभूतानां कारानिरुद्धानां सुरेन्द्रसुन्दरदृशां देवेन्द्रस्त्रीणां अक्ष्णोश्चक्षुषोरमुद्रमपरिमितं पय उदकं पास्यति। न तवेति भावः। अतः त्रासमुद्वेगं मुञ्च। तथा एतस्य रामस्य सायका बाणाः लङ्केश्वरस्त्रीणां रावणकामिनीनां गण्डस्थलेषु कपोलेषु पत्रभङ्गमकरीणां पत्ररचनागतमकरीणां विध्वंसिन उच्छेदकाः अतः ते मकरीगणः तदाख्यजलजन्तुचयः कामं यथेच्छं विहरतां क्रीडताम्। काव्यलिङ्गमलङ्कारः। शार्दूलविक्रीडितं वृत्तम्॥ ११॥ अद्यैवेति। अयं रघुपती रामः शरणापन्नस्य शरणागतस्य बिभीषणस्य मूर्ध्नां मस्तकेनानतेर्नमनस्य आनृण्याय ऋणमोचनत्वाय लङ्कायास्तन्नामकरावणराजधान्या आधिपत्यश्रियं प्रभुत्वसम्पदं अद्यैव ददाति अर्पयति। इह अस्मिन् बिभीषण-

---

१. मूर्ध्ना इति पाठः। २. आनृण्यं विदधात्ययमिति पाठः।

एतस्यैव भुजाविह प्रतिभुवौ सुग्रीवराज्यार्पण-
त्रैलोक्यप्रथमानसत्यचरितौ सर्वे वयं साक्षिणः ॥ १२ ॥

**रावणः**—अहो, वाग्डम्बरैकसारता कनिष्ठतापसस्य । भवतु । किं पुनरिदं मध्येसमुद्रमालोक्यते ।

**प्रहस्तः**—स एष कपिकुलोन्मूलितशैलशिखरनिर्मितः काकुत्स्थ-कुलकीर्तिप्रशस्तिप्रबन्धः सेतुबन्धः ।

**रावणः**—अहो चित्रकरस्य चातुरी । यदलीकमपि सत्यमिव दर्शितवान् ।

**प्रहस्तः**—कथमद्यापीदमलीकमिति संभावना देवस्य ।

( नेपथ्ये कलकलः । )

**रावणः**—किमेतत् ।

---

राज्यप्रदाने एतस्यैव रामस्यैव, सुग्रीवस्य तन्नामककपेः राज्यार्पणेन बलिष्ठमपि वालिनं हत्वा कपिराज्यदानेन त्रैलोक्ये लोकत्रये ( चतुर्वर्णादित्वात्स्वार्थे ष्यञ् ) प्रथमानं प्रसिद्धं सत्यचरितं ययोः तादृशौ भुजौ प्रतिभुवौ लग्नकौ ( स्युर्लग्नकाः प्रतिभुव इत्यमरः ) अधमर्णे द्रव्यदानासमर्थे सति तद्द्रव्यमहं ददामीति य प्रतिनिधिर्भवति स प्रतिभूरित्युच्यते । स यथा अधमर्णद्रव्यदानभारं स्वशिरसि वहति तथा बिभीषणलङ्काधिपत्यार्पणविषये रामबाहू प्रतिभूस्थानापन्नावित्याशयः । वय सर्वे लक्ष्मणसुग्रीवादयः साक्षिणः साक्षाद्द्रष्टारः ( साक्षाद्द्रष्टरीतीनिः ) परिवृत्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ १२ ॥ **रावणः** । कनिष्ठतापसस्य लक्ष्मणस्येत्यर्थः । वाग्डम्बरः वचनाटोप एक एव सारो बलं यस्य तस्य भावस्तत्ता । मुखरतामात्रमित्यर्थः । मध्ये समुद्रं समुद्रमध्ये ( पारेमध्ये षष्ठ्या वेति अव्ययीभावः) । **प्रह०** । कपिकुलैर्वानरगणैः ( कुलं जनपदे गोत्रे सजातीयगणेष्वपीति मेदिनी) उन्मूलितैरुत्पाटितैः शैलशिखरैः गिरिशृङ्गैः निर्मितो विरचितः काकुत्स्थकुलस्य काकुत्स्थसन्तते रामस्येत्यर्थः। कीर्तिप्रशस्तेः यशःप्रशंसायाः प्रबन्धः निबन्धः। सूचक इति भावः। सेतुबन्धः

---

१. काकु इति पाठः । २. प्रसक्तीति पाठः ।

**प्रहस्तः**—

एषामयं रामचमूचराणां
दर्पोद्धतानां कपिकुञ्जराणाम् ।
नवोद्गतानामिव नीरदानां
कोलाहलः कोऽपि समुज्जिहीते ॥ १३ ॥

**रावणः**—तदिह शङ्कितव्यं प्रतिविधातव्यं च

**रावणः**—आः । किमिह शङ्कया प्रतिविधानेन वा । अनेन हि ।

कोलाहलेनोल्लसता कपीनां
मनो मदीयं मुदमेव धत्ते ।
मन्दोदरीनूपुरभूषणानां
महामणीनामिव शिञ्जितेन ॥ १४ ॥

(प्रविश्य ।)

**मन्दोदरी**—जेदु जेदु देवो ।

**रावणः**—देवि, इत आस्यताम् ।

( मन्दोदरी यथोचितमुपविश्याधोमुखी तिष्ठति ।)

---

१. जयतु जयतु देवः ।

---

सेतुरचना । **प्रहस्तः । एषामिति** । नवोद्गतानां नूतनोदितानां नीरदानां मेघानामिव रामचमूचराणां दर्पोद्धतानां मदोन्मत्तानां एषां कपिकुञ्जराणां वानरश्रेष्ठानां (स्युरुत्तरपदे व्याघ्रपुङ्गवर्षभकुञ्जराः । सिंहशार्दूलनागाद्याः पुंसि श्रेष्ठार्थगोचराः इत्यमरः ) कोऽप्यनिर्वचनीयः कोलाहलः समुज्जिहीते विजृम्भते । उपमालङ्कारः । उपजातिवृत्तम् ॥ १३ ॥ तत् इद पूर्वोक्तं । अस्मिन्विषये लक्ष्मणवचनसेतुबन्धकपिकोलाहलादौ शङ्कितव्यम प्रतिविधातव्यं च निराकरणीय च । रावण । **कोलाहलेनेति** । महान्तो मणयो रत्नानि येषां तेषां मन्दोदर्या मत्पत्न्या नूपुराणि च भूषणानि च तेषां शिञ्जितेनेव ध्वनिनेव कपीनां प्लवगानामुल्लसता प्रसरता कोलाहलेन कलकलेन मदीयं मनो मुदमेव हर्षमेव धत्ते । अनेन मन्दोदरीप्रवेशः सूचितः । नासूचितस्येत्युक्तत्वात् । उपमालङ्कारः । उपजाति वृत्तम् १४

---

१. इदमिति पा० । २. वेति पा० । ३. भूषणनूपुराणामिति पा० ।

**रावणः**—

भुग्नालकं स्मितपराजितचन्द्रलेखं
दृग्लीलया कुवलयश्रियमादधानम् ।
एतन्मुखं दिविषदामपि[1] दुर्निरीक्ष्यं
तन्वङ्गि मामिव मुधा किमधः करोषि ॥ १५ ॥

**प्रहस्त**—देव, कपिसेनाकोलाहलचिन्तयैव नूनमधरीकृतमुखी देवीति तर्कयामि ।

**रावणः**—आः, क एष चिन्ताविषयः ।

इयं लीलालोलाङ्गदभुजलता नीलचिकुरा
समुन्मीलत्तारा कुमुदहसिता चारुनयना ।

---

**रावणः** । **भुग्नालकमिति** । तन्वङ्गि मन्दोदरि मामिव भुग्ना अव्यवस्थां प्रापिता अलका कुबेरपुरी येन, मुखपक्षे भुग्नाः कुटिला अलकाश्चूर्णकुन्तला यस्मिन्, स्मितेन ईषद्धास्येन जिता पराजिताः चन्द्रः सुधांशुर्लेखा देवाश्च येन तं । पक्षे स्मितेन पराजिता चन्द्रलेखेन्दुकला येन तत्, दृग्लीलया दृग्व्यापारेण कुवलयस्य भूमण्डलस्य श्रियं सम्पत्तिं आदधानं गृह्णन्तं पक्षे दृग्लीलया लोचनविलासेन कुवलयश्रियमुत्पलशोभामादधानं बिभ्रत्, दिविषदामपि देवानामपि दुर्निरीक्ष्यं दुष्प्रेक्ष्यम् एतन्मुखं वदनं मुधा वृथा किमधः करोषि । अधःकरणे किं प्रयोजनमित्यर्थः । श्लेषोपमे अलङ्कारौ । वसन्ततिलका वृत्तम् ॥ १५ ॥ **रावणः** । चिन्ताविषयः कः न कोपीत्यर्थः । **इयमिति** । लीलया विलासेन लोले चञ्चले अङ्गदे केयूरे ययोस्तादृशे भुजलते यस्याः, सेनापक्षे लीलया लोले अङ्गदस्य तन्नामककपेर्भुजलते यस्यां, नीलाश्चिकुराः कुन्तला यस्याः, पक्षे नीलस्तदाख्यः कपिः चिकुरः चञ्चलः यस्यां, समुन्मीलन्ती विकसन्ती तारा कनीनिका यस्याः, पक्षे तारा सुग्रीवपत्नी यस्यां, अथवा समुन्मीलंस्तारस्तन्नामा कपिर्यस्यां, कुमुदमिव हसितं हास्यं यस्याः, हासस्य शुभ्रत्वं कविसङ्केतात्, पक्षे कुमुदस्य तन्नामककपेर्हसितं यस्यां, चारुणी रम्ये नयने लोचने यस्याः, अन्यत्र चारुर्नयनो वाहिनीचालको यस्याः, तारापतिश्चन्द्र इव मुखं यस्याः, पक्षे तारापतिः सुग्रीवः मुखेऽग्र-

---

१. मिषेति पाठः ।

प्लवङ्गानां सेना युवतिरिव तारापतिमुखी
ममाग्रे कन्दर्पं प्रकटयितुमद्य प्रभवति ॥ १६ ॥

मन्दोदरी—देव, अण्णं पि अत्थि कारणं। अज्ज हि मए देवस्स सउणणिरूवणत्थं गिरिसिहरगहणगब्भट्ठिदा सबरपल्ली पट्ठाविदा णिअपरिआरिआ। ताए अ कीए वि सबरकुडुम्बिणीए णिअघरपेरन्तवासिणं केसरिकिसोरअं उल्लावअन्तीए एरिसं वअणं आअण्णिदम्—

'मा होहि णाअवइणो परिहवमेत्तेण गव्वणिव्वूढो।
वसुहमिमं गिरिसङ्कडमइन्द सरहस्स णन्दणो पत्तो ॥ १७ ॥

---

१. देव, अन्यदप्यस्ति कारणम्। अद्य हि मया देवस्य शकुननिरूपणार्थं गिरिशिखरगहनगर्भस्थिता शबरपल्लीं प्रस्थापिता निजपरिचारिका। तया च कस्या अपि शबरकुटुम्बिन्या निजगृहपर्यन्तवासिनं केसरिकिशोरकं लालयन्त्या ईदृशं वचनमाकर्णितम्—

२. मा भव नागपतेः परिभवमात्रेण गर्वनिर्व्यूढः।
वसुधामिमां गिरिसंकटमृगेन्द्र शरभस्य नन्दनः प्राप्तः ॥

---

भागे यस्याः, तादृशी युवतिरिव तरुणीव, प्लवङ्गानां वानराणां सेना अद्य ममाग्रे मत्पुरतः कन्दर्पं मन्मथं, पक्षे कं कीदृशं दर्पमवलेपं प्रकटयितुं प्रादुर्भावयितुं प्रभवति समर्था भवति। उपमाश्लेषावलङ्कारौ। शिखरिणी वृत्तम् ॥ १६॥

मन्दोदरी। शकुननिरूपणार्थं उपश्रुतिश्रवणार्थं इति भावः। गिरिशिखरगहनस्य अद्रिशृङ्गस्थकान्तारस्य गर्भेऽन्तरे स्थितां शबराणां व्याधविशेषाणां पल्लीं पक्कणं प्रति परिचारिकां दासीं। निजगृहपर्यन्तवासिनं स्वगृहोपान्तचरं केसरिकिशोरकं मृगेन्द्रबालं लालयन्त्याः शबरस्य कुटुम्बिन्याः स्त्रियाः, ईदृशं वक्ष्यमाणं वचनं भाषणमाकर्णितं श्रुतम्। मा होहीति। हे गिरिसङ्कटमृगेन्द्र अद्रिदुर्गमप्रदेशस्थसिंह नागपतेः करीन्द्रस्य परिभवमात्रेण पराजयेनैव गर्वनिर्व्यूढः दर्पोद्धतः मा भव। तत्र कारणं दर्शयति इमां वसुधां भूमिं शरभस्य तदाख्यसिंहघातिनोष्टापदमृगविशेषस्य नन्दनः किशोरकः प्राप्तः। अनयोपश्रुत्या तव किमपि भाव्यनिष्टं सूच्यत इति भावः।

**रावणः**—किमिह विषादस्थानमस्मान्प्रत्युदासीनमेवैतत् ।

**प्रहस्तः**—देव, अन्यथाऽपि घटमानमिदम् ।

मा भव नाकपतेः परिभवमात्रेण गर्वनिर्व्यूढः ।

वसुधामिमां गिरिसंकटमयीं दशरथस्य नन्दनः प्राप्तः ॥ १८ ॥

**रावणः**—आः, केयं निसर्गनिःशङ्के लङ्केश्वरे मयि शकुनोपश्रुतिपरीक्षा ।

( नेपथ्ये । )

हेलास्फालितरामलक्ष्मणधनुर्ज्यावल्लरीझल्लरी-
झाङ्कारप्रसरप्ररूढपुलकप्राग्भारनीरन्ध्रिताः ।
व्यावल्गत्कपिकण्ठकाण्डकदनक्रीडत्कृपाणाञ्चल-
स्फूर्जद्दुर्जयदोर्बलैकचपलाश्चञ्चन्ति रात्रिंचरा ॥ १९ ॥

---

आर्या वृत्तम् ॥ १७ ॥ **रावणः** । विषादस्थानं दुःखास्पदं इह वचने किं, न किमपीत्यर्थः । एतत् शबरकुटुम्बिनीवचनमस्मान्प्रत्युदासीनमेव । तया सिंहकिशोरकं प्रत्युक्तेरिति भावः ॥ **प्रहस्तः** । अन्यथापि घटमानमिदं इतरथाप्यस्यार्थ उपपद्यते इति भावः। तथाहि । **मा भवेति** । णाअवइणो इतिप्राकृतपदस्य नाकपतेरिति । गिरिसंकडमइन्दसरहस्स इत्यस्य गिरिसंकटमयीं दशरथस्य इत्यपि संस्कृतं भवितुमर्हति । तथा च । नाकपतेः स्वर्गाधिपस्येन्द्रस्येत्यर्थः । दशरथस्य नन्दनः रामः। गिरिभिः सकटमयीं क्लेशबहुलां दुरभिगमामित्यर्थः।शेषं पूर्ववत् । तेन नोदासीनं किन्तु भवन्तं लक्ष्यीकरोत्येवेति भावः।**रावणः**। शकुनरूपाया उपश्रुतेः दैवप्रश्नस्य परीक्षा केयं यस्य जयाजयविषये संशयस्तस्यैव शकुनादिना ज्ञानं मम तु निश्चितजयज्ञस्य न किमपीत्याशयः ॥१८॥ **नेपथ्ये** । **हेलेति** । हेलया क्रिडया आस्फालिते ताडिते ये रामलक्ष्मणयोर्धनुर्ज्ये कार्मुकगुणावेव वल्लर्यौ लते ते एव झल्लर्यौ वाद्यविशेषौ तयोर्झांकारस्य नादस्य प्रसरेण प्रसर्पणेन प्ररूढानां प्रादुर्भूतानां पुलकानां रोमाञ्चानां प्राग्भारेण समूहेन नीरन्ध्रिताः निरन्तरीकृताः व्यावल्गतामितस्ततः परिभ्रमतां कपीनां प्लवगानां कण्ठकाण्डानां गलनालानां कदनाय मर्दनाय क्रीडतां कृपाणानां अञ्चलेनाग्रेण स्फूर्जतोः स्फुरतोर्दुर्जयदोष्णोः दुःसहबाह्वोर्बलैकेन पराक्रममात्रेण चपला रात्रिंचरा राक्षसाश्च चञ्चन्ति वेगेनेतस्ततः सञ्चरन्तीत्यर्थः । छेकवृत्त्यनुप्रासावलङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ १९ ॥

---

१. एतदग्रे तथाहि मा भवः प्राप्तः इत्यन्तोऽधिकः पाठः। २. नाकपतेरिति पा०

**रावणः**—( सहर्षम्। ) अये, निशाचरवीरविजयोत्तरः समरः।

( पुनर्नेपथ्ये। )

अग्रेसरी रघुपतेः परिणद्धपाक-
किंपाकपाटलमुखी कपिवीरसेना।
निःशेषमापिबति राक्षसवीरचक्रं
प्रातःप्रभेव तपनस्य तमिस्रजालम् ॥ २० ॥

**रावणः**—आः, कथमुत्कटायितं[1] मर्कटैः। ( उच्चैः। ) कः कोऽत्र भोः। मदाज्ञया

कृत्वा विनिद्रमधुना[2]तिभुजावलेपः
प्रोद्दामरामसमराय स कुम्भकर्णः।
आदिश्यतां निजभुजार्दितवज्रपाणि-
रद्यैव लक्ष्मणरणाय च मेघनादः ॥ २१ ॥

---

**रावणः**। निशाचरवीराणां राक्षसभटानां विजये उत्तरः प्रकृष्टो यस्मिन्। **अग्रेसरीति**। तपनस्य रवेः प्रातःप्रभा प्रभातकान्तिः तमिस्रजालमिव तिमिरौघमिव रघुपते रामस्याग्रेसरी पुरोगा ( पुरोऽग्रतोऽग्रेषु सर्तेरिति टः ) परिणद्धपाकं परिबद्धपाकं सञ्जातपाकमिति यावत्। किम्पाकं किम्पाकनामकवृक्षविशेषस्य फलं तद्विव पाटलमरुणं मुखं यस्यास्तादृशी, कपिवीराणां सेना चमूर्निःशेषमखिलं राक्षसवीराणां चक्रमनीकं आपिबति। उपमाछेकवृत्त्यनुप्रासालङ्काराः ॥ २० ॥ **रावणः**। उत्कटायितं प्रकर्षायितम्। **कृत्वेति**। अधुना अतिशयः भुजस्यावलेपो मदो यस्य स तथोक्तः, स कुम्भकर्णस्तदाख्यो मे भ्राता विनिद्रं प्रबुद्धं कृत्वा प्रोद्दामरामसमराय तमुत्कटरामयुद्धाय आदिश्यताम् नियुज्यताम्। अद्यैवाग्मिनद्ह्येव निजभुजाभ्यामर्दितः पीडितो वज्रपाणिः कुलिशहस्त इन्द्रो येन तादृशः ( प्रहरणार्थेभ्यो परे निष्ठासप्तम्याविति पाणिशब्दस्य पूर्वनिपातः ) मेघनादश्चेन्द्रजिच्च लक्ष्मणरणाय लक्ष्मणेन सह सङ्ग्रामाय आदिश्यताम्। परिकरतुल्ययोगिताछेक-

---

१. उत्कण्ठायितमिति पा०। २. मधुनिद्रे इति पा०। ३. भुजार्जितेति पा०।

( पुनर्नेपथ्ये । )

देव, भवदाशयविदा महामन्त्रिणा माल्यवता पूर्वमेव संविहितमिदम् । इदानीं हि

रामेण सार्धमयमुद्धतबाहुदर्पः
संग्रामभूमिमधितिष्ठति कुम्भकर्णः ।
रक्षःशिखण्डिहृदयोत्सवमेघनादः
सौमित्रिणा सममसावपि मेघनादः ॥ २२ ॥

( पुनर्नेपथ्ये । )

यद्दंष्ट्रावज्रघातैः समिति विदलिताः शैलकल्पाः कपीन्द्राः
यन्नाराचाम्बुवर्षैर्दवदहनसमाः शामिता वानरेन्द्राः ।
वीरोऽसौ कुम्भकर्णः स च समरकलाकौतुकी मेघनादः
सञ्जातौ

**रावणः**—किमतः परं वदिष्यति ।

( पुनर्नेपथ्ये । )

हा पतङ्गौ दशरथसुतयोर्दारुणे बाणवह्नौ ॥ २३ ॥

( मन्दोदरीरावणौ मूर्च्छतः । )

**प्रहस्तः**—देव, समाश्वसिहि समाश्वसिहि ।

---

वृत्त्यनुप्रासालङ्कारः । वसन्ततिलका वृत्तम् ॥ २१ ॥ पूर्वमेव त्वदाज्ञायाः पूर्वमेव इदं त्वदुक्तं संविहितं कृतम् । **रामेणेति** । उद्धत उत्कटो बाहुदर्पो भुजमदो यस्य स तथोक्तः कुम्भकर्णः, रामेण सार्धम् सङ्ग्रामभूमिं रणप्रदेशमधितिष्ठति संग्रामे वर्तत इत्याशयः ( अधिशीङ्स्थासामिति कर्मत्वम् ) रक्षांसि निशाचरा एव शिखण्डिनो मयूरास्तेषां हृदयोत्सवे चित्तानन्ददाने मेघनाद इव घनगर्जितमिवासौ मेघनादोऽपि इन्द्रजिदपि सौमित्रिणा समं लक्ष्मणेन सह सङ्ग्रामभूमिमधितिष्ठतीति सम्बध्यते।तुल्ययोगितालङ्कारः।वसन्ततिलका वृत्तम् २२ **पुनर्नेपथ्ये । यद्दंष्ट्रेति** । यस्य कुम्भकर्णस्य दंष्ट्रा एव वज्राणि तेषां घातैः प्रहारैः शैलकल्पाः पर्वततुल्याः ( ईषदसमाप्ताविति कल्पप् ) कपीन्द्रा वानरवराः समिति रणे विदलिताः नाशिताः, यस्येन्द्रजितो नाराचा एवाम्बूनि तेषां वर्षवृष्टिभिर्दवदहनेन दावानलेन समा वानरेन्द्राः शामिता निर्वापिताः, असौ वीरः कुम्भकर्णः, समरकलायां कौतुकी कुतूहली स मेघनादः इन्द्रजिच्च सञ्जातौ । हेति खेदे । दशरथसुतयो रामलक्ष्मणयोर्यथाक्रमं दारुणे घोरे बाणवह्नौ शरानले पतङ्गौ शलभौ सञ्जाताविति पूर्वपठितपदेन सम्बन्धः । यथासंख्यरूपकविषा-

**रावणः**—( समाश्वस्य । ) देवि, समाश्वसिहि समाश्वसिहि ।

**मन्दोदरी**—( समाश्वस्य । ) परित्ताअदु मं अज्जउत्तो । एसा णिमग्गम्हि सोअतिमिरे ।

**रावणः**—अयि, अलं कातरतया । अयं चन्द्रहासचन्द्र एव शोकतिमिरादुद्धरिष्यति भवतीम् । ( उत्थाय । खड्गमुद्यम्य । ) पश्यायमसौ मे

भिन्नप्रभिन्नसुरकुञ्जरकुम्भमुक्त-
मुक्ताफलप्रकरकैः कलिताधिवासः ।
अद्यैव खेचरनिशाचरलोचनाना-
मुन्मीलयन्मुदमुदञ्चति चन्द्रहासः ॥ २४ ॥

इति प्रहस्तेन सह निष्क्रान्तः । )

**मन्दोदरी**—अये, अच्चरिअं । समरसंरम्भविलोअणविम्हअत्थिमिदमिदं विज्जाहरमिहुणं किंपि मन्तेदि । तेण हि अज्जउत्तस्स विजअत्थं अहं पि णिअकुलदेवदाओ अच्चिदुं गच्छह्मि । ( इति निष्क्रान्ता । )

१. परित्रायतां मामार्यपुत्रः । एषा निमग्नास्मि शोकतिमिरे ।

२. अये, आश्चर्यम् । समरसंरम्भविलोकनविस्मयस्तिमितमिदं विद्याधरमिथुनं किमपि मन्त्रयति । तेन ह्यार्यपुत्रस्य विजयार्थमहमपि निजकुलदेवता अर्चितुं गच्छामि ।

दनालङ्काराः । इष्यमाणविरुद्धार्थसंप्राप्तिस्तु विषादनमिति लक्षणात् । स्रग्धरा वृत्तम् ॥२३॥ **रावणः** । चन्द्रहासस्तदाख्यमत्खड्ग एव चन्द्रः । **भिन्नेति** । भिन्नेभ्यो दारितेभ्य· प्रभिन्नानां मत्तानां ( प्रभिन्नो गर्जितो मत्त इत्यमरः ) सुरकुञ्जराणामैरावतादिदेवदन्तिनाम् कुम्भेभ्य गण्डेभ्यो मुक्तैर्निर्गतै मुक्ताफलप्रकरकैः मुक्ताचयैः कलितोऽङ्गीकृतोऽधिवासो वसतिर्यस्मिंस्तादृशश्चन्द्रहासः खड्गोऽद्यैव खेचरा देवा निशाचरा राक्षसास्तेषां लोचनानां नयनानां मुदम् उन्मीलयन् विकासयन् सन् उदञ्चति उदेति । अतिशयोक्तिच्छेकवृत्त्यनुप्रासालङ्काराः। वसन्ततिलका वृत्तम् ॥ २४ ॥ **मन्दोदरी** समरसंरम्भस्य रणाटोपस्य विलोकनविस्मयेन प्रेक्षणाश्चर्येण स्तिमितं निश्चलं ( स्तिमितोऽचञ्चलार्द्रयोरिति मेदिनी ) इदं विद्याधरी च विद्याधरश्च विद्याधरौ ( पुमान् स्त्रियेत्येकशेषः ) तयोर्मिथुनं द्वन्द्वं किमपि मन्त्रयति अन्योन्यं परिभाषते । अनेन

१. कुम्भमुक्तमुक्ताफलैर्विचकितैरिति पा० ।

( ततः प्रविशति विद्याधरमिथुनम् । )

**विद्याधरः**—प्रिये पश्येदम्

रणे मुक्तप्राणा रजनिचरवीरा दिनमणिं
विशन्तः शोभन्ते कमलमिव सायं मधुलिहः ।
अथामीभिर्भिन्नं गगननवकुञ्जोदरदरी-
मधुच्छत्रच्छायामनुभवति बिम्बं दिनकृतः ॥ २५ ॥

**विद्याधरी**—अज्जउत्त, को इमो रणरहसविअसन्तपुलअभर-कुड्डमलिद्भुअवणो कविचमूचक्कं अहिवट्टदि[1] ।

**विद्याधरः**—प्रिये, स एष रामसमरकौतुकी दशकण्ठः ।

**विद्याधरी**—को[2] उण इमो अञ्जणपुञ्जच्छविसरीरो कविवीरो-त्तस्स संमुहं परावट्टदि ।

---

१. आर्यपुत्र, कोऽयं रणरभसविलसत्पुलकभरकुड्मलितभुजवनः कपिच-मूचक्रमभिवर्तते ।

२. कः पुनरयमञ्जनपुञ्जच्छविशरीरः कपिवीरस्तस्य संमुखं परावर्तते ।

---

विद्याधरमिथुनप्रवेशः सूचितः। **विद्याधरः। रणे मुक्तेति** । रणे युद्धे मुक्तप्राणाः त्यक्तासवः अत एव दिनमणिं सूर्यं विशन्तः प्रविशन्तः "रणे सम्मुखहतस्य सूर्य-मण्डलभेदनद्वारा स्वर्गप्राप्तेरुक्तत्वात्" तथा हि, द्वाविमौ पुरुषौ लोके सूर्यमण्डल-भेदिनौ । परिव्राड्योगयुक्तश्च रणे चाऽभिमुखो हत इति । अमी रजनिचर-वीराः राक्षसभटाः सायं संध्याकाले कमलं विशन्तो मधुलिह इव भ्रमरा इव शोभन्ते । अथ सूर्यबिम्बप्रवेशानन्तरं अमीभी राक्षसवीरैः भिन्नं विदीर्णं दिनकृतः सूर्यस्य बिम्बं मण्डलं गगनमेव नवकुञ्जः नूतननिकुञ्जः तस्यो-दरदर्यां मध्यकन्दरायां यन्मधुच्छत्रं मधुकोशस्तस्य छायां कान्तिमनुभवति बिभर्ति । समरहतासंख्यरक्षोवीरकृतभेदजनितानेकविवरमयं रविमण्डलं संख्यातिगसरघाविरचितप्रचुरच्छिद्रयुतमधुकोश इव राजते स्मेति भावः । रूपकमलङ्कारः । शिखरिणी वृत्तम् ॥ २५ ॥ **विद्याधरी** । रणरभसेन संग्रा-महर्षेण विलसतां प्रसरतां पुलकभरेण रोमाञ्चनिवहेन कुड्मलितं सञ्जात-मुकुलं भुजवनं बाहुकाननं यस्य तादृशः सन्, कपिचमूचक्रं वानरसेनागणं ( चक्रं प्रहरणे गण इति हैमः ) । **विद्याधरः** । रामेण सह समरे कौतुकी । **विद्याधरी** । अञ्जनपुञ्जस्य कज्जलचयस्य छविरिव छविः कान्तिर्यस्य तादृशं

**विद्याधरः**—प्रिये, स एष विचित्रसमरशीलो नीलः । ( विलोक्य । सविस्मयम् । ) अहो,

वक्षस्थले झटिति नीलकरोज्झितेन
नीलाचलस्य शिखरेण कृतप्रहारः ।
लङ्केश्वरः स्मरति नूनमसौ वतंसे-
नीलोत्पलप्रहरणं हरिणेक्षणानाम् ॥ २६ ॥

( पुनः सकौतुकम् । ) पश्य पश्य ।

नीलोऽयं दशमुखपाणिपङ्कजाना-
मङ्केषु भ्रमरतुलां भ्रमन्बिभर्ति ।
अप्येको दशसु किरीटपीठिकासु
द्राक्पेङ्खन्ननुभवतीन्द्रनीललीलाम् ॥ २७ ॥

**विद्याधरी**—को उण इमो णिसाअरेन्देण समं समरसाहसमङ्गीकरिअ चिट्ठदि ।

**विद्याधरः**—स एष स्वामिपक्षपाती बिभीषणः । ( सविषादम् । ) हन्त भोः,

---

१. कः पुनरयं निशाचरेन्द्रेण समं समरसाहसमङ्गीकृत्य तिष्ठति ।

---

शरीरं यस्य सः । **विद्याधरः** । विचित्रं समरे संग्रामे शीलं स्वभावो यस्य तादृशो नीलस्तदाख्यकपिः । **वक्षस्थल इति** । नीलकराभ्यां तदाख्यकपिहस्ताभ्यामुज्झितेनोत्सृष्टेन नीलाचलस्य नीलाख्याद्रेः शिखरेण शृङ्गेण वक्षस्थले किमप्यनिर्वचनीयं कृतः प्रहारस्ताडनं यस्य तादृशोऽसौ लङ्केश्वरो हरिणेक्षणानां कुरङ्गाक्षीणां वतंसस्य अवतंसरूपस्य वष्टिभागुरिरित्यल्लोपः । नीलोत्पलस्येन्दीवरस्य प्रहरणं ताडनं नूनं निश्चयेन स्मरति । गिरिशिखरताडनमपि कुसुमप्रहारतुल्यं कलयतीत्याशय । स्मृत्यलङ्कारः । वसन्ततिलका वृत्तम् ॥ २६ ॥ **नीलोऽयमिति** । अयं नीलो दशमुखस्य रावणस्य पाणिपङ्कजानां हस्तकमलानामङ्केषु क्रोडेषु तलेष्विति यावत् । भ्रमन् सन् भ्रमरतुलां भृङ्गोपमां बिभर्ति धरति । एकोपि दशसु तत्परिमितासु किरीटान्येव पीठिका आसनानि तासु द्राक् शीघ्रं पेङ्खन् चरन् सन् इन्द्रनीलस्य तदाख्यरत्नस्य लीलां शोभामनुभवति । निदर्शनाकाव्यलिङ्गालङ्कारौ । प्रहर्षिणी वृत्तम् ॥ २७ ॥ **विद्याधरः** । स्वामिनो रामस्य पक्षपाती बिभीषणो रावणानुजः ।

---

१. किमपीति पा० । २. वसन्तेति पा० ।

येयं बिभीषणे शक्तिर्मुक्ता क्रूरेण रक्षसा ।

**विद्याधरी**—अह किं ताए ।

**विद्याधरः**—

लक्ष्मणेन गृहीतेयं प्रियेव निजवक्षसा ॥ २८ ॥

**विद्याधरी**—हद्धि हद्धि ।

**विद्याधरः**—

वर्षन्नेष समन्ततो दशमुख चापच्युतैः सायकैः
सौमित्रिं च विसंज्ञमङ्कनिहितं नेत्रच्युतैरम्बुभिः ।
एतत्तकर्य हर्षशोकतरला कुर्वन्कपीनां दृशो
रामश्यामलकेलिवीरकरुणाव्यामिश्रतां गाहते ॥ २९ ॥

( विलोक्य । ) कथमपगत एव रामबाणपीडितो दशकण्ठः ।

( नेपथ्ये । )

हा वत्स लक्ष्मण विकासय नेत्रपद्मे
मा गादिदं युगपदेव समस्तमस्तम् ।

---

१. अथ किं तस्याः ।

२. हा धिक् हा धिक् ।

---

**येयमिति** । क्रूरेण रक्षसा रावणेन बिभीषणे या इयं शक्तिस्तदाख्यायुधम् मुक्ता क्षिप्ता, सेयं शक्तिः लक्ष्मणेन निजवक्षसा स्वोरसा प्रियेव वल्लभेव गृहीता । उपमालङ्कारः । श्लोकश्छन्दः ॥ २८ ॥ **वर्षन्निति** । एष रामः समन्ततः परितः चापच्युतैर्धनुर्निर्मुक्तैः सायकैर्दशमुखं रावणं, विगता सञ्ज्ञा चेतना यस्मात्तं अङ्क उत्सङ्गे, निहितं स्थापितं सौमित्रिं लक्ष्मणं च नेत्रच्युतैर्नयनगलितैरम्बुभिर्जलैर्वर्षन्, कपीनां सुग्रीवादीनां दृशो दृष्टीर्हर्षशोकाभ्यां रावणाङ्गे शरवृष्ट्या हर्षः लक्ष्मणस्थित्यवलोकनेन च शोकः ताभ्यां तरलाश्चञ्चलाः कुर्वन् रामश्यामला केलिः क्रीडा ययोस्ताभ्यां वीरकरुणाभ्यां व्यामिश्रतां सङ्कीर्णतां गाहते एतत्तर्कयोहय । भावसन्धिः । शार्दूलविक्रीडितं वृत्तम् ॥२९॥ **नेपथ्ये** । **हा वत्सेति** । वत्स लक्ष्मण दिवाकरकुलस्य सूर्यवंशस्य भाग्यं च रामस्य मम जीवितं किञ्च ऊर्मिलायास्तदाख्यायास्तव पत्न्या नयनाञ्जनं नेत्रकज्जलं दुःखातिशयेनाश्रुवृष्ट्या कज्जलमार्जनमित्याशयः।इदं भाग्यादिकं युगपदेव समकालमेव

---

१. मुक्ताथ शक्तिरिति पा० । २. त्रैवेति पा० । ३. रामश्यामलवीरकेलीति पा० ।

भाग्यं दिवाकरकुलस्य च, जीवितं च
रामस्य, किं च नयनाञ्जनमूर्मिलायाः ॥ ३० ॥

विद्याधरः—हन्त, सोऽयमनुजवत्सलस्य रामस्य विलापः ।

( नेपथ्ये । )

देव, समाश्वसिहि समाश्वसिहि ।

विद्याधरी—कहं सुग्गीवेण समासासीअदि रामचन्दो । ता-किं दाणीं आलविस्सदि ।

विद्याधरः—आकर्णयावस्तावत्सुग्रीवेण समाश्वास्यमानः किमाह रामः ।

(नेपथ्ये ।)

सखे सुग्रीव, कथं समाश्वस्यते ।

अयि राघवाविति सुधामधुरं
विनिपीय पौरमुनिलोकवचः ।
अयि राघवेति गरलप्रतिमं
कथमद्य रामहतकः पिबतु ॥ ३१ ॥

---

१. कथं सुग्रीवेण समाश्वास्यते रामचन्द्रः । तत्किमिदानीमालपिष्यति ।

---

अस्तं लयं मा गात्, मा गच्छतु ( माङि लुङि लुङ् नमाङ्क्त्यडागमनिषेधः) अतो नेत्रपद्मे विकासय। केवलकमलविकासाभावे रविमात्रस्य दुःखं नेत्रपद्मविकासाभावे तु रविकुलस्यैव नाश इति तदपेक्षयाऽऽधिक्यं वर्णितम् । काव्यलिङ्गतुल्ययोगितालङ्काराः । वसन्ततिलका वृत्तम् ॥ ३० ॥ नेपथ्ये । कथं समाश्वस्यते समाश्वसितुं न प्रभवामीति भावः । अयीति । अयि राघवौ भो रघुकुलोत्पन्नौ रामलक्ष्मणावित्यर्थः । इति सुधेवामृतमिव मधुरं स्वादु पौरलोकस्य पुरवासिजनस्य मुनिलोकस्य ऋषिजनस्य च द्वन्द्वान्ते श्रूयमाणं लोकपदं प्रत्येकमन्वेति । तेषां वचो विनिपीय सादरं श्रुत्वेत्यर्थः । अद्य रामहतको नष्टोऽयं राम इत्यर्थः । अयि राघवेति द्विवचनमपहायैकत्वबोधकसंबोधनेन गरलप्रतिमं विषसदृशं वच इत्यनुवर्तते कथं पिबतु कथं शृणोत्वित्यर्थः । प्रमिताक्षरा वृत्तम् । प्रमिताक्षरा सजससैरुदितेति लक्षणात् ॥ ३१ ॥

अपि च ।

कनीयस्या मातुः कृतचरणपातः कथमहं
सहिष्ये मत्पार्श्वे विफलपरिवर्तं नयनयोः ।
अये शान्तं पापं कठिन इव चेज्जीवितुमना
विना वत्सं रामः पुनरयमयोध्यां प्रविशति ॥ ३२ ॥

**विद्याधरः**—अहह । करुणैकार्णवो वर्तते । ( विमृश्य । ) कः पुनरिह प्रतीकारः । ( विचिन्त्य । ) अथवा का प्रतीकारकथा । वक्रो हि विधिः ।

**विद्याधरी**—वंक्कदरोत्ति भणिज्जं । ईदो पेक्ख णं इमो वाणरो जेव्व कोवि लङ्केसरकिदसंधाणो करकलिदसैलसिहरो रामसंमुहं जेव्व परवाट्टदि ।

१. वक्रतर इति भणितव्यम् । इतः पश्य नन्वयं वानर एव कोऽपि लङ्केश्वरकृतसंधानः करकलितशैलशिखरो रामसंमुखमेव परावर्तते ।

**कनीयस्या** इति । कनीयस्याः मातुः सुमित्राया इत्यर्थः । कृतः चरणपातः प्रणतिरित्यर्थः येन तादृशोऽहं मत्पार्श्वे मत्समीपे नयनयोर्लोचनयोर्विफलो निष्फलः लक्ष्मणाभावादिति भावः, यः परिवर्तः परिभ्रमणं अर्थात्सुमित्रायाः, कथं सहिष्ये नैव सोढुं शक्नुयामित्याशयः । अये शान्तं पापं कथं सहिष्ये इत्यादि नोच्चारणीयम् । शान्तं पापमनिर्देश्य इति भरतोक्तेः। तत्र हेतुं दर्शयति राम इति । रामः कठिन इव निष्ठुर इव जीवितुं मनो यस्य तादृशः सन् वत्सं लक्ष्मणं विना पुनरयोध्यां प्रविशति चेत् प्रवेक्ष्यति चेत् ( वर्तमानसामीप्ये वर्तमानवद्वेति भविष्यति लट् ) तदा कनीयस्या मातुरित्यादिपूर्वोक्तस्य सम्भवः । अधुनाऽहं जीवितुमेव नेच्छामि कुतोऽयोध्याप्रवेशनम् तदभावे च कुतो वा मातृदर्शनमिति नावकाशः पूर्वोक्तविचारस्येत्याशयः । आक्षेपसम्भावने अलङ्कारौ । शिखरिणी वृत्तम् ॥ ३२ ॥ **विद्याधरः** । करुणैकार्णवः करुणरसैकसागरः। रावणस्य पलायनेनेदानीं लक्ष्मणैकचित्तत्वाद्रामो दुःखसागरनिमग्न इति भावः। इह शोकापनयने प्रतीकारः उपायः ( उपसर्गस्य घञीत्यनेन प्रतेर्दीर्घत्वम् ) विधिर्दैवम् । **विद्याधरी** । वक्रतरः राम पक्षीयैरपि लङ्केश्वराश्रयणादिति भावः । तथा हि कोपि वानरः लङ्केश्व-

१. जीवति मनागिति पाठः । २. इदमिति पाठः ।

**विद्याधरः**—( कर्णौ पिधाय । ) शान्तं पापम्। अयि मुग्धे, मैव वादीः । अयं हि

महौषधीनामाधारं भूधरं गन्धमादनम् ।
आदाय लक्ष्मणप्राणत्राणायाभ्येति मारुतिः ॥ ३३ ॥

( पुनर्विलोक्य । सहर्षम् । )

आमोदमाघ्राय महौषधीनां
सौमित्रिरुन्मीलितनेत्रपद्मः
भूयोऽपि चक्रीकृतचारुचापः
करोति रामं परिपूर्णकामम् ॥ ३४ ॥

**विद्याधरी**—कहं पुणो वि रामरणकोदूहलफुल्लन्तभुअमण्डलो णिसाअराखण्डलो परावडिदो जेव्व ।

१. कथं पुनरपि रामरणकौतूहलफुल्लद्भुजमण्डलो निशाचराखण्डलः परापतित एव ।

रेण रावणेन सह कृतसन्धानः विहितसंधिः सन् करकलितं पाणिधृतं शैलशिखरं गिरिशृङ्गं येन तादृशो रामसंमुखमेव परावर्तते आगच्छति । **विद्याधरः । महौषधीनामिति ।** मारुतिर्हनूमान् महतीनामोषधीनां विशल्यकरणीं मृतसंजीवनीत्याद्यनेकविधानां मृतानामपि जीवयितृत्वेनोषधीनां महत्त्वं, आधारमाश्रयं गन्धमादनं तदाख्यं भूधरं पर्वतमादाय गृहीत्वा लक्ष्मणस्य प्राणानां त्राणाय रक्षणाय राममिति शेषः । अभ्येति । रामाङ्के लक्ष्मणस्थितेस्तत्सम्मुखमागच्छति अतो मान्यथा सम्भावयेति भावः । छेकानुप्रासालङ्कारः ॥ ३३ ॥ **आमोदमिति ।** महौषधीनां गन्धमादनस्थाना आमोदं गन्धमाघ्राय उन्मीलितं उद्घाटितं नेत्रपद्मं येन स तथोक्तः सौमित्रिर्लक्ष्मणो भूयोपि पुनरपि चक्रीकृतः आकर्णाकर्षणेनेति भावः । चारुचापो येन तादृशः सन् रामं परिपूर्णः कामो लक्ष्मणनेत्रोन्मीलनाभिलाषो यस्य तादृशं करोति । छेकवृत्त्यनुप्रासावलङ्कारौ । उपजातिर्वृत्तम् ॥ ३४ ॥ **विद्याधरी ।** रामरणस्य कौतूहलेन फुल्लद्विकसद्भुजमण्डलं यस्य तादृशो निशा-

१. पद्मनेत्रेति पा० ।

**विद्याधरः**—प्रिये, तदिदानीं सावधानं विलोकय । तुलाधिरोहः खल्वयं वीरलक्ष्म्याः । यन्नाम रामरावणयोः समर इति ।

**विद्याधरी**—कहं उण सअलल्लोअवीरस्स रामचन्दस्स अणेकवीर-परिहूदस्स रावणस्स तुलाधिरोहो वीरलच्छीए हविस्सदि ।

**विद्याधरः**—प्रिये, न जानासि कथम् । दशकण्ठं विना

विन्यासं नाकनारीकुचकलशलसत्कुङ्कुमस्थासकाना-
मस्पृष्ट्वा मार्ष्टुमासीदसिकलहकलाकोविदः को विदग्धः ।
भिन्नस्वर्गैभकुम्भस्थलबहलगलन्मौक्तिकव्यक्तहासः
कस्याक्रीडत्कराग्रे त्रिदशपतियशश्चन्द्रहाश्चन्द्रहासः ॥ ३५ ॥

१. कथं पुनः सकललोकवीरस्य रामचन्द्रस्यानेकवीरपरिभूतस्य रावणस्य तुलाधिरोहो वीरलक्ष्म्या भविष्यति ।

चराखण्डलः राक्षसेन्द्रो रावणः परापतित एव प्रत्यागत एव । **विद्याधरः** । रामरावणयोः युद्धं समरः, नामेति सम्भावनायाम् । इति यत् अयं वीरलक्ष्म्याः शौर्यसम्पदः तुलायां तदाख्यमानेऽधिरोह आरोहणम् । लोके द्वयोर्वस्तुनोः समासमज्ञानार्थं तुलायां द्वयमपि स्थापयित्वा यथा परीक्ष्यते तथा रामरावणयो-र्वीरसम्पद्विषयेऽद्य परीक्षा भवतीत्याशयः। तत् तस्मादिदानीं सावधानं विलोकय। **विद्याधरी** । सकललोकेषु वीरस्य रामस्य, वीरलक्ष्म्याः अनेकवीरैः कार्तवीर्य-वाल्यादिभिः परिभूतस्य पराजितस्य रावणस्य, रामस्तु वालिनं जघान, कार्तवीर्य-हन्तारं परशुराममपि जिगायेति परस्परसाम्याभावः प्रसिद्ध एवेति कथं तुला-धिरोह इत्याशयः । **विद्याधरः** । **विन्यासमिति** । नाकनारीणां स्वर्गप्रमदानां कुचकलशेषु लसतां कुङ्कुमस्थासकानां काश्मीरजलेपनानां विन्यासं रचनां अस्पृष्ट्वा स्पर्शमकृत्वा मार्ष्टुं क्षालितुं दशकण्ठं विना कोऽसिकलहस्य खड्ग-युद्धस्य कलायां कोविदो बुधः विदग्धश्चतुर आसीत्, न कोऽपीत्यर्थः । भिन्नाभ्यां दारिताभ्यां स्वर्गेभस्यैरावतस्य कुम्भस्थलाभ्यां बहलगलद्भिरति-क्षरद्भिर्मौक्तिकैर्मुक्ताफलैर्व्यक्तः प्रकटितः हासो हास्यं येन स तथा त्रिदशप-तेरिन्द्रस्य यश एव चन्द्रस्तं हसतीति तथा ( अत्वसन्तस्येत्युपधादीर्घः ) चन्द्रहासस्तदाख्यः खड्गः दशकण्ठं विना कस्य पुरुषस्य कराग्रे अक्रीडत् व्यलसत् । नान्यस्य कस्यापीत्यर्थः । प्रिये इदमित्यध्याहारः । कथं न जानासीति प्रश्नः । अस्पृष्ट्वा मार्ष्टुमित्यादिना लङ्केश्वरखड्गेन तत्प-तिनाशादश्रुभरैः कुङ्कुमलेपनं क्षालितमिति भावः । विभावनाच्छेकयम-कानुप्रासालङ्काराः । विभावना विनापि स्यात्कारणं कार्यजन्म चेदिति लक्ष-

१. अवलोकयेति पा० ।

अपि च।

किं ब्रूमो दशकन्धरं निजचमूरक्षाकपाटीभव-
द्वक्षःपीठपतत्कठोरकुलिशाघातेषु जातस्मितम्।
व्योमाभोगसरोविलासिनि वने यत्पाणिपङ्केरुहां
कैलासेन शिरःस्थितेन्दुकलिकोत्तंसेन हंसायितम्॥ ३६॥

(नेपथ्ये।)

हेलोन्मूलितचन्द्रचूडगिरयस्त्रैलोक्यदत्तापदो
लङ्कातङ्कहराः पुरंदरपुरस्त्रीवृन्दबन्दीकृतः।
वैदेहीकुचकुम्भकुङ्कुमरसव्यासङ्गबद्धस्पृहाः
सोत्कर्षं दशकन्धरस्य जयिनः खेलन्ति दोःकेलयः॥ ३७॥

---

णात्। स्रग्धरा वृत्तम् ॥३५॥ **किं ब्रूम इति**। निजचमूनां स्वसेनानां रक्षायां पालने कपाटीभवति अररीभवति (कपाटमररं तुल्ये इत्यमरः) वक्षः पीठे हृदयप्रदेशे पततः कठोरकुलिशस्य तीक्ष्णवज्रस्य आघातेषु ताडनेषु जातं उत्पन्नं स्मितं मन्दहासो यस्य तं,। दुःसहवज्रमहारेऽपि व्यथाऽभावान्महावीरत्वमिति भावः। तादृशं दशकन्धरं रावणं किं ब्रूमः किंवर्णयाम इत्यर्थः, तमेव वर्णयति व्योमाभोगः नभःप्रदेशः स एव सरः कासारस्तस्मिन्विलासिनि यस्य रावणस्य पाणिपङ्केरुहां हस्तकमलानां वने कान्तारे, विंशतिभुजत्वाद्वनत्वकल्पना, शिरःस्थिता मूर्धस्थिता इन्दुकलिका यस्य तादृशः शङ्कर इत्यर्थः स उत्तंसो भूषणं यस्य तेन कैलासेन रजताचलेन हंसायितं हंस इवाचरितम्। कैलासहंसयोः शुभ्रत्वात्सादृश्यम्। विभावनारूपकालङ्कारौ। विरुद्धात्कार्यसम्पत्तिर्दृष्टा काचिद्विभावनेति तल्लक्षणात्। शार्दूलविक्रीडितं वृत्तम्॥ ३६॥ **हेलोन्मूलितेति**। हेलया लीलया उन्मूलित उत्पाटितश्चन्द्रचूडस्य शङ्करस्य गिरिः कैलासो यैः, त्रैलोक्यस्य लोकत्रयस्य दत्ता आपदः विपत्तयो यैः, लङ्कायास्तन्नामकनिजराजधान्या आतङ्कं सन्तापं हरन्तीति तथोक्ताः, पुरंदरपुरस्त्रीवृन्दं स्वर्गाङ्गनासमूहं बन्दी कुर्वन्तीति तथा, वैदेह्या जानक्याः कुचकुम्भयोः कुङ्कुमरसस्य व्यासङ्गे अभ्यसने बद्धा स्पृहा अभिलाषो यैः तादृशाः, जयिनो जेतुर्दशकन्धरस्य दोःकेलयो बाहुविलासाः सोत्कर्षं यथा स्यात्तथा खेलन्ति क्रीडन्ति। काव्यलिङ्गच्छेकवृत्त्यनुप्रासालाङ्कराः। शार्दूलविक्रीडितं वृत्तम्॥३७॥

---

१. सोत्कण्ठमिति पा०।

( पुनर्नेपथ्ये । )

हेलोन्मूलितचन्द्रचूडधनुषस्त्रैलोक्यदत्ताभया
लङ्कातङ्ककराः पुरंदरपुरस्त्रीवृन्दबन्दीमुचः ।
वैदेहीकुचकुम्भकुङ्कुमरसन्यासङ्गलब्धोत्सवाः
सोत्कर्षं रघुनन्दनस्य जयिनः खेलन्ति दोःकेलयः ॥ ३८ ॥

विद्याधरः—नूनमयं राक्षसवानरयोर्निजस्वामिवर्णनानुसारी व्याहार ।

विद्याधरी—कहं उण रहट्ठिदेण रावणेन समं भूमिट्ठिदस्स राहवस्स समरो हविस्सदि ।

विद्याधरः—प्रिये, पश्य । आनीत एव मातलिना पुरुहूतरथः । अधिष्ठितश्च विनयाभिरामेण रामेण ।

( नेपथ्ये । )

अये, कथं
पूर्वमेव प्रयातानां खरमारीचवालिनाम् ।
सौजन्यमुग्धः पन्थानमधिवर्तितुमीहसे ॥ ३९ ॥

विद्याधरः—आकर्णयामस्तावदनेन रामवचनेन पीडितः किमाह रावणः ।

---

१. कथं पुना रथस्थितेन रावणेन समं भूमिस्थितस्य राघवस्य समरो भविष्यति ।

---

**पुनर्नेपथ्ये** । **हेलोन्मूलितेति** । पूर्वपद्योक्तवर्णनप्रतिद्वन्द्विरामवर्णनपरं पद्यमिदम् । अर्थः सुगमः ॥ ३८ ॥ **विद्याधरः** । मातलिनेन्द्रसारथिना पुरुहूतरथः इन्द्ररथः विनयेन अभिरामेण मनोहरेण अधिष्ठित आरूढः । **नेपथ्ये** । **पूर्वमिति** । अये पूर्वमेव त्वदपेक्षया प्रथममेव प्रयातानां गतानामर्थाद्यमसदनमिति भावः । खरस्तदाख्यो राक्षसः, मारिचः स्वर्णमृगो भूत्वा वञ्चनार्थमागतः सः वाली सुग्रीवभ्राता च तेषां पन्थानं मार्गं मरणरूपं सौजन्ये सुजनाचारे मुग्धो मूढः सन्नधिवर्तितुमनुसर्तुं कथमीहसे चेष्टसे । खरमारीचादिवत् वृथा मरणं मामुहीत्याशयः

( नेपथ्ये । )

खरः कीदृग्वाली कपिरपि च मारीचहतकः
कुरङ्गस्तान्हत्वा कथमपि कथं दृप्यसि मनाक् ।
अयं पश्य प्राप्तो दशवदननामा सुरपुरी-
करीन्द्राणां हेलारचितकदनः पञ्चवदनः ॥ ४० ॥

अथवा ।

कालीकेसरिकेसराञ्चलसटासाटोपसंपादित-
क्रीडाचामरकोमलानिललवाचान्तश्रमाम्भःकणः ।
श्रीमानेष दशाननो विजयते तस्यास्य पञ्चानन-
व्यापारप्रतिपादनैरपि यशः कीदृक्समुन्मीलति ॥ ४१ ॥

॥३९॥ **नेपथ्ये । खर इति ।** खरः तन्नामा राक्षसः कीदृक् कियन्मात्रः अतितुच्छ इत्यर्थः। खर एव गदर्भ एव स इति ध्वनिः। वाली कपिर्वानरः सोऽपि मर्कटत्वादतितुच्छ इति ध्वनिः । अपि च मारीचहतकः दुष्टमारीच कुरङ्गो मृगः अतीवभीरुरिति ध्वनिः । तान् खरादीन्कथमपि अतिकष्टेनेत्यर्थः। हत्वा कथं दृप्यसि दर्पयुतो भवसि सुरपुर्याः स्वर्गस्य करीन्द्राणमैरावतादिश्रेष्ठदन्तिनां हेलया रचितं कृतं कदनं मर्दनं येन तादृशः दशवदननामा रावणाख्यः अयं पञ्चवदनः सिंहः प्राप्तो मनागीषत् पश्य अथवा असुरपुर्यः पुरत्रयं करीन्द्रो गजासुरस्तेषां हेलारचितकदनः पञ्च तान्मितानि वदनान्याननानि यस्य तादृशः शङ्करः प्राप्त इत्यर्थः।श्लेषरूपकालङ्कारौ । शिखरिणी वृत्तम् ॥४०॥ **कालीति ।** काल्याः पार्वत्याः केसरिणः सिंहस्य केसराञ्चलानां सटाग्राणां सटाभिः समूहैः साटोपं यथा स्यात्तथा सम्पादितस्य विरचितस्य क्रीडार्थं चामरस्य कोमलानिलानां मन्दवायूनां लवैः कणैराचान्ताः प्राशिता मार्जिता इति यावत् । श्रमाम्भःकणाः श्रमजनितस्वेदबिन्दवः यस्य तादृशः एष श्रीमान् दशाननो दशमुखो रावणो विजयते । तस्यास्य पूर्वोक्तरीत्या महावीरस्य रावणस्य, पञ्चाननस्य पञ्चवदनस्य शङ्करस्य सिंहस्य च व्यापारप्रतिपादनैः सुरपुरीकरीत्यादिचेष्टावर्णनैरपि कीदृग्यशः समुन्मीलति प्रविकसति । येन मया इतरकण्ठीरवापेक्षया बलवत्त्वाद्देवत्वाच्चातिमान्यमपि पार्वतीसिंहं जित्वा क्रीडाचामरार्थं सटाग्राण्यानीतानि इतरसिंहकथा का मुखैरप्यधिकश्च एवमेव शङ्करस्य प्रियायाः पार्वत्या अपि सिंहस्य सटाग्रानयनावसरे यदि शङ्करः शूरो मदपेक्षयाऽभविष्यत्तदा कथं तूष्णीमस्थास्य

इष्यसि मनागिति पा० ।

**विद्याधरः**—अये, दशवदनवचनकुपितः किमपि वक्तुकाम इव लक्ष्यते लक्ष्मणः ।

(नेपथ्ये ।)

किं ते पञ्चाननतया दशाननतया वा । त्वमिदानीं
दूरान्मुक्तमदो बिभीषण इव न्यञ्चच्छिरःशेखरः
स्वच्छन्दं चरणारविन्दयुगले रामस्य भृङ्गो भव ।
रे नक्तंचर कुम्भकर्ण इव वा कर्णान्तचक्रीभव-
च्चापोत्सङ्गविमुक्तबाणदहने सद्यः पतङ्गो भव ॥ ४२ ॥

**विद्याधरी**—पेक्ख[1] पेक्ख । इदो सरन्धआरं वित्थारअन्तेण णिसामुहायिदं दसमुहेण ।

**विद्याधरः**—नन्वितस्तदेव निजविशिखमयूखधारया विनिवारयता चन्द्रायितं रामचन्द्रेण । (पुनः सकौतुकम् ।) अये, नूनमयं दिव्यास्त्रलीलया प्रतिहतदिव्यास्त्र निकृत्तचापं रावणं किमपि वक्तुकाम इव दृश्यते रामः ।

१. पश्य पश्य । इत. शरान्धकारं विस्तारयता निशामुखायितं दशमुखेन।

दपि च स पञ्चवदनोहं दशवदनः एवं च तदपेक्षयातिविक्रान्तत्वमस्यैव प्रत्यक्षं दृश्यतेऽतो रुद्रसिंहवर्णनमयुक्तं ममेति भावेनोक्तं श्रीमानेष दशाननो विजयत इति भावः । आक्षेपकाव्यार्थापत्त्यलङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ४१ ॥ **दूरोन्मुक्तेति** । रे नक्तचर रावण इदानीं बिभीषण इव तदाख्यत्वदनुज इव दूरोन्मुक्तो दूरत्यक्तो मदोऽवलेपो येन अत एव न्यञ्चन्तोऽवनमन्तः शिरःशेखराः शिरोमाल्यानि यस्य तादृशः सन् ( आपीडशेखरोत्तंसावतंसाः शिरसि स्रज इत्यभिधानरत्नमाला ) अतिनम्रीभूतमस्तक इत्यर्थः । **स्वच्छन्दं** स्वेच्छानुसारं यथा तथा रामस्य चरणारविन्दयुगले भृङ्गो भ्रमरो भव वा अथवा कुम्भकर्ण इव कर्णान्ते श्रवणप्रदेशे चक्रीभवतो ज्याकर्षणेन चक्राकृतेश्चापस्य कार्मुकस्योत्सङ्गाद्विमुक्तो निःसृष्टो यो बाणदहनः शराग्निस्तस्मिन् सद्यः सपदि पतङ्गः शलभो भव । विकल्परूपकालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ४२ ॥ **विद्याधरी** । शरैरन्धकारं तिमिरं, शरसङ्घैः सर्वत्र प्रसरणेन सूर्यस्याप्याच्छादनादिति भावः । विस्तारयता दशमुखेन निशामुखेनेव प्रदोषकालेनेवाचरितम् प्रदोषसमयस्य तमःप्रारम्भकत्वं प्रसिद्धम् । **विद्याधरः** । तदेव शरान्धकारमेव निजविशिखानां स्वशराणां मयूखधारया कान्तिपूरेण विनिवारयता नाशयता रामचन्द्रेण चन्द्रायितमिन्दुवदाचरितम् । निकृत्त-

( नेपथ्ये । )

निकृत्तचाप इति मा संतापतरलो भव ।
शस्त्रमन्यदपि स्वैरं समरे समलंकुरु ॥ ४३ ॥

**विद्याधरी**—आकण्णिअदु दाव किं दाणीं भणादि रावणो ।

( नेपथ्ये । )

आकर्णितस्तव दशाननबाहुदण्ड-
श्रीखण्डकाननफणी नवचन्द्रहासः ।
येन स्वनामपदसाम्यरुषेव पीतः
स्वर्लोकलोलनयनामुखचन्द्रहासः ॥ ४४ ॥

**विद्याधरः**—लीलादलितचन्द्रहासः सोत्प्रासः किमधुना वदति रावणं रामचन्द्रः ।

( नेपथ्ये । )

अयि, तावदधुना लङ्केश्वरः खिद्यते ।

**विद्याधरी**—किंपि दाणीं जप्पिस्सदि रावणो ।

---

१. आकर्णयतु तावत्किमिदानीं भणति रावणः ।

२. किमपीदानीं जल्पिष्यति रावणः ।

श्छिन्नश्चापो यस्य तम्। (**नेपथ्ये**) **निकृत्तेति**। रे रावण निकृत्तचाप-श्छिन्नकार्मुक इति हेतोः सन्तापेन तरलश्चञ्चलः मा भव अन्यदितरच्छस्त्रं आयुधं स्वैरं स्वच्छन्दं समरे समलङ्कुरु हस्ते गृहाणेत्यर्थः। वृत्त्यनुप्रासा-लङ्कारः ॥ ४३ ॥ **विद्याधरी** । (**नेपथ्ये**) **आकर्णित इति** । येन चन्द्रहासेन स्वर्लोकलोलनयनानां स्वर्गचञ्चलदृशां मुखं चन्द्र इव तस्य हासो हास्यं स्वनाम्नो निजाह्वयस्य पदं चन्द्रहासेति तस्य साम्यं तुल्यता तस्या रुषेव कोपेनेव पीतः ग्रासितः, सः दशाननस्य बाहुदण्ड एव श्रीखण्ड-काननं चन्दनवनं तस्मिन् फणी सर्पः नवचन्द्रहासः नूतनचन्द्रहासाख्यम-सिः खड्गः त्वयाकर्णितः त्वया आकर्णित इति काकुः। अत्र रूपकालङ्कारः। वस-न्ततिलका वृत्तम्॥४४॥**विद्याधरः**। लीलया दलितश्छिन्नश्चन्द्रहासो येन तादृशः उत्प्रासेनोपहासेन सहितः सोत्प्रासस्तेन ( तेन सहेति बहुव्रीहिः ) उत्प्रा-सनं तूपहासो योऽसाधौ साधुमानिनि इति **दर्पणोक्तेः**। ( **नेपथ्ये** ) खिद्यत

---

१. संक्षोभतरल इति पा० । २. शस्त्रमन्यदपीति पा० । ३. ननूर समरं इति पा० । ४. नवचन्द्रेति पा० । ५. स्वनामसमेति पाठः ।

( नेपथ्ये । )

कथमद्यैव लङ्केश्वरः खिद्यते । ननु रे,

विध्वस्ता दशभिर्भुजैर्दशदिशः प्रत्येकमेते पुन-
र्भारायैव दशापरे मम गिरिप्राग्भारभाजो भुजाः ।
आराध्यः शशिमौलिरम्बुधिजले निद्राति नारायणः
किंकर्तव्यतयानयानुदिवसं लङ्केश्वरः खिद्यते ॥ ४५ ॥

**विद्याधरी**—वंअणमेत्तं दाणीं ।

**विद्याधरः**—नहि नहि । पश्य । नन्वयमिदानीमपि

धनुर्निस्त्रिंशादिप्रहरणगणच्छेदकुपितो
दशास्यः स्वान्मूर्ध्नो रघुपतिशरश्रेणिदलितान् ।

१. वचनमात्रमिदानीम् ।

इत्यन्तं रामवचनम् । (**नेपथ्ये**) कथं अद्यैव खिद्यते इति काकुः । अपि तु सर्वदैव खिद्यते इत्याशयः । कारणं दर्शयति **विध्वस्ता इति** । मम दशभिर्भुजैः प्रत्येकं एकैकेन भुजेनैकैकादिगित्यर्थः । दश तत्सङ्ख्याका दिशो विध्वस्ता नाशिताः जिता इति यावत् । शेषभुजदशकस्य निष्फलत्वं समर्थयति । शशिमौली रुद्र आराध्यः वरप्रदानात् पूज्यदैवतत्वाच्चाराधनीयो न तु योध्यः, नारायणो विष्णुरम्बुधिजले वारिधिसलिले निद्राति । मद्भयादिति तु गूढोऽभिसन्धिः । इतरेषां का कथा अतोऽपरे गिरिप्राग्भारं कैलासशृङ्गं ( शैलाग्रे शिखर शृङ्ग दन्तः प्राग्भार इत्यपीति त्रिकाण्डशेषः ) भजन्तीति ते, कैलासशिखरोन्मूलका इति भावः । तथा चोक्तमनेनैव कविना प्रथमाङ्के "उन्मूलितेन शिखरेण हराचलस्य" इति (भजो ण्विरिति ण्विप्रत्ययः ) दशभुजाः भारायैव निष्प्रयोजनत्वादिति भावः । अनया किं कर्तव्यतया करणीयाभावात्किङ्कार्यमित्येतया चिन्तया लङ्केश्वरोऽनुदिनं प्रत्यहं खिद्यते । काव्यलिङ्गव्याजोक्ती अलङ्कारौ । व्याजोक्तिरन्यहेतूक्त्या यदाकारस्य गोपनमिति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥४५॥ **विद्याधरी** । वचनमात्रं सर्वाङ्गप्रच्छेदनाद्रणसाधनाभावेन भाषणप्रकर्ष एवेति भावः । **विद्याधरः । धनुरिति** । धनुः कार्मुकं निस्त्रिंशः खड्गस्तावादी येषां तेषां प्रहरणानामायुधानां गणस्य वृन्दस्य च्छेदेन कुपितः दशास्यो रावणो रघुपते रामस्य शरश्रेण्या विशिखावल्या दलितान् छिन्नान्

१. गिरिप्राग्भारभारा भुजा इति पा० ।

करैरेकैरेकैर्नभसि भृशमादाय युगप-
त्क्षिपन्नन्यैरन्यैः सफलयति दोर्विंशतिमपि ॥ ४६ ॥

( पुनः सकौतुकम् । )

एतान्यस्य यथायथाशु विशिखैः कृत्तानि रक्षःपते-
रुद्गच्छन्ति शिरांसि भीतिपुलकैः साकं दिवौकःपतेः ।
उन्मीलन्ति तथातथा रघुपतेरन्तः प्रमोदोर्मय-
कण्ठच्छेदविनोदकौतुकभरव्यग्रीभवच्चेतसः ॥ ४७ ॥

**विद्याधरी**—कहं अज्जावि णिसाअरेन्दबन्दीकिदसुरसुन्दरीणं दंसणं दुल्लह जं इमस्स सीसाइं पुणो पुणोवि उम्मीलन्ति ।

---

१. कथमद्यापि निशाचरेन्द्रबन्दीकृतसुरसुन्दरीणां दर्शनं दुर्लभ यदस्य शीर्षाणि पुनःपुनरप्युन्मीलन्ति ।

---

स्वान्निजान्मूर्ध्नो मस्तकान् एकैरेकैः करैर्नभस्यन्तरिक्षे भृशं मुहुः आदाय अन्यैरन्यैः इतरैः करैरित्यर्थः । युगपत् एकस्मिन्नेव काले क्षिपन्स्वस्थाने स्थापयन् सन्नित्यर्थः । दोष्णां विंशतिमपि विंशतिभुजानपीत्यर्थः । सफलयति । सफलीकरोति ( सफलशब्दात्तत्करोतीति णिच् ) युगपदादाय युगपत्क्षिपन्निति वा अन्यत्पूर्ववत् । श्लेषालङ्कारः । शिखरिणी वृत्तम् ॥४६॥ **एतानीति** । अस्य रक्षःपते रावणस्य शिरांसि विशिखैः बाणैः कृत्तानि छिन्नानि दिवौकसां देवानां पतेः स्वामिनः इन्द्रस्येत्यर्थः भीत्या पुलकैः रोमाञ्चैः साकं समं यथायथा आशु शीघ्रं उद्गच्छन्ति पुनःप्रादुर्भवन्ति,तथातथा कण्ठच्छेद एव विनोदो मनोरञ्जनं तस्य यत्कौतुकं तस्य भरेणातिशयेन व्यग्रीभवदाकुलीभवच्चेतो मनो यस्य तस्य रघुपते रामस्यान्तोन्तःकरणे प्रमोदोर्मयो हर्षतरङ्गा उन्मीलन्ति विकसन्ति । रामेण रावणशिरांसि छिन्नान्यपि अध पतनक्षण एव पुनर्यथापूर्वमुदपद्यन्तैवं बहुवारावलोकनेनेन्द्रस्य भीतिः प्रादुरास रामस्य महावीरत्वात्तत्कर्तनेऽश्रमेण मनोरञ्जनमेवाभूदिति भावः । सहोक्तिविभावने अलङ्कारौ । अकारणात्कार्यजन्म चतुर्थी स्याद्विभावनेति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥४७॥ **विद्याधरी** । निशाचरेन्द्रेण रावणेन बन्दीकृतानां सुरसुन्दरीणां देवाङ्गनानां दर्शनं दुर्लभं, यद्यस्मादस्य रावणस्य शीर्षाणि शिरांसि उन्मीलन्ति उत्पद्यन्ते

---

१. यथासुविशिखैरिति पा० ।

**विद्याधरः**—अलं तापेन । क्रीडति खलु रामः सह रावणेन । न पुनरद्यापि कुप्यति । ( पुनर्विलोक्य । सकौतुकम् । ) प्रिये, पश्य पश्य ।

अन्तःसान्द्रवसन्महेश्वरशिरःशीतांशुलेखोल्लस-
त्पीयूषद्रवशीकरव्यतिकरप्राग्भारभाजामिव[१] ।
छिन्नानामपि रामचन्द्रविशिखैर्भूयः समुद्गच्छतां
काप्यन्यैव निशाचरेन्द्रशिरसां कान्तिः समुज्जृम्भते ॥ ४८ ॥

( पुनः सकौतुकम् । विहस्य । ) अहो अस्य चित्तवृत्तिः ।

अयं यावद्यावत्पृथुहृदयपीठं रघुपतिः
शिरश्छेदासक्तो न दशवदनस्य व्यथयति ।
अयं तावत्तावद्वहति मुदमुच्चैर्दशमुखः
किलैतस्मिन्देवी जनकपतिपुत्री निवसति ॥ ४९ ॥

( नेपथ्ये । )

अयि प्रिय राम,
किं क्रीडसि शरस्तोमैर्नन्वेकेनैव पत्रिणा ।

---

**विद्याधरः** । **अन्तःसान्द्रेति** । रामचन्द्रविशिखैः रामशरैश्छिन्नानामपि कृत्तानामपि अन्तरन्तःकरणे सान्द्रं निबिडं यथा तथा वसतो महेश्वरस्य शङ्करस्य शिरःशीतांशोः शीर्षस्थितविधोर्लेखायां कलायां उल्लसतः उच्छलतः पीयूषद्रवस्य अमृतस्यन्दस्य शीकरव्यतिकरप्राग्भारं कणसम्पर्कप्रकर्षं भजन्तीति तथा तेषामिव अत एव भूयः पुनरपि समुद्गच्छतां उत्पद्यमानानां निशाचरेन्द्रशिरसां रावणमस्तकानां अन्यैव साधारणकान्तेरितरैव कापि अनिर्वचनीया कान्तिः शोभा समुज्जृम्भते समुदेति । भेदकातिशयोक्त्युत्प्रेक्षालङ्कारौ । भेदकातिशयोक्तिस्तु तस्यैवान्यत्ववर्णनमिति लक्षणात् । शार्दूलविक्रीडितं वृत्तम् ॥ ४८ ॥ **अयमिति** । अयम् रघुपती रामः दशवदनस्य रावणस्य शिरश्छेदासक्तः सन्पृथु विशालं हृदयमेव पीठं यावद्यावदवधीत्यर्थः । न व्यथयति न पीडयति तावत्तावत्तदवधि अयं दशमुखो रावण उच्चैर्मुदं हर्षं वहति धत्ते । किल यतः एतस्मिन् हृदयपीठे देवी जनकपतिपुत्री जानकी निवसति तिष्ठति "वरं स्वशिरश्छेदः न पुनः सीताया व्यथेति धिया सीताधारस्वहृदयपेटिकास्स्थितिमवलोक्य रावणस्य हर्ष इति भावः । काव्यलिङ्गमलङ्कारः । शिखरिणी वृत्तम् ॥ ४९ ॥ **नेपथ्ये** **किमिति** । अयि प्रिय राम शरस्तोमैर्बाणौघै

१. प्रागल्भ्यभाजामिवेति पाठः ।

परिपूरय नः कामं यशसा च जगत्त्रयम् ॥ ५० ॥

**विद्याधरः**—नूनममी दिवौकसस्त्वरयन्ति रामचन्द्रम् । तच्छृण्वन्किमधुना वक्ष्यति रावणः ।

( नेपथ्ये । )

रे रे मम भुजाः,
मुक्त्वैकां हरशेखरप्रणयिनीं पीयूषभानोः कला
दिक्पालावलिमौलिमण्डनमणीन्गृह्णीत सर्वानपि ।
तैः काञ्चीं रचितां चिराय वहतु श्रोणीतटे जानकी
गायन्ती कमनीयशिञ्जितभरैर्मद्विक्रमाडम्बरम् ॥ ५१ ॥

**विद्याधरः**—( विहस्य । ) लङ्केश्वर, समयज्ञोऽसि यन्द्भुजानेव नियुक्तवानसि । अधुना हि भुजमण्डलमेव परिवारवर्गस्ते । ( विलोक्य । साकूतम् । ) अये, कथमनेन दशाननवचनेन किंचित्कुपित इव दृश्यते जानकीकान्तः । ( पुनः सहर्षविषादम् । ) हन्त भोः,

विकचकुसुमस्तोमाकीर्णे परागविभूषितः
शशिमणिशिलातल्पेऽनल्पे सलीलमशेत यः ।

---

किं किमर्थं क्रीडसि एकेनैव पत्रिणा शरेण ( पत्रिणौ शरपक्षिणावित्यमरः ) नोऽस्माकं देवादीनां कामं रावणमारणरूपं यशसा दुर्जयारिजयोत्थकीर्त्या जगत्त्रयं त्रिभुवनञ्च परिपूरय । तुल्ययोगितालङ्कारः । श्लोकश्छन्दः ॥ ५० ॥ **विद्याधरः** । दिवौकसो देवाः (तत्करोतीति णिच् ) । **नेपथ्ये । मुक्त्वेति** । रे मम भुजाः हरशेखरप्रणयिनीं शङ्करशिरःशायिनीमित्यर्थः । पीयूषभानोः सुधांशोश्चन्द्रस्य कलामेकां मुक्त्वा सर्वानपि दिक्पालावलेरिन्द्रादिश्रेण्या मौलिमण्डनमणीन् किरीटभूषणरत्नानि सर्वानपि निखिलानपि गृह्णीतादत्त । तैर्मणिभी रचितां विनिर्मितां काञ्चीं मेखलाम् कमनीयानां मनोहराणां शिञ्जितानां भूषणरवाणां भरैरतिशयैः साकम् मद्विक्रमस्य मत्पराक्रमस्याडम्बरमाटोपं गायन्ती जानकी श्रोणीतटे कटिप्रदेशेऽवलग्न इति यावत् । चिराय बहुकालं वहतु धारयतु भवताम् । सहोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५१ ॥ **विद्याधरः** । भुजमण्डलमेव परिवारवर्गः । सर्वनिशाचरहननेनेतरपरिवाराभावादित्याशयः । **विकचेति** । यो रावण. विकचकुसुमानां विकसितप्रसूनानां स्तोमैर्निकरैराकीर्णे व्याप्ते अनल्पे विशाले शशिमणिशिलानामिन्दुमणिदृषदाम् तल्पे शय्यायाम्

---

१. चिकुरेति पाठः ।

अयमयमसौ रोषारूढे क्षणं रघुनन्दने
भुवि दशमुखः शेते धूलिच्छटापरिधूसरः ॥ ५२ ॥

**विद्याधरी**—( सहर्षम्। ) ता दाणीं जेव्व जणअणन्दिणी रामचन्देण समं संगमिस्सदि।

**विद्याधरः**—अथ किम्। ( विलोक्य। ) नन्वियम्।

उद्दामहेतिवलयैः परिदीपिताशं
पश्य प्रविश्य जनकेन्द्रसुता हुताशम्।
अभ्युद्गता समधिकां द्युतिमुद्वहन्ती
प्रातर्मयूखकलिकेव दिवाकरस्य ॥ ५३ ॥

**विद्याधरी**—पेक्ख पेक्ख। इमो असमसमरकअत्थिदं पदेसं अवतरइ रामचन्दो।

---

१. तदिदानीमेव जनकनन्दिनी रामचन्द्रेण समं सगस्यते।
२. पश्य पश्य। अयमसमसमरकदर्थित प्रदेशमवतरति रामचन्द्रः।

---

परागैः पुष्परजोभिर्विभूषितः सन् सलीलं सविलासं यथा तथा आशेत शेते स्म असावयं दशमुखः रघुनन्दने क्षणं रोषारूढे कोपाविष्टे सति धूलिच्छटाभिः पांसुपुञ्जैः परिधूसरः लिप्तसर्वाङ्गतयेति भावः। भुवि भूमौ शेते मृतः सन्निति शेषः। हन्तेति विषादे। विषमाक्रमातिशयोक्ती अलङ्कारौ। अक्रमातिशयोक्तिः स्यात्सहत्वे हेतुकार्ययोरिति लक्षणात्। हरिणी वृत्तम् ॥ ५२ ॥ **विद्याधरी**। सहर्षम् रावणनाशाद्धर्षः। संगंस्यते सम्मिलिष्यति। **विद्याधरः**। **उद्दामेति**। प्रातः प्रभाते दिवाकरस्य दिनकरस्य मयूखकलिकेव बालातप इवेति भावः। जनकेन्द्रसुता जानकी उद्दामानामुत्कटानां हेतीनां ज्वालानां ( रवेरर्चिश्च शस्त्रं च वह्निज्वाला च हेतय इत्यमरः )वलयैर्मण्डलैः परिदीपिताः आसमन्तात्प्रकाशिता आशा दिशः येन तादृशं हुताशमग्निं प्रविश्य समधिकां पूर्वतेजोपेक्षयेत्यर्थः। द्युतिं कान्तिमुद्वहन्ती सती अभ्युद्गता पुनर्बहिरागता पश्य। उपमानुगुणावलङ्कारौ। वसन्ततिलका वृत्तम् ॥ ५३ ॥ **विद्याधरी**। असमसमरेण असदृशयुद्धेन कदर्थितं

---

१. प्रत्युद्गतेति पाठः। २. द्युतिमावहन्तीति पा०।

**विद्याधरः**—तदेहि । कर्णामृतं पुलोमजायै निवेदयावः ।

( इति निष्क्रान्तौ । )

( ततः प्रविशति रामः सीतालक्ष्मणौ सुग्रीवबिभीषणौ च । )

**रामः**—अये, कथमुपगत एव भगवानम्बरमणिश्चरमाचलचूडम् ।

**लक्ष्मणः**—पश्चिमपयोधिवेलां च । नन्विदानीम्

उद्दामदिग्द्विरदचञ्चलकर्णपूर-
गण्डस्थलोच्चलदलिस्तबकाकृतीनि ।
मीलन्नभांसि मृगनाभिसमानभांसि
दिक्कन्दरेषु विलसन्तितमां तमांसि ॥ २४ ॥

**रामः**—अये, कथमुज्जृम्भितमेव निशाचरचक्रानुकारिणा तिमिरनिकरेण ।

**बिभीषणः**—नन्वितोऽपि समुन्मीलितमेव रामनाराचानुकारिणा तुहिनकरकिरणप्रकरेण ।

**सुग्रीवः**—एवमेतत् । अमी हि

क्षीराब्धेर्लहरीषु फेनधवलाश्चन्द्रोपलेषु स्रव-

---

दूषितम् । **विद्याधरः** । कर्णामृतं श्रुतिसुखां शुभवार्तामित्यर्थः । पुलोमजायै इन्द्राण्यै **रामः** । अम्बरमणिः सूर्यः चरमाचलस्य अस्ताचलस्य चूडा शिखा अग्रमिति यावत् । **लक्ष्मणः** । **उद्दामेति** । उद्दामानामुत्कटानां दिग्द्विरदानां दिग्गजानां चञ्चलाः कर्णपूराः कर्णभूषणानि येषु तेषु गण्डस्थलेषु उच्चलदलीनां संचरन्मधुकराणां स्तबकस्य वृन्दस्य आकृतिरिवाकृतिः येषां तानि, कर्णभूषणताडनोच्चालितगण्डस्थभ्रमरकदम्बतुल्यानीति भावः । मीलन्त्संकुचन्नभो व्योम यैस्तानि, मृगनाभेः कस्तूर्याः समाना भाः येषा तानि, तमांसि दिशां कन्दरेषु गर्भेषु विलसन्तितमाम् अतिशयेन विलसन्ति । उपमानालङ्कारः । वसन्ततिलका वृत्तम् ॥ ५४ ॥ **रामः** । निशाचरचक्रं राक्षसवृन्दमनुकरोति तच्छीलं तेन तिमिरनिकरेण तमोव्रातेन । **बिभीषणः** । रामनाराचानुकारिणा रामशरसदृशेन तुहिनकरस्य चन्द्रस्य किरणानां प्रकरेण समूहेन समुन्मीलितं प्रादुर्भूतम् । यथा रामशराः रक्षश्चक्रनाशकास्तथैव तिमिरनिकरनाशकाश्चन्द्रकिरणा इति भावः । **सुग्रीवः** । क्षी-

---

१. विकसन्तितमामिति पाठः । २. कदम्बकेनेति पा० ।

त्पाथःसीकरिणो विकासिकुमुदक्रोडे रजःपिञ्जराः ।
उन्मीलन्ति चकोरचञ्चुगहने छिन्नप्ररूढाश्चम-
त्कुर्वन्तः प्रियविप्रयुक्तरमणीगात्रे सुधांशोः कराः ॥ ५५ ॥

**बिभीषणः**—एवमेतत् इदानीं हि

शंकरार्धतनुबद्धपार्वती-
कुङ्कुमाक्तकुचकोरकाकृतिः ।
सूच्यते कमलिनीभिरुन्नम-
त्पद्मकोशकरलीलया शशी ॥ ५६ ॥

**लक्ष्मणः**—( सकौतुकम् । ) अहो ।

ध्वान्तौघे शितिकण्ठकण्ठमहसि प्रामे प्रतीचीमुखं

---

**राब्धेरिति** । क्षीराब्धेः पयोधेर्लहरीषु तरङ्गेषु फेना इव धवलाः शुभ्राः, चन्द्रोपलेष्विन्दुकान्तमणिषु स्रवतां प्रवहतां पाथसां जलानाम् सीकरा बिन्दवः ते येषांत्यत इनिठनाविती निप्रत्ययः । तादृशाः, विकासिकुमुदक्रोडे विकचकैरवान्तःप्रदेशे रजसा परागेण पिञ्जराः पीतरक्ताः ( पीतरक्तस्तु पिञ्जर इति हैमः ) चकोराणां जीवंजीवानां चञ्चव एव गहनं कान्तारं तस्मिन्, पूर्वं छिन्नाः पश्चात्प्ररूढाः ( पूर्वकालैकेति समासः ) चकोरैः किरणचये प्राशितेऽप्यविच्छिन्नसन्तत्याकिरणप्ररूढत्वोक्तिः । चञ्चुपुटमीलने छिन्नास्तदुन्मीलने च प्ररूढा इत्याशयः । प्रियविप्रयुक्तानां स्ववल्लभविरहितानां रमणीनां सुन्दरीणां गात्रेऽङ्गे चमत्कुर्वन्तः उन्मादकत्वेन सन्तापकत्वेन च चमत्कृतिहेतुत्वं सुधांशोश्चन्द्रस्य कराः किरणा उन्मीलन्ति विकसन्ति । पर्यायालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५५ ॥ **बिभीषणः** । **शङ्करेति** । कमलिनीभिर्नलिनीभिरुन्नमनुद्गच्छन् पद्मकोश एव कमलकुड्मल एव करस्तस्य लीलया, शङ्करस्यार्धतनौ तनोरर्धे बद्धायाः सलग्नायाः पार्वत्याः कुङ्कुमाक्तः काश्मीरलिप्तः कुचकोरकः स्तनकुड्मलः तस्याऽऽकृतिरिवाकृतिर्यस्य तादृशः शशी इन्दुः सूच्यते प्रदर्श्यते । लोकेऽपि कराग्रमुन्नमय्य किमप्युच्चस्थितं वस्तु प्रदर्श्यते तथेति भावः । रूपकालङ्कारः । रथोद्धता वृत्तम् ॥ ५६ ॥ **लक्ष्मणः** । **ध्वान्तौघ इति** । शितिकण्ठस्य शङ्करस्य यः कण्ठः तस्य मह इव महस्तेजः वर्ण

---

१. एवमेतदित्यधिकः पाठः । २. ध्वान्ते वै इति पाठः ।

प्राचीमञ्चति । किं च दुग्धलहरीमुग्धे विधोर्धामनि ।
एतत्कोकचकोरशोकरभसम्लानप्रसन्नोल्लस-
द्दृक्पातोर्मिकदम्बचुम्बितमिव त्रैलोक्यमाभासते ॥ ५७ ॥

**रामः**---एवमेतत्[1] । इदानीं हि
शीतांशुस्फटिकालवालवलयद्रागुल्लसत्कौमुदी-
वल्लीनूतनपल्लवाञ्चितमिव[2] प्राप्य क्षणं ताम्रताम् ।
चञ्चन्मत्तचकोरचञ्चुघटनाच्छिन्नाग्रकाण्डस्रुत-[3]
क्षीरस्यन्दनिरन्तराप्लुतमिव श्वेतं वियद्भासते ॥ ५८ ॥

( पुनर्विलोक्य सकौतुकम् । ) वत्स लक्ष्मण,
पश्योदेति वियोगिनां दिनमणिः शृङ्गारदीक्षामणि-

---

इति यावत् यस्य तादृशे, नीलवर्णे इत्यर्थः । ( महस्तूत्सवतेजसोरित्यमरः ) ध्वान्तौघे तमोनिकरे प्रतीचीमुखं पश्चिमदिङ्मुखं प्राप्ते, किञ्च दुग्धलहर्य इव क्षीरतरंगा इव मुग्धं सुन्दर ( मुग्धस्तु सुन्दरे मूढे इति मेदिनी ) तस्मिन् विधोरिन्दोर्धामनि तेजसि ( धाम रश्मौ गृहे देहे इत्यमरः ) प्राचीं पूर्वदिशमञ्चति अलंकुर्वति सति, एतत् त्रैलोक्यं लोकत्रयं ( चतुर्वर्णादित्वात्स्वार्थे ष्यञ् ) कोकचकोराणां चक्रवाकजीवंजीवानां यथाक्रमं यौ शोकरभसौ दुःखहर्षौ ताभ्यां म्लानाः प्रसन्नाश्च या उल्लसद्दृक्पातोर्मयः उच्छलद्वीक्षणतरङ्गाः तासां कदम्बेन निकरेण चुम्बितमिव स्पृष्टमिवाऽऽभासते । चक्रवाकानां रात्रौ प्रियाविरहेण शोकः, चकोराणाञ्च चन्द्रिकाप्राप्त्या मोदः सुप्रसिद्धः । तमश्चन्द्रिकयोः सूर्यास्तम्लानचक्रवाकेन्दूदयप्रसन्नचकोरनेत्रकान्तित्वेनोत्प्रेक्षणादुत्प्रेक्षालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ५७ ॥ **रामः । शीतांशुरिति** । वियद्व्योम, शीतांशुरेव स्फटिकस्य तदाख्यापेलरयालवालवलयं आवापमण्डलं तत्र द्राक् त्वरितमुल्लसन्ती विलसन्ती या कौमुदी ज्योत्स्ना सैव वल्ली लता तस्या नूतनपल्लवैर्नवकिसलयैरञ्चितमिव मण्डितमिव क्षणं ताम्रतां प्राप्य चञ्चता चलता मत्तचकोराणां चञ्चुघटनाभिः चञ्चुमेलनैः छिन्नान्यग्राणि येषां तेभ्यः काण्डेभ्यः नालेभ्यः स्रुतस्य क्षीरस्य स्यन्देन द्रवेण निरन्तरं सान्द्रं यथा तथाऽऽप्लुतमिव आपूरितमिव श्वेतं विशदं भासते । रूपकोत्प्रेक्षानुप्रासालङ्काराः । शार्दूलविक्रीडितं वृत्तम् ॥ ५८ ॥ **पश्येति** । वियोगिनां प्रियावियुक्तानां

---

१. वत्सएवमेतदिति पा० । २. वाञ्चितेति पा० । ३. घटनच्छिन्नाग्रेति पाठः ।

प्रौढानङ्गभुजङ्गमस्तकमणिश्चण्डीशचूडामणिः
तारामौक्तिकहारनायकमणिः कंदर्पसीमन्तिनी-
काञ्चीमध्यमणिश्चकोरपरिषच्चिन्तामणिश्चन्द्रमाः ॥ ५९ ॥

लक्ष्मणः—एवमेतत्। अयमसौ

स्वैरं कैरवकोरकान्विदलयन्यूनां मनः खेदय-
न्नम्भोजानि निमीलयन्मृगदृशां मानं समुन्मूलयन्।
ज्योत्स्नां कन्दलयन्दिशो धवलयन्नम्भोधिमुद्वेलय-
न्कोकानाकुलयंस्तमः कवलयन्निन्दुः समुज्जृम्भते ॥ ६० ॥

---

दिनमणिः सूर्यः, सन्तापकत्वादिति भावः। शृङ्गारदीक्षायां शृङ्गारव्रते मणिः उत्तेजक इत्यर्थः। यथा मणिरग्नेर्दाहकत्वशक्तिमुत्तेजयति तथाऽयमपि शृङ्गारमिति भावः। प्रौढस्य प्रोद्दामस्यानङ्गभुजङ्गस्य मदनफणिनः मस्तकमणिः शिरोरत्नं तदुद्दीपक इत्यर्थः। चण्डीशस्य शङ्करस्य चूडामणिः शेखरभूषणं, तारामौक्तिकहारस्य नक्षत्रमुक्ताहारस्य नायकमणिः मध्यमहारत्नं, कन्दर्पसीमन्तिन्या रतेः काञ्चीमध्यमणि रशनामध्यरत्नं, चकोरपरिषदश्चकोरचक्रस्य चिन्तामणिः तदाख्यरत्नं तेषामभीप्सितदातृत्वादिति भावः, तादृशश्चन्द्रमा उदेति। वत्स लक्ष्मण पश्येति सम्बन्धः। मालारूपकयमकालङ्कारौ। शार्दूलविक्रीडितं वृत्तम् ॥५९॥ लक्ष्मणः। स्वैरमिति। असाविन्दुः कैरवाणां कुमुदानां कोरकान् कलिकाः विदलयान्विकासकन्, यूनां वियुक्ततरुणानां मनः खेदयन् मन्मथोद्दीपकत्वादिति भावः। अम्भोजानि कमलानि निमीलयन्संकोचकन्, मृगदृशां कुरङ्गाक्षीणां मानं ईर्ष्या तज्जनितकोपं वा। उक्तं च। पत्युरन्यप्रियासङ्गे दृष्टेऽथानुमिते श्रुते ॥ ईर्ष्यामानो भवेत्स्त्रीणामिति दर्पणे। स्त्रीणामीर्ष्याकृतः कोपो मानोऽन्यासङ्गिनि प्रिय इत्यन्यत्रोक्तेश्च। समुन्मूलयन्नुत्पाटयन्, ज्योत्स्नां चन्द्रिकां कन्दलयन्नङ्कुरयन् कन्दलं तु नवाङ्कुरे इति हेमचन्द्रः। दिशः काष्ठा धवलयन् विशदयन्, अम्भोधिं वारिधिमुद्वेलयन्नुन्मर्यदन्, चन्द्रोदयेऽब्धेरुद्वेलत्वं प्रसिद्धम्। कोकान्रथाङ्गानाकुलयन्व्यथयन् तेषां रात्रौ प्रियावियोगादिति भावः। तमः कवलयन्भक्षयन्नाशयन्नित्यर्थः। समुज्जृम्भते उदेति। समुच्चययमकानुप्रासालङ्काराः

---

१. मुद्वेलयन्वारिधीनिति पाठः।

**बिभीषणः**—सखे सुग्रीव, पश्य।

मयूखनखरत्रुटत्तिमिरकुम्भिकुम्भस्थलो-
च्छलत्तरलतारकाकपटकीर्णमुक्तागणः।
पुरंदरहरिद्दरीकुहरगर्भसुप्तोत्थित-
स्तुषारकरकेसरी गगनकाननं गाहते ॥ ६१ ॥

**सुग्रीवः**—सखे बिभीषण, पश्य।

यः श्रीखण्डतमालपत्रति दिशः प्राच्याः स्मरक्ष्मापतेः
पाण्डुच्छत्रति दन्तपत्रति वियल्लक्ष्मीकुरङ्गीदृशः।
केलिश्वेतसहस्रपत्रति रतेः किं च क्षपायोषितः
क्रीडाराजतसीधुपात्रति शशी सोऽयं जगन्नेत्रति ॥ ६२ ॥

---

शार्दूलविक्रीडितं वृत्तम् ॥ ६० ॥ **बिभीषण** । **मयूखेति** । मयूखाः किरणा एव नखरा नखास्तैः त्रुटद्भ्यः विशीर्यमाणेभ्यस्तिमिरकुम्भिकुम्भस्थलेभ्यः तमःकरिकटप्रदेशेभ्य उच्छलन्तीनामुद्गच्छन्तीनां तरलतारकाणां भास्वरनक्षत्राणां ( तरलो भास्वरे चले इति हैमः ) कपटेन व्याजेन कीर्णा विक्षिप्ता मुक्तागणा मौक्तिकचया येन तादृशः, तुषारकरः शीतकिरणश्चन्द्र इत्यर्थः। स एव केसरी मृगेन्द्रः, पुरंदरहरित इन्द्रदिशः प्राच्या इति यावत्। दरीकुहरस्य कन्दरगह्वरस्य ( कुहरं गह्वरे छिद्रे इति हैमः ) गर्भेऽन्तःप्रदेशे सुप्तोत्थितः पूर्वं सुप्तः पश्चादुत्थित इत्यर्थः। तथा सन्, गगनमन्तरिक्षमेव काननमरण्यं गाहते प्रविशति विचरति वा। रूपकापह्नुती अलङ्कारौ। पृथ्वी वृत्तम्। जसौ जसयला वसुग्रहयतिश्च पृथ्वी गुरुरिति लक्षणात् ॥ ६१ ॥ **सुग्रीवः**। **यः श्रीखण्डेति**। य इन्दुः प्राच्या दिशः पूर्वदिशः श्रीखण्डस्य चन्दनस्य यत्तमालपत्रं तिलकं तदिवाचरति, (सर्वप्रातिपदिकेभ्य इति क्विप्) ( तमालपत्रं तिलकं चित्रकाणि विशेषकमित्यमरः ) स्मरक्ष्मापतेर्मदनराजस्य पाण्डुच्छत्रमिव श्वेतातपत्रमिवाचरति एवमग्रेऽपि वियल्लक्ष्मीः स्वर्गसंपत्तिरेव कुरङ्गीदृक् मृगीदृक् अङ्गनेत्यर्थः। तस्या दन्तपत्रमिव कर्णभूषणमिवाचरति, रतेः कामपत्न्याः केलेः क्रीडायाः श्वेतसहस्रपत्रमिव सितकमलमिवाचरति, किञ्च क्षपा रात्रिरेव योषित् कामिनी तस्याः क्रीडायां क्रीडाया वा राजतं रूप्यमयं यत्सीधुपात्रं मद्यभाण्डं तदिवाचरति ( प्राणिरजतादिभ्य इति रजतशब्दादञ् ) सोऽयं शशी चन्द्रः जगन्नेत्रति जगतो नेत्रमिवाचरति। सकलप्रकाशकत्वादिति भावः। रूपकोपमायकमवृत्त्यनुप्रासा-

**रामः**—( निर्वर्ण्य । )

सितकिरणकपोलामालिमालोकयन्ती
मिहिरविरहतापव्याकुलां व्योमलक्ष्मीम् ।
रजनिरमलताराशीकरैः सिक्तमस्या-
परिमलयति गात्रं चन्द्रिकाचन्दनेन ॥ ६३ ॥

( पुनर्विमृश्य । स्वगतम् )

इन्दुरिन्दुरिति किं दुराशया
बिन्दुरेष पयसो विलोक्यते ।
नन्विदं विजयते मृगीदृशः
क्षामकोमलकपोलमाननम् ॥ ६४ ॥

( पुनः सीता प्रत्यपवार्य । )

तन्वि त्वद्वदनस्य विभ्रमलवं लावण्यवारांनिधे-
रिन्दुः सुन्दरि दुग्धसिन्धुलहरीबिन्दुः कथं विन्दतु ।

---

लङ्काराः । शार्दूलविक्रीडितं वृत्तम् ॥ ६२ ॥ **रामः । सितेति** । रजनिर्निशा, मिहिरस्य भास्करस्य विरहेण यस्तापस्तेन व्याकुलां व्यग्रा अत एव सितकिरण इवेन्दुरिव कपोलौ गण्डौ यस्याः अनेनाप्रस्तुतपरिस्फूर्तिर्दर्शिता, पक्षे सितकिरणश्चन्द्रः कपोले कपोलो वा यस्यास्तादृशीं आलिं सखीं व्योमलक्ष्मीं गगनश्रियं आलोकयन्ती सती अमलतारा: स्वच्छनक्षत्राण्येव शीकराः अम्बुकणास्तैः सिक्तमस्या व्योमलक्ष्म्याः गात्रमङ्गं चन्द्रिकैव चन्दन तेन परिमलयति आमोदयति । रूपकसमासोक्ती अलङ्कारौ । मालिनी वृत्तम्॥६३॥ **इन्दुरिति** । दुराशया दुष्टेच्छया इन्दुरिन्दुरिति चन्द्रचन्द्र इति पयस उदकस्य बिन्दुरेव "चन्द्रस्योदकरूपत्वादिति भाव· । उक्तञ्च **भगवद्गीतायाम्** । पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मक इति " । किं विलोक्यते मयेति शेषः । इन्दुविलोकनाभावे निर्वाहं दर्शयति इदं मृगीदृशः सीतायाः क्षामौ कृशौ अत एव कोमलौ कपोलौ गण्डौ यस्मिंस्तत् तादृशमाननं मुखं ननुरवधारणार्थः । मुखमेवेत्यर्थः । विजयते अत्युत्कर्षेण वर्तते।मुखस्य चन्द्रातिशायित्वात्किं चन्द्रावलोकनेनेति भाव· । प्रतीपालङ्कारः । रथोद्धता वृत्तम् ॥ ६४॥ **तन्वीति**।भो तन्वि सुन्दरि सीते दुग्धसिन्धोः क्षीरसागरस्य लहर्यास्तरङ्गस्य बिन्दुः शीकरः इन्दुः लावण्यवारांनिधेः सौन्दर्यसागरस्य-

---

१. तिमिरेति पाठः । २. श्यामेति पा० ।

उत्कल्लोलय लोचने क्षणमयं शीतांशुरालम्बता-
मुन्मीलन्नवनीलनीरजवनीखेलन्मरालश्रियम् ॥ ६५ ॥

**सीता**—( लज्जां नाटयति । विलोक्य सहर्षम् । ) अहो, कहमिमो उम्मीलिदो जेव्व ।

मुउलीकिदारविन्दो माणवईमाणवारणमइन्दो ।
तिहुअणणअणारविन्दो रअणीमुहचन्दणो चन्दो ॥ ६६ ॥

**रामः**—सखे सुग्रीव, पश्य पश्य ।

इन्दोरस्य त्रियामायुवतिकुचतटीचन्दनस्थासकस्य
व्योमश्रीचामरस्य त्रिपुरहरजटावल्लरीकोरकस्य ।

---

१. अहो, कथमयमुन्मीलित एव ।
मुकुलीकृतारविन्दो मानवतीमानवारणमृगेन्द्रः ।
त्रिभुवननयनारविन्दो रजनीमुखचन्दनश्चन्द्रः ॥

---

त्वद्वदनस्य त्वन्मुखस्य विभ्रमलवं विलासलेशं कथं विन्दतु लभेत । दुग्धलवणयोगस्य निषेधादित्यपि कविगूढाशयः । लोचने नेत्रे उत्कल्लोलयोत्तरङ्गयाऽयं शीतांशुश्चन्द्रः उन्मीलतां विकसतां नवनीलनीरजानां नूतनेन्दीवराणां वन्यामुपवने खेलतः क्रीडतो मरालस्य हंसस्य श्रियं शोभां क्षणमालम्बताम् आश्रयताम् । विषमनिदर्शनालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ६५ ॥ **सीता ।** उन्मीलित एव उदित एव । **मुकुलीकृतेति** । मुकुलीकृतानि सङ्कुचितानि अरविन्दानि कमलानि येन स तथा मानवतीनां मानिनीनां मानवारणस्य मानगजस्य मृगेन्द्रः सिंहः त्रिभुवनस्य, तत्स्थप्राणिनामित्यर्थः । नयनारविन्दो नेत्रकमल ( वा पुंसि पद्मं नलिनमरविन्दं महोत्पलमित्यमरादरविन्दशब्दस्य पुंस्त्वम् ) रजनीमुखस्य प्रदोषवेलायाश्चन्दनश्चन्दनस्थासकं इत्यर्थः चन्द्रः कथमुन्मीलित एवेति पूर्ववाक्येन सम्बन्धः । रूपकालङ्कारः ॥ ६६ ॥ **रामः । इन्दोरिति** । त्रियामा रात्रिरेव युवतिस्तस्याः कुचतट्यां स्तनप्रदेशे चन्दनस्थासकस्य मलयजतिलकस्य, व्योमश्रियो गगनलक्ष्म्याश्चामरस्य, त्रिपुरहरस्य शम्भोर्जटा एव वल्लर्यस्तासां कोरकस्य कलिकारूपस्य

---

१. विलोचने इति पाठः।

कंदर्पक्षोणिपालस्फटिकमणिगृहस्यैतदाखण्डलाशा-
नासामुक्ताफलस्य स्थगयति जगतीं कोऽपि भासां विलासः ॥६७॥

सुग्रीवः—अये रघुनाथ, पुनरुक्तमयमाचेष्टते चन्द्रमसः किरण-विलासः ।

रामः—कथमिव ।

सुग्रीवः—नन्वत एव

कर्पूरादपि कैरवादपि दलत्कुन्दादपि स्वर्णदी-
कल्लोलादपि केतकादपि चलत्कान्तादृगन्तादपि ।
दूरोन्मुक्तकलङ्कशंकरशिरःशीतांशुखण्डादपि
श्वेताभिस्तव कीर्तिभिर्धवलिता सप्तार्णवा मेदिनी ॥ ६८ ॥

रामः—अलं तुच्छप्रायजल्पितेन ।

बिभीषणः—देव, तुच्छप्रायमेव जल्पितं सुग्रीवेण । यदुक्तं मेदिनी धवलितेति । ननु त्रिलोकीतलमेव धवलितमिति वक्तव्यम् । संप्रति हि

समुन्नतघनस्तनस्तबकचुम्बितुम्बीफल-
क्वणन्मधुरवीणया विबुधलोकवामभ्रुवा ।
त्वदीयमुपगीयते हरकिरीटकोटिस्फुर-
त्तुषारकरकन्दलीकिरणपूरगौरं यशः ॥ ६९ ॥

---

कंदर्पक्षोणिपालस्य मदनभूपस्य स्फटिकमणिगृहस्य, आखण्डलाशायाः पूर्वदिशाया नासामुक्ताफलस्य नासिकामौक्तिकस्य, इन्दोश्चन्द्रस्य भासां कान्तीना कोप्यनिर्वचनीयो विलासो जगतीं स्थगयति संवृणोति । माला-रूपकवृत्त्यनुप्रासालङ्कारौ । स्रग्धरा वृत्तम् ॥ ६७ ॥ सुग्रीवः । पुनरुक्तमाचे-ष्टते जगत्स्थगनरूपचेष्टायाः पुनरावृत्तिं करोतीति भाव ।सुग्रीवः। कर्पूरादिति । दलत्कुन्दात् विकसत्कुन्दपुष्पात् स्वर्णदी भागीरथी । दृगन्तः कटाक्षः। दूरोन्मुक्त-कलङ्कः निष्कलङ्क इत्यर्थः । शेषं सुगमम् । शार्दूलविक्रीडितं वृत्तम् ॥ ६८ ॥ बिभीषणः । तुच्छप्रायं असारभूयिष्ठं । समुन्नतेति । समुन्नतयोस्तुङ्गयोर्घ-नस्तनस्तबकयोः दृढकुचकुड्मलयोश्चुम्बि चुम्बनशीलं तुम्बीफलमलाबूफलं यस्यास्तादृशी क्वणन्ती शब्दायमाना मधुरवीणा यस्याः तया, विबुधलोक-वामभ्रुवा स्वर्गकामिन्या हरकिरीटस्य रुद्रमुकुटस्य कोटावग्रे स्फुरन्ती तुषार-करस्य कन्दली चन्द्र कलेत्यर्थः । तस्याः किरणपूर इव मयूखचय इव गौरं सितं त्वदीयं त्वत्सम्बन्धि यशः उपगीयते वर्ण्यते । अथवा वीणयेति

---

१. मिरमाचष्टे इति पाठः ।२. मसृणवीणयेति पाठः । २. वामेति पाठः ।

रामः—अयि लङ्केश्वर, भवानपि किष्किन्धानाथमेवानुगतः ।
( पुनर्विलोक्य सहर्षं सुग्रीवं प्रति । )

संरम्भोद्रिक्तनक्तंसमयदशमुखोच्चण्डदोर्दण्डहेला-
कैलासः सप्तलोकीजयमुदितमनोजन्मवादित्रशङ्खः ।
लोलाक्षीगण्डपालीलवणिमजलधेरुद्गतः फेनपिण्डः
पश्य व्योमावकाशं विशति विरहिणां दत्तशङ्कः शशाङ्कः ॥ ७० ॥

( निर्वर्ण्य । स्वगतम् । )

अयं नेत्रादत्रेरजनि रजनीवल्लभ इति
भ्रमः कोऽयं प्रज्ञापरिचयपराधीनमनसाम् ।
सुधानामाधारः स खलु रतिबिम्बाधरसुधा-
रसासेकासिक्तादजनि नयनात्पुष्पधनुषः ॥ ७१ ॥

---

करणे तृतीया । उपमाछेकवृत्त्यनुप्रासालङ्काराः । पृथ्वी वृत्तम् ॥६९॥ **राम** । लङ्केश्वर बिभीषण किष्किन्धानाथं सुग्रीवं अनुगतोऽनुसृतः॥**संरम्भेति**। संरम्भेण मदेनोद्रिक्त उद्धतो यो नक्तंसमय एव रात्रिकाल एव दशमुखो रावणस्तस्योच्चण्डयोः प्रोद्दामयोर्दोर्दण्डयोर्भुजदण्डयोः हेलायाः ( यां वा ) कैलासो रजताचलः, सप्तलोक्या लोकसप्तकस्य जयेन मुदितस्य हृष्टस्य मनोजन्मनो मदनस्य वादित्ररूपशङ्खः, लोलाक्षीणां तरललोचनानां गण्डपाल्याः कपोलप्रान्तस्य यः लवणिमजलधिः सौन्दर्यसागरस्तस्मादुद्गत उद्भूतः फेनपिण्डः डिण्डीरसङ्घः ( पिण्डो वृन्दे जपापुष्प इति हैमः ) विरहिणां वियुक्तानां दत्ता शङ्का त्रासो येन ( शङ्का त्रासे वितर्के चेति मेदिनी ) तादृशः शशाङ्कः इन्दुः, व्योमावकाशमम्बरप्रदेशम् विशति पश्य । रूपकाछेकवृत्त्यनुप्रासालङ्कारा च । स्रग्धरा वृत्तम् ॥७०॥ **अयमिति** । प्रज्ञापरिचये विवेचनाभ्यसने पराधीनं परतन्त्रं मनश्चेतो येषां तेषामपि अतिविवेकिनामपीत्यर्थः। अयं रजनीवल्लभो निशापतिरत्रेस्तदाख्यर्षेर्नेत्रादजनि जात इति कोयं भ्रमः कीदृशी भ्रान्तिः । रतेः कामपत्न्याः बिम्बमिव योऽधरस्तस्य सुधारसासेकेनामृतद्रवसेचनेन सिक्तात्पुष्पधनुषः कामस्य नयनात्स चन्द्रः अजनि, अतः सुधानाममृतानामाधार आश्रयः । अन्यथाऽमृतकिरणत्वासम्भवः । कारणेऽत्रियनेऽमृतसम्बंधाभावाद्भ्रम इति भावः । हेत्वपह्नुतिरलङ्कारः । स एव युक्तिपूर्वश्चेदुच्यते हेत्वपह्नुतिरितिलक्षणात् । शिख-

---

१. नाथमतेति पाठः । २. सेकास्निग्धादिति पाठ ।

**लक्ष्मणः**—आर्ये जानकि, पश्य पश्य।

आनन्दं कुमुदादीनामिन्दुः कन्दलयन्नयम्।
लङ्घयत्यम्बराभोगं हनूमानिव सागरम् ॥ ७२ ॥

**सीता**—अये सुलक्खण लक्खण, सो उण दाणीं कहिं रहु-उलकुडुम्बसन्तावसमणचन्दणो पवणणन्दणो।

**लक्ष्मणः**—आर्ये, स एष रामचन्द्रेण बन्धुजनमानन्दितुमयोध्यायां प्रहितः।

**सीता**—तां अह्मेहिं किति विलम्बीअदि।

( रामो बिभीषणमुखमालोकते। )

**बिभीषणः**— ( निर्गत्य प्रविश्य च। ) इदं तत्पुष्पकाभिधानं विमानरत्नमारुह्यताम्।

( सर्वे विमानारोहणं नाटयन्ति। )

**रामः**— ( सकौतुकम्। ) अये, तदिदं विमानरत्नं यत्किल त्रिभुवनैकवीरः कुबेरानुजः कुबेरादाजहार।

**लक्ष्मणः**—( सामर्षम्। ) कथमयं किष्किन्धामाहिष्मतीपतिभ्याम् समभागविभक्तवीरलक्ष्मीकोऽपि त्रिभुवनैकवीर इति व्यपदिश्यते।

---

१. अये सुलक्षण लक्ष्मण, स पुनरिदानीं क्व रघुकुलकुटुम्बसंतापशमनचन्दनः पवननन्दनः।

१. तदस्माभिः किमिति विलम्ब्यते।

---

रिणी वृत्तम् ॥७१॥ **लक्ष्मणः**। **आनन्दमिति**। अयमिन्दुः, हनूमान् सागरमिव कुमुदादीनां तदाख्यकपिप्रभृतीनां पक्षे कैरवादीना आनन्दं हर्षं विकासं च कन्दलयन्नुत्पादयन् सन् अम्बराभोगं व्योमविस्तारं लङ्घयत्यतिक्रामति। उपमालङ्कारः। श्लोकश्छन्दः ॥ ७२ ॥ **लक्ष्मणः**। बन्धुजनं भरतादिकं।**रामः**। कुबेरानुजो रावणः। **लक्ष्मणः**। किष्किन्धा वालिनगरी, माहिष्मती कार्तवीर्यराजधानी तयोः पतिभ्यामर्थाद्वालिकार्तवीर्याभ्या समभागं यथा स्यात्तथा विभक्ता वीरलक्ष्मीर्यस्य। उभाभ्यामपि जितत्वादिति भावः।

---

१. विभक्तलक्ष्मीकोपीति पाठः।

राम---( विहस्य। वत्स, एवमेतत्।

तादृक्कठोरभुजयन्त्रनिपीडनेन
निःशब्दतामुपगतैर्दशकण्ठकण्ठैः।
यत्कीर्तिघोषणमकारि चतुःसमुद्र-
वेलासु किं स वचसां विषयः कपीन्द्रः॥ ७३॥

अपि च।

कोपप्रदीप्तनिजलोचनदीपपङ्क्ति-
निर्भिन्नसान्द्रतिमिरे स दशाननोऽपि।
काराकुटीरकुहरे वसति स्म यस्य
सोऽप्येष हैहयपतिर्विषयो न वाचाम्॥ ७४॥

किंतु परिभावय वत्स,

यस्य द्राक्करवालकृत्तशिरसः कण्ठालवालस्थलीं

---

व्यपदिश्यते व्यवह्रियते। **रामः**। **तादृगिति** तादृशोऽनिर्वचनीयस्य कठोरस्य कठिनस्य भुजयन्त्रस्य निपीडनेन निःशब्दतां मूकतां उपगतैः प्राप्तैर्दशकण्ठकण्ठै रावणकण्ठैश्चतुर्णां तत्संख्याकानां समुद्राणां वेलासु सीमासु यस्य वालिनः कीर्तिघोषणं यशःख्यापनम् अकारि कृतम्, स कपीन्द्रो वाली वचसां वाणीनां विषयः किम् नैवेत्यर्थः। यो वाली रावणं क्रन्दन्तमपि कक्षपुटे कृत्वा चतुःसागरवेलासु चचारेति ऐतिह्यमतो महापराक्रमो वालीति भावः। विभावनालङ्कारः। वसन्ततिलका वृत्तम्॥७३॥ **कोपेति**। स दशाननोपि लोकत्रयविजयी रावणोपि कोपेन प्रदीप्तानि निजलोचनानि स्वनयनान्येव दीपपङ्क्तिर्दीपावलिस्तया निर्भिन्नं नाशितं सान्द्रतिमिरं गाढान्धकारो यस्मिन्, तादृशे यस्य कार्तवीर्यस्य काराकुटीरस्य बन्धनालयस्य ( कुटीशमीशुण्डेति रप्रत्ययः ) कुहरे गर्भे अथवा काराकुटीर एव कुहरं तस्मिन्वसति स्म अवसत् (लट् स्मे इति लट्) स एष हैहयपतिरपि कार्तवीर्योऽपि वाचां न विषयः वर्णयितुमशक्य इति भावः। काव्यलिङ्गालङ्कारः। वसन्ततिलका वृत्तम्॥ ७४॥ परिभावय चिन्तय। **यस्येति**। हरो रुद्रः द्राक् सपदि करवालेन कृपाणेन कृत्तानि छिन्नानि शिरांसि मूर्धानो यस्य रावणस्य क-

---

१. नैवमेतदिति पा०। २. दीपवल्लीति पाठः। ३. परिभावय वत्सेति पाठः।

चूडाचन्द्रमसं निपीड्य निबिडं सिञ्चन्सुधानिर्झरैः ।
स्वां मेने शशिखण्डमण्डन इति ख्याति कृतार्थां हरः
पन्थानं दशकन्धरः स च कथंकारं गिरां गाहते ॥ ७५ ॥

( निर्वर्ण्य । ) अये, किमुच्यतेऽस्य खलु त्रिकूटगिरिशिखरकण्ठीरवस्य दशकण्ठस्य लोकोत्तराणि चरितानि ।

यद्दोःशायिनि चन्द्रशेखरगिरौ भारावतारोन्नम-
न्नागाधीशफणावलीमणिरुचां पूरे समुन्मीलति ।
जातास्तुल्यमकालबालतपनाताम्राश्चतस्रो दिशो
देवस्यापि रुषा तुषारकिरणोत्तंसस्य तिस्रो दृशः ॥ ७६ ॥

लक्ष्मणः—आर्य,

एष मे मनसि भासतेऽधुना
मूर्तिमानिव मनोरथो रथः ।

---

ण्ठा एवालवालं तस्य स्थलीं प्रदेशम्, चूडाचन्द्रमसं शिरःस्थितेन्दुं निबिडं यथा तथा निपीड्य सुधानिर्झरैरमृतप्रवाहैः सिञ्चन् सन् स्वां निजां शशिखण्डमिन्दुशकलं मण्डनं भूषणं यस्य तादृश इति ख्यातिं प्रसिद्धिं कृतार्थां सफलां मेने । स्वपदार्पितकृत्तरावणशिरःसन्धाने स्वशिरःस्थितशशिसुधाया उपयोगादिति भावः । स च दशकन्धरस्तादृशो रावणः कथङ्कारं कथम् ( अन्यथैवंकथमिति कृञो णमुल् ) गिरां वाचां पन्थानं सरणिं गाहते नैवेत्यर्थः । काव्यलिङ्गमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ७५ ॥ कण्ठीरवः सिंहः । यद्दोरिति । चन्द्रशेखरगिरौ कैलासे, यस्य रावणस्य दोष्णु शेते तच्छीले सति भारस्यावतारेणावतरणेन उन्नमन्तीनामुद्गच्छन्तीनां नागाधीशफणानां शेषफणानामावलेः पङ्क्तेर्मणिरुचां रत्नकान्तीनां पूरे चये समुन्मीलति प्रसर्पति सति, चतस्रस्तत्सङ्ख्याका दिशः ककुभः,रुषा क्रुधा तुषारकिरणः चन्द्र उत्तंसः शिरोभूषणं यस्य तस्य देवस्यापि शङ्करस्यापि तिस्रो दृशो नयनानि तुल्यं समकालं यथा तथा अकालेऽसमये यो बालतपनो बालसूर्यः तेन आताम्रा इव पक्षे बालतपन इवाताम्राः जाताः । महादेवेनाप्यधिष्ठितस्य कैलासस्योत्पाटनादस्य वीर्यातिशयो ध्वन्यते । तुल्ययोगितालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥७६॥ लक्ष्मणः । एष इति । आर्य एष रथो विमानरूपः मूर्तिमान्सशरीरो मनोरथ

---

१. दशखण्ड इति पा० । २. अयि इति पा० । ३. किमप्यस्येति पा० ।

नास्ति नो यदधिरोहलीलया
दूरमागतवतामपि श्रमः ॥ ७७ ॥

**रामः**—एवमेतत् । तथा हि ।

उल्लङ्घ्य नीरधिमतीत्य च दण्डकानि
नद्यौ च मेकलकलिन्दसुते व्यतीत्य ।
प्राप्ताः शिखण्डिशतमण्डितशाखिखण्ड-
मेते वयं शिखरिणं ननु चित्रकूटम् ॥ ७८ ॥

**सीता**—( तिर्यग्विलोक्य । ) अहह कलिन्दणन्दिणि, सच्चप्पसादासि जं पुणोवि णिअकुडुम्बस्स दिण्णदंसणासि ।

**रामः**—अयि, तदिदं निर्मुक्तविरोधश्वापदं भगवतो भारद्वाजस्याश्रमपदम् ।

**लक्ष्मणः**—एवमेतत् । अत्र हि

१. अहह कलिन्दनन्दिनि, सत्यप्रसादासि यत्पुनरपि निजकुटुम्बस्य दत्तदर्शनासि ।

इव मे मनसि अधुना साम्प्रतम् भासते भाति । तत्र हेतुं दर्शयति । यस्मिन्विमाने अधिरोहः आरोहणं तस्य लीलया विलासेन दूरमागतवतामपि नोऽस्माकम् श्रमो ग्लानिर्नास्ति । काव्यलिङ्गोत्प्रेक्षालङ्कारौ । रथोद्धता वृत्तम् ॥ ७७॥ **रामः** । **उल्लङ्घ्येति** । एते वयं नीरधिं सागरमुल्लङ्घ्य दण्डकानि तदाख्यारण्यानि चातीत्यातिक्रम्य मेकलकलिन्दौ तदाख्याद्री तयोः सुते कन्यके नर्मदायमुने इत्यर्थः व्यतीत्य व्यतिक्रम्य शिखण्डिनां मयूराणां शतेन शतपदं बहुत्वलक्षकं बहुमयूरैरित्यर्थः । मण्डितं भूषितं शाखिखण्डं वृक्षकदम्बं यस्मिंस्तादृशं चित्रकूटं शिखरिणं गिरिं प्राप्ता ननु आगता एवेत्यर्थः । वृत्त्यनुप्रासालङ्कारः । वसन्ततिलका वृत्तम् ॥७८॥ **सीता** । अहहेत्यद्भुते । सत्यः प्रसादोऽनुग्रहो यस्यास्तादृशी । **रामः** । निर्मुक्तस्त्यक्तो विरोधो जातिद्वेषो यैस्तादृशाः श्वापदा व्याघ्रादिवनचरपशवो यस्मिन्, भारद्वाजस्य तदाख्यर्षेराश्रमपदमाश्रमस्थानम् ( व्याघ्रादयो वनचराः पशवः श्वापदाः स्मृता इत्यभिधानरत्नमाला ) ।

१. खण्डितेति पाठः । २. निर्मुक्तविरोधमधुरश्वेति पा० ।

व्याजृम्भमाणवदनस्य हरेः करेण
कर्षन्ति केसरसटा कलभाः किलैके ।
अन्ये च केसरिकिशोरकपीतमुक्तं
दुग्धं मृगेन्द्रवनितास्तनजं पिबन्ति ॥ ७९ ॥

अपि च ।

क्रीडन्माणवकाङ्घ्रिताडनशतैरुज्जागरस्य क्षणं
शार्दूलस्य नखाङ्कुरेषु कुरुते कण्डूविनोदं मृगः ।
चञ्चच्चण्डशिखण्डितुण्डघटनानिर्मोकनिर्मोचितः
किञ्चायं पिबति प्रसुप्तनकुलश्वासानिलं पन्नगः ॥ ८० ॥

**रामः**—अये, कथमयं संप्राप्त एव चक्रवाकरमणीसंरम्भसमयः प्रभातसमयः ! तथा हि ।

एते केतकधूलिधूसररुचः शीतद्युतेरंशवः
प्राप्ताः संप्रति पश्चिमस्य जलधेस्तीरं जराजर्जराः ।

---

**व्याजृम्भमाणेति** । अत्राश्रमे एके केचित्कलभाः करिशावकाः करेण शुण्डया व्याजृम्भमाणं व्यादीयमानं मुखं यस्य तस्य हरेः सिंहस्य सतोऽपि (षष्ठी चानादरे इति षष्ठी) केसरसटाः केसरवृन्दान् कर्षन्ति । विरोधे इदं न संभवेदिति भावः । अन्ये च कलभा केसरिकिशोरकेण सिंहबालेन आदौ पीतं पश्चान्मुक्तं च मृगेन्द्रवनितायाः सिंह्याः स्तनजं दुग्धं पिबन्ति । विशेषोक्तिरलङ्कारः । वसन्ततिलका वृत्तम् ॥ ७९ ॥ **क्रीडदिति** । मृगः कुरङ्गः, क्रीडतां विहरतां माणवकानां बालकानां अङ्घ्रिताडनशतैः पदप्रहारशतैरुज्जागरस्य प्रबुद्धस्य शार्दूलस्य व्याघ्रस्य नखाङ्कुरेषु क्षणं कण्ड्वाः विनोदं यापनं कुरुते, किञ्च। अयं पन्नगः सर्पः चञ्चत् सञ्चलत् यच्चण्डमुग्रं शिखण्डितुण्डं मयूराननं तस्मिन्या घटना संमेलनं तया निर्मोकात्कञ्चुकात् निर्मोचितस्त्याजितः सन् प्रसुप्तस्य नकुलस्य बभ्रोः श्वासानिलं श्वासमारुतं पिबति । व्याघ्रहरिणयोर्नकुलसर्पयोर्मयूरसर्पयोश्च नैसर्गिको विरोधः सुप्रसिद्धः, स च नात्र दृश्यते इति भावः । विशेषोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८० ॥ **रामः** । चक्रवाकरमण्याश्चक्रवाक्याः संरम्भसमयः औत्सुक्यकालः । प्रभाते चक्रवाक्याः स्वप्रियसंयोगादिति भावः । **एत इति** । केतक्या धूलिरिव रज इव धूसरा रुग् येषान्ते तथा, एते शीतद्युतेरिन्दोरंशवः किरणाः संप्रति अधुना जरया

अप्येते विकसत्सरोरुहवनीदृक्पातसंभाविताः
प्राचीरागमुदीरयन्ति तरणेस्तारुण्यभाजः कराः ॥ ८१ ॥

**लक्ष्मणः ।** ( सकौतुकम् । )

सद्यः संघटमानकोकमिथुनव्याजेन पीनस्तन-
द्वन्द्वव्यञ्जितयौवनोज्ज्वलरुचो निर्माय दिक्कन्यकाः ।
दुर्दैवाक्षरमालिकामिव झगित्याकृष्य भृङ्गावली
लक्ष्मीमम्बुजिनीजनस्य तनुते देवस्त्विषामीश्वरः ॥ ८२ ॥

**सुग्रीवः**—बिभीषण, पश्य पश्य ।

उन्मीलन्ति निशानिशाचरवधूनिर्वासनामान्त्रिकाः
सायं सालससुप्तपङ्कजवनप्रोद्बोधवैतालिकाः ।
फुल्लत्पङ्कजकोशगर्भकुहरप्रोद्भूतभृङ्गावली-
झाङ्कारप्रणवोपदेशगुरवस्तीव्रद्युतेरंशव-

---

जर्जरा जीर्णाः सन्तः पश्चिमस्य पश्चिमदिग्भवस्य जलधेः समुद्रस्य तीरं कूलं प्राप्ताः गता । तरणेः सूर्यस्यैते करा अपि मयूखा अपि विकसतामुन्मीलताम् सरोरुहाणां वारिजानां वन्य एव दृक्पाताः कटाक्षाः पक्षे सरोरुहवन्य इव दृक्पातास्तैः सम्भाविताः संमानितास्तारुण्यभाजः प्रौढाः सन्तः प्राच्याः पूर्वदिशो रागं रक्तिमानं प्रणयं चोदीरयन्ति आविष्कुर्वन्ति । समासोक्तिरलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८१ ॥ **लक्ष्मणः । सद्य इति ।** त्विषामीश्वरो देवः सूर्य इत्यर्थः । सद्यः सपादि सङ्घटमानानां संयुज्यमानानां कोकमिथुनानां व्याजेन मिषेण पीनस्तनद्वन्द्वैः पीवरकुचयुग्मैः ( द्वन्द्वं रहस्यमर्यादेति निपातितः ) व्यञ्जितं प्रकटितं यद्यौवनं तेनोज्ज्वला रुक्कान्तिर्यासां ताः दिश एव कन्यकाः कुमारीर्निर्मायोत्पाद्य, दुर्दैवाक्षरमालिकामिव दुर्भाग्यवर्णावलीमिव भृङ्गावलीं भ्रमरश्रेणीं झगिति द्राक् आकृष्य अम्बुजिनीजनस्य नलिनीखण्डस्य लक्ष्मीं शोभां तनुते । अपह्नुतिरूपकालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ८२ ॥ **सुग्रीवः । उन्मीलन्तीति ।** निशा रात्रिरेव निशाचरवधू राक्षसी तस्या निर्वासनाया निरसने मन्त्रेण जयन्ति मान्त्रिकाः ( तेन दीव्यतीत्यनेन ठक् ) सायं सालसं यथा स्यात्तथा सुप्तस्य निमीलितस्येत्यर्थः । पङ्कजवनस्य कमलकदम्बस्य प्रोद्बोधे वैतालिकाः स्तुतिपाठकाः, फुल्लता विकसतां पङ्कजकोशानां पद्मकुड्मलानां गर्भकुहरेभ्य उदरदरीभ्यः प्रोद्भूतायाः प्रादुर्भूताया भृङ्गावल्या भ्रमरवृन्दस्य झाङ्कार एव प्रणव ओङ्कारस्तस्योपदेशे गुरवः शिक्षकास्तादृशास्तीव्रद्युतेः सूर्यस्यांशवो

**बिभीषणः**—एवमेतत् । तथा हि ।

आयान्त्या दिवसश्रियः पदतलस्पर्शानुभावादिव
व्योमाशोकतरोर्नवीनकलिकागुच्छः समुज्जृम्भितः[1] ।
आतन्वन्नवतंसविभ्रममसावाशाकुरङ्गीदृशा-
मुन्मीलत्तरुणप्रभाकरकरस्तोमः समुद्भासते ॥ ८४ ॥

**रामः**—प्रिये जानकि,

एतत्तर्कय चक्रवाकसुदृशामाश्वासनादायिनः
प्रौढध्वान्तपयोधिमग्नजगतीदत्तावलम्बोत्सवाः ।
दीप्तांशोर्विकसन्ति दिङ्मृगदृशां काश्मीरपङ्कोदक-
व्यात्युक्षीचतुराः सरोरुहवनश्रीकेलिकाराः कराः ॥ ८५ ॥

---

मयूखा उन्मीलन्ति प्रादुर्भवन्ति । मालारूपकालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥८३॥ **बिभीषणः। आयान्त्या इति** । आयान्त्या आगच्छन्त्या दिवसश्रियो वासरलक्ष्म्याः पदतलस्य स्पर्शानुभावात्स्पर्शप्रभावात्समुज्जृम्भित उद्गत व्योमैवाशोकतरुस्तस्य नवीनकलिकानां नूतनकोरकाणां गुच्छ इव स्तबक इवाऽसौ उन्मीलत उदयमानस्य तरुणप्रभाकरस्य करस्तोमो मयूखनिकर आशा दिश एव कुरङ्गीदृशः मृगीदृशस्तासामवतंसस्य शिरोभूषणस्य विभ्रमं भ्रान्तिं विलासं वा आतन्वन्कुर्वन्सन् समुद्भासते । उत्प्रेक्षालङ्कारः। शार्दूलविक्रीडितं वृत्तम् ॥८४॥ **रामः । एतदिति** । चक्रवाकसुदृशां कोकपत्नीनामाश्वासनादायिन आश्वासका इत्यर्थः । प्रौढध्वान्तमेव गाढतम एव पयोधिः सागरस्तस्मिन्मग्नाया जगत्या लोकस्य दत्तौ अवलम्बोत्सवौ यैस्तादृशाः प्रकाशकत्वादिति भावः । दिङ्मृगदृशां दिङ्नारीणां काश्मीरपङ्कोदकस्य कुङ्कुमजलस्य व्यात्युक्ष्यामन्योन्यसेचनक्रीडायाम् चतुराः कुशलाः । युगपत्सर्वदिशामरुणीकरणात् । सरोरुहवनश्रियः कमलवनलक्ष्म्याः केलिं क्रीडां कुर्वन्तीति तथा ( कर्मण्यणित्यण् ) तेषां विकासकत्वात्, दीप्तांशोस्तिग्मरश्मे करा गभस्तयः विकसन्ति एतत्तर्कय । रूप-

---

१. समुज्जृम्भते इति पाठः ।

( अपवार्य । ) पश्य पश्य ।

शिथिलयति सरागो यावदर्को नलिन्या
कमलमुकुलनीवीग्रन्थिमुद्रां करेण ।
प्रविकसदलिमालाकैतवात्तावदस्याः
स्फुटमुदयति काञ्चीमध्यनीलाश्मरश्मिः ॥ ८६ ॥

सीता—( विहस्य विलोक्य च ।) [१]कहं इमो उम्मीलिदो जेव्व ।

पुव्वगिरिपम्मरायो पअडीकिदणअणशीअलसहाओ ।
कुङ्कुमकिदअङ्गराओ णलिणीजणवल्लहो देवो ॥ ८७ ॥

रामः—( विहस्य । ) अये जानकि, पश्य ।

तरलतरतरङ्गभङ्गहेला
बहलविलासविलोलहंसमाला ।

१. कथमयमुन्मीलित एव ।
पूर्वगिरिपद्मरागः प्रकटीकृतनयनशीतलस्वभावः ।
कुङ्कुमकृताङ्गरागो नलिनीजनवल्लभो देवः ॥

कालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ८५ ॥ **शिथिलयतीति** । अर्कः सूर्यः यावत् नलिन्याः कमलिन्याः कमलमुकुलमेव नीविग्रन्थिमुद्रा तां करेण रश्मिना हस्तेनेति ध्वनिः शिथिलयति तावत् प्रविकसदलिमालाकैतवात्प्रसरद्भमरःपङ्क्तिमिषात् अस्याः नलिन्याः काञ्च्या मध्ये यो नीलाश्मा नीलरत्नं तस्य रश्मि-कान्तिः स्फुटं प्रव्यक्तं यथा तथा उदयति प्रादुर्भवति । समासोक्त्यपह्नुत्यलङ्कारौ। मालिनी वृत्तम् ॥ ८६ ॥ **सीता । पूर्वगिरीति** । पूर्वगिरेरुदयाचलस्य पूर्वगिरौ वा पद्मरागः शोणरत्नम् प्रकटीकृतः अभिव्यञ्जितो नयनयोः शीतलः शिशिरः स्वभावो येन कुङ्कुमेन काश्मीरजन्मना कृतोऽङ्गरागो विलेपनं येन तादृश नलिनी-जनस्य पद्मिनीवृन्दस्य वल्लभः प्रियः देवः सूर्यः कथम् उन्मीलित एव उदित एव । समासोक्तिरलङ्कार । आर्या वृत्तम् ॥ ७७ ॥ **रामः । तरलेति** । तरलतराणामतिचञ्चलानां तरङ्गाणां वीचीनां भङ्गस्य कौटिल्यस्य हेलाऽथवा भङ्गः कौटिल्यमेव हेला यस्यां तादृशी, बहलविलासैर्विलोला चञ्चला हंस-

१. मालागुञ्जितैर्मञ्जु शब्दा जनयति मुहुर्मुहुरुच्चैः कामिनां कामिनीवेति पाठः ।

अमरपुरतरङ्गिणीयमम्बा
सुरनरमङ्गलकारिणी न दूरे ॥ ८८ ॥

( सीता सहर्षं तदेव पठति संस्कृतं प्राकृतं च । )

**रामः**—( सहर्षम् । ) वत्स लक्ष्मण, इयमदूरे रघुकुलमङ्गलाङ्कुरप्ररोहकेदारधरणीतरङ्गिणी सरयूः । इयं च सरयूतरङ्गशीकरशीतलीकृतपरिसरा नगरीसीमन्तमणिरयोध्या ।

**लक्ष्मणः**—( सहर्षम् । ) अयमसौ भरतानुयानस्त्वदभिषेककृतमतिर्भगवानरुन्धतीपतिः ।

दिलीपकुलमाणिक्यं सकलाशाप्र[1]काशकम् ।
आविर्भवन्तं भास्वन्त भवन्तं च[2] प्रतीक्षते ॥ ८९ ॥

तेन पुष्पकादवतरामः ।

**रामः**—वत्स, प्रतीक्षस्वेहैव तावत्सुलभसकलमण्डलालोकमाखण्डलाशामण्डनं भगवन्तं चण्डमरीचिं नमस्यामः । ( अञ्जलिं बद्ध्वा । )

---

माला यस्यां तादृशी सुरनराणां देवमनुष्याणां मङ्गलकारिणी श्रेयो विधात्री अम्बा मातृरूपा इयममरपुरतरङ्गिणी स्वर्धुनी न दूरे निकट एव तिष्ठतीति शेषः । छेकवृत्त्यनुप्रासावलङ्कारौ । पुष्पिताग्रा वृत्तम् ॥ ८८ ॥ **रामः** । रघुकुलस्य मङ्गलाङ्कुरप्ररोहे कल्याणाङ्कुरोदये केदारधरणी क्षेत्रभूमिः तरङ्गिणी नदी । परिसरः पर्यन्तभूः । नगरीणां पुरीणां सीमन्तमणिः शिरोरत्नमित्यर्थ । **लक्ष्मणः** । अरुन्धतीपतिर्वसिष्ठः त्वदभिषेके तव राज्याभिषेके कृता मतिर्येन तादृशः । **दिलीपेति** । दिलीपकुलस्य दिलीपाख्यदशरथपूर्वजस्य कुले माणिक्यं, सकलाशानां सर्वदिशां प्रकाशकम्, अन्यत्र सकलानां सर्वजनानां आशानां मनोरथानां प्रकाशकं समुद्भासकं तन्मनोरथपूरणादिति भावः । आविर्भवन्तं प्रादुर्भवन्तं भास्वन्तं सूर्यं कान्तिमन्तं भवन्तं च प्रतीक्षेत परिपालयति । वृत्त्यनुप्रासश्लेषालङ्कारौ ॥ ८९ ॥ **रामः** । प्रतीक्षस्व प्रतिपालय । सुलभः सुप्रापः सकलमण्डलस्य निखिलबिम्बस्यालोको दर्शनं यस्य तादृशं आखण्डलाशामण्डनं प्राचीभूषणं चण्डमरीचिम् सूर्यं नमस्यामः प्रणमामः ( नमोवरिवश्चित्रङः क्यजिति

---

१. विकासेति पाठः । २. समिति पा० ।

प्राचीकुङ्कुमतिलकं पूर्वाचलशेखरैकमाणिक्यम् ।
त्रिभुवनगृहैकदीपं वन्दे लोकैकलोचनं देवम् ॥ ९० ॥

( नेपथ्ये । )

अये वत्स रामभद्र ।

रामः—अहो अद्भुतम् ।

विकासयन्ती नितरां पद्मानीव मनांसि नः ।
प्रभेव भारती काऽपि भानुबिम्बाद्विजृम्भते ॥ ९१ ॥

( नेपथ्ये । )

यशःपूरं दूरं तनु सुतनुनेत्रोत्पलवनी-
तमस्तन्द्रा चण्डातप तप सहस्राणि शरदाम् ।
इय चास्तां युष्मद्गुणकथनपीयूषपटल-
श्रितोत्सङ्गा नन्दत्सुरनरभुजङ्गा त्रिजगती ॥ ९२ ॥

रामः—अनुगृहीतोऽस्मि ।

( नेपथ्ये । )

अन्यच्च ते किमाशास्महे ।

सुग्रीवः—अये तात दिनकर, परिपूर्णमनोरथ एव रामभद्रः । अनेन हि

---

त्यच्) **प्राचीति** । प्राच्याः पूर्वदिशः कुङ्कुमतिलकं काश्मीरजविशेषकं पूर्वाचलशेखरस्योदयगिरिभूषणस्यैकमद्वितीयं माणिक्यं रत्नं त्रिभुवनगृहस्यैकदीपं लोकानां जनानां एकं मुख्यं लोचनं नेत्रं देवं भास्करमित्यर्थः । वन्दे । मालारूपकालङ्कारः । गीतिर्वृत्तम् ॥९०॥ **रामः । विकासयन्तीति** । पद्मानि कमलानीव नो मनांसि नितरामत्यन्तं विकासयन्ती प्रभेव कान्तिरिव कापि अद्भुता भारती वाणी भानुबिम्बात्सूर्यमण्डलाद्विजृम्भते आविर्भवति । अहो अद्भुतमित्यत्र ( ओदिति प्रगृह्यसञ्ज्ञया प्रकृतिभावः) उपमालङ्कारः ॥९१॥ **( नेपथ्ये ) यश इति**। युष्माकं गुणकथनं गुणवर्णनमेव पीयूषपटलं सुधासन्दोहस्तेन श्रित उत्सङ्गोन्तःप्रदेशो यस्यास्तथाविधा त्रिजगती त्रैलोक्यं,शेषोर्थश्चतुर्थाङ्के अष्टाचत्वारिंशत्तम

प्राप्ता निर्भरमुन्नतिर्निजगुणैराज्ञा पितुः पालिता
सुग्रीवश्च बिभीषणश्च परमां राज्यश्रियं प्रापितौ ।
संग्रामे दशकन्धरः सुररिपुर्नीतो यशःशेषतां
दृष्टो बन्धुजनश्च हर्षविगलद्बाष्पोल्लसल्लोचनः ॥ ९३ ॥

तथापीदमस्तु ।

आबाल्याद्वदनाम्बुजे तनुभृतां सारस्वतं जृम्भतां
देवे कौस्तुभधाम्नि चन्द्रमुकुटेऽद्वैता मतिः खेलतु ।
वाग्देव्या सह मुक्तवैशसरसा देवी च दीव्यादियं
शेषस्येव फणाञ्चले वसुमती लक्ष्मीः सतां सद्मसु ॥ ९४ ॥

**रामः**—तदागच्छत । पुष्पकादवतीर्य गुरुं बन्धुजनं पौरांश्चानन्दयामः ।

( इति सर्वे पुष्पकादवतरन्ति । )

जायन्तामविरामरामचरितक्रीडाभिरामाः सता-
मुन्मीलन्नवमालिकाविरचितस्रग्दामरम्या गिरः ।

---

पद्ये द्रष्टव्यः । रूपकयथासङ्ख्यालङ्कारौ । शिखरिणी वृत्तम् ॥ ९२ ॥ **प्राप्तेति** । अनेन रामेणेति पदं सर्वत्र सम्बध्यते, निजगुणैः स्वीयौदार्यपितृभक्त्यादिगुणैर्निर्भरमतिमात्र यथा तथा उन्नतिरुत्कर्षः प्राप्ता, पितुर्दशरथस्याज्ञा चतुर्दशवर्षारण्यवासलक्षणा पालिता रक्षिता, सुग्रीवो बिभीषणश्च परमामुत्कृष्टां राज्यश्रियं प्रापितौ, सुररिपुः देवशत्रुर्दशकन्धरो रावणः संग्रामे युद्धे यशःशेषतां नीतः प्रापित. युद्धे हत इति भावः । हर्षेण विलगद्भिर्बाष्पैरुल्लसन्ति शोभमानानि लोचनानि यस्य तादृशो बन्धुजनो बान्धवगणश्च दृष्टोऽवलोकितः । एतेन परिपूर्णकामत्वं सूचितम् । कारकदीपकमलङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९३ ॥ **आबाल्यादिति** । तनुभृतां शरीरिणां वदनाम्बुजे मुखकमले आबाल्याद्बाल्यमारभ्य सरस्वत्या वाग्देव्या इदं सारस्वतं ( तस्येदमित्यण ) वेदशास्त्रादिकमित्यर्थः जृम्भतां विलसतु । कौस्तुभधाम्नि कौस्तुभाश्रये कौस्तुभस्य धाम तेजो यस्मिन्निति वा तस्मिन् विष्णौ चन्द्रमुकुटे शङ्करे च देवे अद्वैता मतिरभेदबुद्धिः खेलतु क्रीडतु, इयं लक्ष्मीर्देवी वाग्देव्या सरस्वत्या सह मुक्तो वैशसरसो मात्सर्यासक्तिर्यया तादृशी सती शेषस्य फणाञ्चले फणाग्रे वसुमतीव वसुन्धरेव सतां सद्मसु गृहेषु दीव्यात्क्रीडयात् । उपमालङ्कारः । शार्दूलविक्रीडितं वृत्तम् ॥ ९४ ॥ **जायन्तामिति** । उन्मीलन्तीभिर्विकसन्तीभिः नवमालिकाभिस्तदाख्यपुष्पैर्विरचिता ग्रथिता स्रग्दामेव मालाबन्ध

---

१. दृष्ट इति पाठः । २. आबाल्यादिति पाठः । ३ फणाञ्चलेषु सततमिति पाठः ।

याः कण्ठे विनिवेश्य[1] पेशलधियो रोमाञ्चलीलाञ्चिताः
कान्ताबाहुलताविलासमहिमाश्लेषांस्तृणं मन्वते ॥ ९५ ॥

( इति निष्क्रान्ताः सर्वे । )

**इति सप्तमोऽङ्कः ।**

## समाप्तोऽयं ग्रन्थः ।

---

इव रम्याः हृद्याः सतां गिरः अविराममनवरतं रामस्य चरितक्रीडयाऽभिरामाः हृद्या जायन्ताम् । या गिरः पेशलधियः साधुमतयः कण्ठे विनिवेश्य स्थापयित्वा रोमाञ्चलीलाञ्चिताः पुलकोद्गमाङ्किताः सन्तः कान्ताबाहुलतानां विलासमहिमाश्लेषान् विभ्रमगौरवपरिरम्भान् तृणं मन्वते तृणतुल्यं गणयन्तीत्यर्थः । उपमाप्रतीपालङ्कारौ । शार्दूलविक्रीडितं वृत्तम् ॥ ९५ ॥

श्रीमानगस्त्य इव दक्षिणदिग्ललाममासन्ननन्तगुरवः प्रथितोरुविद्याः ।
तद्भागिनेयपदवेङ्कटशर्मणेयं विद्वन्मनःसुखजनिर्विवृतिः कृताऽस्ति ॥ १ ॥

सरसा दृष्टिपथमिता स्याद्गूढार्थप्रकाशिका टीका ।
राघवयशःसुविमला गङ्गेव ग्रन्थिभेदनाय सताम् ॥ २ ॥

स्तम्भात्प्रभूय निजभक्तजनानुकम्पी यो वज्रसारनखरैर्निजघान दैत्यम् ।
ब्रह्मेशशक्रनुतपूर्णगुणैकदेहः प्रीतोऽमुया भवतु देववरो नृसिंहः ॥ ३ ॥

याचे बुधानिदमहं विनयेन शश्वद्व्याकुर्वतः स्खलनमस्ति यदत्र मत्तः ।
तच्छोध्यतां रसनिषेवणतः पुरेव लोके यथा कतकसद्रजसाऽऽविलाम्भः॥ ४ ॥

विपक्षबलकक्षधक्सुजनकैरवेन्दुः श्रिया
सभाजयति यो गणं श्रुतवतां यथा भोजराट् ।
अमेयविभवा वटोदरपुरी च राजन्वती
यतः, प्रथितकीर्तिमान्विजयते सयाजिप्रभुः ॥ ५ ॥

शरेन्दुवसुभूशाके वत्सरे विजयाऽभिधे ।
माघशुक्लतृतीयस्यां गुरौ टीका समापिता ॥ ६ ॥

**॥ समाप्तोऽयं ग्रन्थः ॥**

---

१. कण्ठेऽपि निवेश्येति पाठः ।

# प्रसन्नराघवम् ।

## शुद्धिपत्रम् ।

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| २ | २७ | मुव. | भुवः |
| ५ | २३ | खेलाविलासे | खेलृ चलने. |
| ११ | २१ | वगमेत्यन्त | यगम इत्यन्तं |
| १२ | २४ | त्युपमितसमास | न्युपमानपूर्वपदो बहुव्रीहि |
| १३ | ४ | वर्मेतरांशुरिव | वर्मेतरांशुमिव |
| | २५ | स इव | तमिव |
| १४ | १४ | अभिनय | नटाभिनय |
| १६ | १५ | निष्क्रमरवेति | निष्क्रमस्वेति |
| ,, | २८ | प्रसङ्ग | प्रसङ्गे |
| १७ | ६ | नामोदते | नो मोदते |
| १८ | १२ | ,, | ,, |
| २० | ३ | मधुरभाव | मधरभावं |
| २५ | २२ | ०दिकर्ता भासस्तन्नामकः कविर्हासः कर्णपूरः कर्ण-भूषणम्, हास्यं | ०दिकर्ता कर्णपूर. कर्णभूषणम्, भासस्तन्नामककविः हास. हास्यम् । |
| २६ | ११ | निष्कान्तौ | निष्क्रान्तौ |
| २९ | २४ | रूपकपरिकरालङ्कारौ | परिकरालङ्कार. |
| २९ | २५ | साभि०ङ्कर. | विशेषणैर्यत्साकूतैरुक्तिः परिक्र रस्तु स इति लक्षणात् |
| ३१ | ११ | काष्ठभेधकः | काष्ठभेदक· |
| ३४ | ९ | रोमाञ्चः ( रोमाञ्चाः | रोमाञ्चाः ( रोमाञ्चः |
| ३६ | ६ | रणामहार्णं | रणमहार्णं |
| ३६ | १९ | सदृशमुच्चितं (समं वा | सदृशमुच्छ्रितं समं वा |
| ३८ | १३ | परेष्विति | परेष्विति |
| ४१ | १० | कन्यारन्तं | कन्यारत्नं |
| ,, | १६ | संवरणीय । गोपनीयं | संवरणीयं गोपनीयं |
| ४२ | ४ | प्रकटयन्ति | प्रकटयन्ति |

| पृष्ठम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २१ | बहुभाषण | बहुभाषितां |
| ,, | २७ | ति भिन्न | नेति भिन्न |
| ४३ | ५ | रम्या | रम्या |
| ४६ | २० | विध्यलङ्कृति | विध्यलङ्कृति |
| ४७ | १२ | लिख'त | लिखति |
| ४७ | १५ | द्वितीया | द्वितीयया |
| ४८ | १ | ओसर'द | ओसरदि |
| ५१ | १३ | आयतु | आयतां |
| ६० | २० | मित्यर्थः । यस्मि | मित्यर्थः यस्मि. |
| ,, | २३ | तदेत्यध्याहारोऽहमित्यपि | तदप्यहमित्यध्याहार. |
| ७१ | १२ | चरणन्मणि | चरणरणन्मणि |
| ७२ | २ | भार्तृदारिके | भर्तृदारिके |
| ७२ | ५ | रेखा– | रेखा |
| ७२ | १६ | रतया | स्तया |
| ,, | २४ | हरतदीप | हस्तदीप |
| ७३ | १९ | पराभुता | पराभूता |
| ७५ | १८ | राजहंस | राजा हस |
| ७६ | २५ | पश्यम्त्या | पश्यन्त्या |
| ७८ | १४ | यत्किलेयं | यत्किलेयं |
| ,, | १६ | श्लोकश्छन्दः | श्लोकश्छन्दः |
| ८४ | ८ | भार्तृदारिके | भर्तृदारिके |
| ८५ | ११ | आर्यावृत्तम् ॥२७ | ॥ २७ ॥ |
| ८७ | १३ | कन्दरायां | कन्दरायाः |
| ,, | १९ | कन्दरायां गुहायां | कन्दराया गुहाया |
| ९० | २४ | । तनुते | न तनुते |
| ९१ | ३० | मात्रच्प्रत्ययः | प्रमाणे मात्रच्प्रत्ययः |
| ९४ | २५ | जल्पमा | जल्प मा |
| १०० | २७ | अधिपते | अधिपते इत्यर्थ. |
| १०२ | २४ | नीतिमार्गे | योगमार्गे . |
| १०३ | १४ | पङ्कतन्नाम | पङ्कस्तन्नाम |
| १०४ | ११ | पुरुहुत | पुरुहूत |
| १०५ | ४ | भगवन् | भगवन् |
| १०५ | २२ | श्रेष्ठः | श्रेष्ठा |

| पृष्टम् | पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ,, | २३ | प्रेक्षणमेव तेषमाभ | प्रेक्षणं तद्विषये ये उत्सवा. तषाम |
| १०७ | १ | भ्नातरौ | भ्रातरौ |
| १०७ | १४ | स्वजनभावे | स्वजनभावं |
| ,, | २६ | यथो | यथा |
| १०८ | २ | शीतकर. । शकर | शीतकर· शकर |
| १०९ | | पर्यायोक्ति | पर्यायोक्त |
| ११० | ८ | दोमण्डले | दोर्मण्डले |
| ,, | २५ | संहारश्चापधा | सहारे चापधा |
| ,, | २६ | सहोक्ती | सहोक्ति |
| १११ | २२ | हेमचन्द्र | हेमचन्द्रः |
| ११२ | २२ | तन्नाम | तन्नामा |
| ,, | २४ | च | त्वं |
| ११३ | १४ | अनेनेतर भाषणेन | अनेन विश्वामित्रेण |
| ११३ | १० | त्तदुर्विगाह | त्तदुर्विगाह |
| ,, | १७ | वाग्विलासेन | वाग्विलासेन |
| ,, | २३ | संजात– | संजातः |
| ११४ | ७ | केमल | केवल |
| ११५ | ५ | रक्षणक्रिया– | रक्षणक्रिया |
| ११६ | २६ | रमिव स्या | रमिव अति लघुरिति -वनि स्या |
| ,, | ३० | प्रकाशमिति | प्रकाशमिति । |
| ११७ | २८ | मद्यापिसेवते | मद्यापि य. सेवते |
| ११८ | १७ | जीवितकालं | जीवितं |
| ,, | २५ | हेस्वमिति | स्वमिति |
| ,, | २८ | सीतवै | सीतैव |
| ११९ | १८ | । नान्येन | नान्येन |
| १२० | १ | देषामेव | ह्तेषामेव |
| १२० | २९ | ल्लसति | उल्लसति |
| १२१ | २ | चापकट | चापकपट |
| १२२ | ७ | टाङ्कारः | टङ्कारः |
| ,, | ११ | त्रैलौक्यं | त्रैलोक्य |
| ,, | ३० | चारौ मनोहरे | अथवा चारौ मनोहरे |
| १२३ | १३ | भव्यचण्डी | भव्यचण्डी |
| ,, | १६ | टंकारः | टणत्कारः |

